# विज्ञापनम् ।

---

स खलु शाब्दिकशिरोमणिर्वोपदेवः कस्मिन् समये जन्मना कतमं देशमलञ्चकार्षीदिति यथावदवधारयितुं न शक्यते। परन्तु पुरातत्त्वान्वेषिभिः कतिपयैः कृतिभिः एवमवगतम् । यथा— पञ्चवसुभरेन्दुमे, शकसम्वत्सरे अर्थात् (११८२ शकाब्दे) द्वित्रादिवत्सरन्यूनाधिक्येन स वोपदेवः कुत्रचित् प्रदेशे भिषग्वरसार्थिन केशवनाम्नो विप्राल्लब्धजन्मा विदुषो धनेश्वरमिश्रादधिगतविद्यश्च बभूव। अथ दक्षिणापथवर्त्तिन्याः साम्प्रत (दौलताबाद) इति प्रसिद्धाया देवगिरिराजधान्या अधिपतेर्महादेवस्य सभापण्डितपदमास्थाय तत्र निवसति स्म। चतुर्वर्गचिन्तामणिनिबन्धकारो हेमाद्रिरपि तस्यैव राज्ञः समस्तकरणाधीश्वरः प्रधानामात्य आसीत्। तेन सह वोपदेवस्य परं सौहार्दं समजनि। तत एव तेन हेमाद्रिणा प्रणोदितः स हरिलीलाख्यं मुक्ताफलनामधेयञ्च भागवतव्याख्यानं निबबन्ध। तत्र हरिलीलाटीकायां मन्त्रिहेमाद्रितुष्टये इति, मुक्ताफलग्रन्थे च 'विद्वद्धनेशशिष्येण भिषक्केशवसूनुना। हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरदिति" च निर्देशस्तयोरन्योन्यसौहार्दं सूचयति।

अस्य कविकल्पद्रुमस्योपसंहारे केनचित् वोपदेवशिष्येण—

'यस्तीर्णं शब्दपाथोनिधिमखिलमिमं गोष्पदं वा सुराद्रौ
शिष्योऽकार्षीद्धनेशः कविकुलतिलकः कैशविर्वोपदेवः ।' इति यदुक्तं

तत्र छन्दोऽनुरोधात् सुराद्रिशब्दो देवगिरिपर्य्यायत्वेन प्रयुक्त इति मन्यामहे। यत्तु टीकाकारेण 'सुराद्रौ सुमेरुपर्व्वते, स्थिरत्वात् सुमेरुगतिं सम्भवतो'ति व्याख्यातं तन्न रुचिकरमिति।

सोऽयं वोपदेवः स्वर्गमिन्द्रचन्द्राद्यापिशलिपाणिन्यादिकमतसमुद्रमभिमथ्य मध्यात् महार्घमणिनिचयवदुपादेयवचनजातमाहृत्य तदायासमङ्गीकर्त्तुमशक्तानां सुखेप्सतो व्याकरणबोधलिप्सूनामन्तेवासिनां तदुपहारेण महोपकारमकरोत्। तस्यैवाचार्य्यचक्रचूडामणेर्वोपदेवस्यायं कृतिः कविकल्पद्रुमो नाम धातुपाठः। अयञ्च कवीनामभीष्टफलदातृतया कविकल्पद्रुम इत्यन्वर्थनामधेयो धातुपाठः स्वस्य

याद्दगुपयोगित्वेन सकलवैयाकरणसम्प्रदायेषु परमसमादरमर्हति, तत् सर्व्वं ग्रन्थादौ ग्रन्थकारेणैव यथावत् परिचायितम्। तत्र च कस्यचिद्धातोराख्याते कृदन्ते वा धात्वन्तरापेक्षया ये केचन कार्य्यभेदा भवन्ति, तान् सर्व्वान् निरवशेषमावेदयितुं तेन धातुना सह यदनुबन्धवर्णयोजनं कृतं, तेनैकेन ग्रन्थकृत्-कौशलेनायं धातुपाठ सजातीयान् सर्व्वान् जिगाय। अपराणि चात्र ग्रन्थे यानि ग्रन्थकारपाठ्यानि सन्ति, तानि सर्व्वाण्यस्य प्रारम्भे परिभाषायां बोद्धव्यानि। इह खलु धातुपाठे ये च धातवो मङ्गलादिभिर्नैस्वीक्रियन्ते तानपहाय चतुःपञ्चाशदधिक-सप्तदशशतसंख्यका (१७५४) धातव पठिता। इयञ्च संख्या गणनया नोपलभ्यते। यत आचार्य्येण प्रतिवर्गं या संख्यानिर्द्दिष्टा तदनुसारेण षट्पञ्चाशदधिकसप्तदशशतसंख्यका (१७५६) धातवो भवन्ति। तत्रापि कान्त-ठान्त-लान्तवर्गेषु निरूपितसंख्यानामेकैकेन न्यूनत्वमस्ति। अतोऽत्र यत्तत्त्वं तत् सुधीभिश्चिन्त्यम्।

इत्थं महृदयकविकुलपादसेव्योऽयं कविकल्पद्रुम आलवालेनेव महामहोपाध्यायदुर्गादासविद्यावागीशविरचितधातुदीपिका समाख्यया टीकया सनाथीकृत्य मया मुद्रितः। टीकाकारोऽयं दुर्गादासः शकनरपते पञ्चदशशताब्दी प्रारम्भे नवद्वीपनगरे जातः। वासुदेवसार्व्वभौमोऽस्य पिता। तत्कृतेयं टीका स्वोपजीव्यं कविकल्पद्रुमं यथाविधि परिषेवनेन प्रसन्नीकुर्व्वन् धातुपाठेषु विभिन्नवर्त्मना बहुवैयाकरणिकानां नानामतपरिज्ञानमजीजनत्। यद्यप्येषा टीका सुविदितशब्दकल्पद्रुमाभिधाने तत्तद्धातुप्रसङ्गे प्रायशः सङ्गृहीता, तथापि तन्मात्रावलम्बनेन मूलस्य निरवशेषव्याख्यानं न सम्भवतीत्यपराण्यपि यावदि-खण्डिताखण्डितानि टीकादर्शपुस्तकानि सङ्गृह्य मया यथामति परिशोधितेयं टीका। अत्र च टीकायाः बहुषु भागेषु यानि व्याख्यानपाठान्तरमतान्तरोदाहरणादीनि मया योजितानि, तानि मूलतः पार्थक्यज्ञापनार्थं कुत्रचित् क्षुद्राक्षरेण, पत्रांश, कुत्र वा इत्थं ( ) बन्धनीमध्ये सन्निवेशितानि। कृताद्युदाहरणेषु च सङ्ख्यापात कृत, स च राजश्रीशौरीन्द्रमोहनठाकुरसंगृहीतकविरहस्यश्लोकसंख्यानुसारेणैव। अन्येषु टीकाकारदर्शितेषु मद्दर्शितेषु च दृष्टान्तेषु तत्तद्-ग्रन्थादिकमनुसन्धाय यथालाभं सर्गश्लोकादिसंख्या दर्शिता।

इह मूलग्रन्थे आचार्य्येण ककारान्तादिषु सर्व्वेषु वर्गेषु सजातीयधातून् समसंख्यीकृत्य प्रतिवर्गं धातुसंख्या निरूपिता। तत्सङ्ख्याक्रमभाव मयापि

द्विवाद्याः सजातीया धातव एकयैव संख्यया निर्द्दिष्टाः। एतेनापि क्वचित् क्वचित् संख्यासङ्गतिर्न जाता, तत् सर्व्वं तत्रैव टीकायां विवृतमस्ति।

यद्यप्येवं बहुलमायासमङ्गीकृत्य सर्व्वथास्य सौष्ठवसम्पादनाय यथामति कृतयत्नोऽहं, तथापि प्रमादस्खलनशङ्कितः प्रतिक्षणमाकुलीभवामि। अत साम्प्रतं सहृदयपाठकवृन्दं सविनयमिदमभ्यर्थये, यत्रास्य स्खलितं दृश्येत तत् कृपया विज्ञापयितव्योऽहं भवद्भिरिति।

शकाब्दाः १८१८।
फाल्गुनस्य षष्ठदिवसे

श्रीशिवनारायण शर्म्मा
संस्कृत कलेज, कलिकाता।

# सटीककविकल्पद्रुमः।

नमो गणेशाय।

शब्दाकरकरग्राममर्थमण्डलमण्डलम्।
ज्ञानात्मानमनाद्यन्तमादित्यं तमुपास्महे॥

टीका। नत्वा श्रीशगिरीशौ श्रीदुर्गादासशर्म्मणा क्रियते।
कविकल्पद्रुमटीका विशदतरा धातुदीपिका नाम॥
कति कति सन्त्यपि सन्तः सन्तोषं नोभजन्त इतरगुणे।
ये परगुणलवलुब्धा दुर्गादासप्रणमो भवेत्तेभ्यः॥
सुखाय छात्रवर्गाणामत्रेति परिभाष्यते।
अन्तःस्थाः सुयवरला अच्चा इत्यादय स्वराः।
उष्माणः स्युः शसहा अन्त्यात् प्रागुपधा भवेत्॥

श्रीवोपदेवो धातुपाठं चिकीर्षुः प्रारिप्सितपरिसमाप्तये शिष्टाचारप्राप्तमङ्गलमाचरति शब्दाकरेत्यादि। तं प्रसिद्धं आदित्यमुपास्महे वयमिति शेषः। तच्छब्दोऽत्र प्रसिद्धार्थत्वात् यच्छब्दं नापेक्षते। तथाच—"तं कैशपाश प्रसमीक्ष्य कुर्य्युर्वालप्रियत्व-शिथिल चमर्य्यः" इति कालिदासः। (१) ग्रन्थोत्कर्षस्थापनार्थमादित्यस्य ग्रन्थस्वरूपता प्रतिपादयन् विशेषणान्याह शब्दाकरेत्यादि। शब्दानामाकर उत्पत्तिस्थानमाकाशस्तत्र करग्राम. किरणसमूहो यस्य

(१) न जाने स प्रधानो मे मूरहस्तो सदामद इत्यत्र स प्रसिद्ध इति चतुर्भुज। इत्यधिक पाठ।

तं। अर्थानां प्रयोजनानां मण्डलाय समूहाय (निखिलप्रयोजनानि साधयितुमित्यर्थः) मण्डलं चक्रवाड़ं "स्यान्मण्डलं द्वादशराजके च देशे समूहेऽपि च चक्रवाड़े" इति विश्वः। (उदय इति यावत्) यस्य तं। तथाच—"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति, सूर्य्योदयं विना नैव स्नानदानादिकाः क्रिया" इति च स्मृतेः। धानं धाता यस्य तं। न विद्येते आद्यन्तौ यस्य तं नित्यमित्यर्थः। पक्षे तं प्रसिद्धं पूर्व्वतरधातुग्रन्थं उपास्महे। आदित्यं सूर्य्यमिवेति लुप्तोपमा। "अयमुदयति मुद्राभञ्जनः पद्मिनीना" (१) मितिवदसाधारणविशेषणेनैव विशेष्योपस्थितिर्भवतीति तादृशविशेषणान्याह शब्दाकरेत्यादि। शब्दानामाकरा उत्पत्तिस्थानानि धातव इति यावत्, त एव करग्रामःकिरणसमूह इव यस्य तं। अर्थानां (अभिधेयानां) मण्डलं मण्डलमिव यस्य तं। ध्यायतेऽनेनेति ध्यानं ध्यानसाधनं (धातुरूपं) तदेवात्मा यस्य तं। अनाद्यन्तमिति वेदाङ्गत्वान्नित्यमित्यर्थः।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ (२)

टीका। सर्व्वेषां (स्वपरशिष्याणां) मङ्गलार्थमादिशाब्दिकानां मतमालोच्य क्रियते इति वक्तव्ये आदौ जयशब्दपूर्व्वकं तन्नामानि

(१) अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनाली बालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

(२) काशकृत्स्नश्च आपिशलिश्च तौ। पाणिनिश्च अमरश्च जैनेन्द्रश्च ते।

मदह्लादि इन्द्र इत्यादि। एते अष्ट आदिशाब्दिका जयन्ति। अत्र जेसुवन्त्वोस्तिवन्ती इत्यनुशासनादन्तुस्थानेऽन्तिः। जययुक्ता भवन्त्वित्यर्थः।

मतानि तेषामालोक्य सर्व्वसाधारणः स्फुटः।
धातुपाठः स्वदाद्याद्यक्रमादन्तादिमक्रमः।
कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च।
धातवः पठिताः पाठस्त्वलोकागमस्थिताः॥

टीका। अथ ग्रन्थस्वरूपं निरूपयति मतानीति। तेषामष्टानामादिशाब्दिकानां मतानि ग्रन्थानालोक्य पद्यैः श्लोकैः करणैः कविकल्पद्रुमो नाम धातुपाठो निष्पाद्यते क्रियते मयेति शेषः। सर्व्वेषां प्रवृत्त्यर्थं विशेषणान्याह सर्व्वसाधारण इत्यादि। सर्व्वेषां साधारणः समानः सर्व्वसम्मतत्वात्। सर्व्वशब्दस्त्विह बहुवादिपरः तेन रुजक्षतावित्यादीनां केनचिदमन्यमानानामपि बहुवादिसम्मतत्वादिहोपन्यासः, क्रुङ्गत्यामित्यादीनाञ्च केनचिन्मन्यमानानामपि बहुवाद्यसम्मतत्वात्तद्वर्जनमिति। स्फुटो व्यक्तः। धातवः पठ्यन्ते अस्मिन्निति धातुपाठो ग्रन्थः। अत् अकार आदौ येषां (धातूनां) ते अदाद्याः, ते (अकारादयो धातवः) आद्याः (आदिपठिताः) यस्मिन् (क्रमे) सः अदाद्याद्यः, स चासौ क्रमश्चेति अदाद्याद्यक्रमः, सुष्ठु अदाद्याद्यक्रमो यस्मिन् (अदन्तादिमक्रमे) स स्वदाद्याद्यक्रमः, अत् अन्तो येषां (धातूनां) ते अदन्ताः, ते (अकारान्ता धातवः) आदिमा आद्या यस्मिन् (क्रमे) सः अदन्तादिमः, स चासौ क्रमश्चेति अदन्तादिमक्रमः, स्वदाद्याद्यक्रमः अदन्तादिमक्रमो यस्मिन् (धातुपाठे) स तथा। अकाराद्यादिधातुक्रमेण अका-

चौगमृच्छ गत्यामित्यत्र इमोऽभावः ण्यां ङप्रत्ययश्चानुमन्थोदितः। भ्वादित्वं परस्मैपदञ्च विशेषविधानाभावात् गयोदितमिति।

**परोऽनुबन्धः पूर्व्वेषामेकवाक्यस्थधातुषु।**
**नाम्रेड़ितानुबन्धेषु न परेषाञ्च मध्यमः॥**

टीका। अथ परिभाषा भाष्यते पर इति। वाक्यमर्थकथनपर्य्यन्तम्। एकवाक्यस्थितधातुषु परः परधातुस्थोऽनुबन्धः पूर्व्वतरेण सम्बन्धाभावेऽपि पूर्व्वेषां सर्व्वेषामित्यर्थः। यथा टीक टिक् टौक तौक तिक्षङ् गत्यामित्यत्र ङकारङकारौ सर्व्वेषाम्। एवमङ्कान्तक पदे लक्षणेत्यत्र अङ्कयतेः परस्थितौ तकारककारावङ्कयतेरप्यनुबन्धाविति। अस्यापवादमाह नाम्रेडितेति। आम्रेडित द्विस्त्रिरुक्तमित्यमरः। पुनरुक्तैकानुबन्धेषु धातुषु नेयं व्यवस्था। तथाच क्षपल्क क्षपतञ् चान्तावित्यत्र तकारस्य पुनरुक्तत्वात् अकारो न पूर्व्वस्य। परिभाषान्तरमाह नेति। मध्यमो धातुद्वयमध्यवर्त्ती अनुबन्धो द्वाभ्यां सम्बद्धोऽपि न परस्य। यथा क्षपल्क क्षपतञ् चान्तावित्यत्र ककारो न परस्य (परवर्त्तिन उभयपदिनो क्षपधातोः ककारानुबन्धो नास्तीत्यर्थः)।

**तत्राकारः सुखार्थोऽथानिष्ठाभावादिकर्म्मवेट्।**
**इर्नुस्वानीरनिड्निष्ठ उः क्त्वावेडूस्तु वेट्क ऋः॥**
**चङ्यह्रस्वोऽथ ऋर्वा लृरङ्वानिवाय एः सिचि।**
**अट्वृद्धिरैर्यजादिः स्यादोर्निष्ठातन औरनिट्॥**
**कश्चुरादिः किस्तुवा गः क्रादि र्गिः प्वादिरप्यपूः।**
**स खादिर्घोरुदादिर्ङस्तङ्वान् कर्त्तरि आत्मने॥**

जोऽज्वलादो ञिरद्यन्तष्टुः साधुर्डुस्त्रिमग्युतः ।
णः फणादिस्त्वदन्तो दस्तनादिर्घुधादिकः ॥
नः स्वादिः पोऽसुचादिर्भः शमादिर्मो णिच्चिणमोः ।
दीर्घो वा णिचि ह्रस्वो मिर्वा दिवाद्यो युदादिकः ॥
लुः स्वपादिश्च लिह्वादिर्वोऽहृतादिः ष् तुदादिकः ।
शिः कुटादिश्च प् क्टदङ्वान् ज्योजज्वादी र वैदिकः ॥

[ तत्राकारः सुखार्थः ]

टीका। अनुबन्धफलान्याह। तत्र अकारः सुखार्थः। तत्र अनुबन्धेषु मध्ये अकारः (१) सुखार्थः सुखोच्चारणार्थः। यथा— भक्ष लक्ष क नाथृ इत्यादौ।

[ अथानिष्ठाभावादिकर्मवेट् ]

टीका। अथ आ निष्ठाभावादिकर्मवेट्। अथ आ आकारानुबन्धो धातुरित्यर्थः उपचारात् (२) एवमिकारादौ च बोध्यम्। निष्ठा क्तक्तवतू। निष्ठाया वाच्यत्वेन सम्बन्धिनी ये भावादिकर्मणी तयोर्वा इट् यस्मात् स तथा। आकारेतो धातोर्भावे आदिकर्मणि च विहितयोः क्तक्तवत्वोरिट् वा इत्यर्थः। यथा ञिमिदा स्नेहे (३) 'भावादिट्ठे वा' इति मिन्नं मेदितं तेन (४) प्रमिन्नः

(१) धातुनामन्ते प्रयुज्यमान अकारानुबन्ध इत्यर्थः।

(२) उपचारो लक्षणा।

(३) मिद् धातु। इट् य आ एते अनुबन्धाः। तेषु आकारानुबन्धस्य फलमत्र दर्शितम्।

(४) अत्र मिदधातोर्भावे क्त तेन नेट्।

प्रमेदितः सः ( १ )। भावादिकर्म्मणोरन्यत्र क्तक्तवतोरिम् नेति शेषः। यथा 'श्वीदित' इति भिन्नः भिन्नवान्।

[ इर्नुम्वान् ]

टीका। (इ नुम्वान् इति पदच्छेद, इकारानुबन्धधातूना-मन्त्याचः परो नकारागमो भवति)। यथावदिड्नुत्यभिवादयो'। 'ग्रतएवेदितोनुम्' इति वन्द्यते विष्णुः।• (अत्र प्रथम वद इति पठित्वा पश्चादिकारानुबन्धत्वान्नकारागमेन वन्द इत्येवं धातुः कृतः) नकारमध्यपाठेनैवेष्टसिद्धौ इदनुबन्धकरणं अगुणे नलोप-निषेधार्थम् ( २ )।

[ ईरनिड्निष्ठः ]

टीका। (ई अनिट्निष्ठ' इति सन्धिविच्छेदः) अनिट् निष्ठा यस्मात् स तथा। दीपीङ्यङ्क दीपने ( ३) 'नेम्डीश्वी'ति ( इम-निषेधे ) दीप्तः दीप्तवान्।

[ उः क्त्वावेट् ]

टीका। क्त्वा प्रत्ययस्य वा इट् यस्मात् स तथा। (उकारानु-बन्धधातुभ्यः क्त्वाचो विकल्पेनेम् भवतीत्यर्थः) यथा चमु भक्षे, 'पूक्लिशुदित' इति ( इमो विकल्पितत्वेन ) चमित्वा चान्त्वा।

---

(१) अत्र भिदधातोरादिकर्म्मणि आरम्भे अर्थे क्त तेन नेम्। स जन प्रभिन्न प्रभेदित इत्येह कर्त्तुमारब्धवानित्यर्थं।

(२) नेदितृपूजार्थाश्वोरिति।

(३) दीपधातु। ई ङ य ङ्क एते अनुबन्धा तेषु ईकारानुबन्धस्य फलमत्र दर्शितम्।

[ ऊस्तु वेट्कः ]

टीका । ( ऊः तु वेट्क', ऊकारानुबन्धो धातुः वा इट् यस्मात् स तथा ) सामान्यविधिना यस्य स्थाने नित्यं इम् विहितः ऊदितः परस्य तस्य वा इम् इत्यर्थः । षिधू शिवे शास्त्रे, 'वेमद्दि-द्दि'ति असेधीत् असैत्सीत् ( १ ) ।

[ ऋटः चङ्यह्रस्वः ]

टीका । ऋट.चङि अह्रस्वः । चङि ञेः परे अङि परे नास्ति ह्रस्वो यस्य सोऽह्रस्वः ह्रस्वाभाववानित्यर्थः । ढौकृङ् गत्या ( इत्यस्मात् ञौ टीदिविभक्तौ ) 'ञाङ्युङः स्व' इत्यत्र ऋदिद्वर्ज्ज-नात् ( औकारस्य ह्रस्वाभावे ) अडुढौकत् ।

[ अथ ऋृर्वा ]

टीका । चङि अह्रस्व इत्यनुवर्त्तते । ( ॠकारानुबन्धधातुना ञेः परेऽङि परे वा ह्रस्वो न भवतीत्यर्थः ) कणॄ आर्त्तस्वरे, 'भ्राज-भ्रासेति' अचीकणत् अचकाणत् । येषां सप्तमस्वरानुबन्धः कैश्चित् पठ्यते कैश्चिन्न पठ्यते च तेषां ह्रस्वविकल्पज्ञापनार्थोयमनुबन्धः ।

[ ऌरङ्वान् ]

टीका । ( ऌकारानुबन्धधातुभ्यष्टीपे नित्यं ङोभवतीत्यर्थः ) औगमॢगत्या 'शासुलिघृदि'ति अगमत् ।

---

( १ ) असोऽरस्येमनौदित इति सामान्यविधिना अरस्य अस्य नित्यमिम् विहित । ऊदित परस्य तु तस्य वेमूदिदिति वेम् ।

[ इर्वा ]

टीका। ( इर् वा ) चङ्वानित्यनुवर्त्तते। ( येषां धातूनां इर् इत्यनुबन्धोऽस्ति तेभ्यश्चीपे विकल्पेन ङो भवतीत्यर्थः ) च्युतिर् चरणे (यासुलिङ्घुदिति सूत्रे) इरितस्तु वेति अच्युतत् अच्योतीत्।

[ अथ एः सिचि अवृद्धिः ]

टीका। (एः एकारानुबन्धोधातुः) सिचि—स्यां विहिते सौ। कटे रतौ इषि, ( इति कटधातोः ) 'हसादेः सेम' इत्यत्र एदि-दर्शनात् अकटीत्। ( स्यासिरित्यनेन विहिते सौ परे एकारानु-बन्धधातूनां 'हसादेः सेमोऽज्ञोरदि'दित्यत्र एदितो निषेधान्न-वृद्धिरित्यर्थः )।

[ ऐर्यजादिः स्यात् ]

टीका। ( ऐकारानुबन्धा धातवो यजादिगणे पठिताः, तेन व्यथग्रहेति ग्रहस्वपाद्योरिति च सूत्राभ्यां यथासम्भवं सेर्मूलस्य च निः स्यादित्यर्थः ) यजैञौ, 'व्यथग्रहे'ति इयाज, ( गीवजयजेति ष्णप्रत्यये ) ग्रहस्वपाद्योरिति ( सूजधातोर्ञौ कृते ) इज्या।

[ ओर्निष्ठातनः ]

टीका। निष्ठायास्तोनो यस्मात् स निष्ठातनः। (ओकारानु-बन्धधातुभ्यः क्तक्तवत्वोस्तकारस्य सुलाद्योदिदितिसूत्रेण नकारो भवतीत्यर्थः ) रुजो ओभङ्गे (१) सुलाद्योदिदिति रुग्नः रुग्नवान्।

---

(१) ओ ञ औ एते अनुबन्धाः। तेषु ओकारानुबन्धस्य फलमतदर्शितम्।

[ औरनिट् ]

टीका। (औकारानुबन्धधातुभ्यः सामान्यसूत्रेण विहित इट् न भवेदित्यर्थः)। औगमृच्छगत्यां, वधोरसेत्यत्र औदिद्वर्जनात् गन्ता। (१)

[ कश्चुरादिः ]

टीका। (कः ककारानुबन्धो धातुः) (२) गणक संख्याने, चुर्य्यो ञिर्वेति गणयति।

[ किस्तुवा ]

टीका। (किकारानुबन्धो धातुः) चुरादिर्वा। पक्षे गणान्तरनियमाभावात् सामान्यगणो भ्वादिरित्यर्थः। युजकि संयमे, योजयति योजति। 'चुर्य्यो ञिर्वा' इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् चुरादेर्ञिर्नित्यः चुराद्यन्तर्गणात् युजादेस्तु वा इति। यत्तु चुरधातोरपि किकारानुबन्धत्वं मुग्धबोधे चोरयति चोरतीत्युदाहरणञ्च तत् कदाचित् चुरादेर्ञेरनित्यत्वज्ञापनार्थम्। अतएव काव्यकामधेनौ (३) अकिकूलच्छापीत्यत्र स्फुटीकृतमिदं वोपदेवेन (४)।

---

(१) गमृलोपट्टौ, वधोरसेत्यत्र औदिद्वर्जनात् अथाद्धौदित्यपि क्वचित् पाठः।

(२) एते काद्योऽनुबन्धा गणपाठे बहविदकारान्ताः क्वचिच्च ऋदन्ताः पठिताः।

(३) काव्यकामधेनुर्नाम वोपदेवकृतकविकल्पद्रुमटीका।

(४) तद्यथा "अकिकूलच्छापि, कष्ट्र विकृपुस्तकरणं, ए, क—कङ्गयति कर्षं रञ्जः। वोपदेवपाठेऽपि ञेर्नित्यत्वात् कष्टङ्गोलोप रञ्जसामान्यो यगादौ अङ्गादौ इत्यादौ विहे इदित्वाच्चुरादेरनित्यत्वज्ञापनार्थं। तेन अङ्गीत्यपि स्यात्।

[ गः क्रादिः ]

टीका। (गः गकारानुबन्धो धातुः) डुक्रीञ्गद्रव्यपर्य्यये 'दिवसुतदे'ति (क्रादित्वात् श्ना प्रत्यये) क्रीणाति।

[ गिः प्वादिरपि ]

*टीका। (गिः गिकारानुबन्धो धातुः) अपिशब्दात् क्रादिश्च।* पूञ्गिशोधे 'प्वादेः ह्र' इति पुनाति।

[ अपूः ल्वादिः ]

टीका। पूवर्जितः स प्वादिर्ल्वादिश्च स्यात्। लूञ्गिच्छिदि, लुनाति। 'ल्वाद्योदि'दिति लूनः लूनवान्। 'कृगृज्ये'ति लूनिः।

[ घो रुदादिः ]

टीका। (घः घकारानुबन्धो धातुः) रुधिररुदरोदे 'रुद्रो-ऽयोरुत्स्वप्नेमि'ति रोदिति। 'रुदाद्यती'ति अरोदीत्।

[ ङस्तङ्वान् कर्त्तरि ]

टीका। (ङः ङकारानुबन्धो धातुः) कर्त्तरिवाच्ये तङ्वान् आत्मनेपदी। एधङद्धौ 'नवयः पमे' इति एधते।

[ ञात्मने ]

टीका। (ञकारानुबन्धो धातुः) तङ्वान् इत्यनुवर्त्तते।

---

तथाच—सिद्धे नित्यणिजन्तत्वाभिव्यञ्जने किताभिदित्। णिजनित्यत्वबोधार्थं न इष्टोऽनुम्विधिः कश्चित्। अस्यार्थः—कितां कानुबन्धधातूनां नित्यणिजन्तत्वाभिव्यञ्जनाभिव्यञ्जने नित्यनकारत्वे सिद्धे इदित् इदनुबन्धकरणं णिचोऽनित्यत्वबोधार्थम्। किन्तु अनुम्विधिर्नकाराभावः कश्चिदपि न इष्टः" इति। दुर्गादासोऽप्येवमपि वदति।

आत्मने आत्मार्थं, फलवति कर्त्तर्य्यात्मनेपदीत्यर्थः। अफलवति परस्मैपदीति शेषः। यजैञ्, यजते यजमानः, यजति याजकः। जिच्चा'न्नवशःपमे जित' इत्युभयपदप्राप्तौ 'जिञ्ज्ञान्तमिथे'त्यनेन नियम्यते। नियमश्च फलवत्कर्त्तर्य्येवात्मनेपदमिति चेत्तर्हि अफलवत्कर्त्तर्य्यात्मनेपदनिषेधे फलवत्कर्त्तरि परस्मैपदापत्तिः कथं न स्यात्। फलवत्कर्त्तर्य्यात्मनेपदमेवेति चेत् तर्हि फलवत्-कर्त्तरि परस्मैपदनिषेधे अफलवत्कर्त्तर्य्यात्मनेपदापत्तिः कथं न स्यादित्युभयथैव व्याघातः। वस्तुतस्तु उभयपदप्राप्तौ व्यवस्थेयं, फलवत्यात्मनेपदं अफलवति परस्मैपदमिति। एतच्च पाणिनेरनुरोधात्। तथाच बर्द्धमानः(१) "इति लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः। वेदवाक्येषु यद्यस्ति नियमः केन धार्य्यते। विशेषः पाणिनेरिष्टः सामान्यं सर्व्ववर्म्मणः। सामान्यमनुगृह्णाति तत्राचार्य्यपरम्परेति"। तेन "अकरोदचिरेश्वरः चितौ द्विषदारम्भफलानि भस्मसा"दिति। "तनोति शुभ्रं गुणसम्पदा यश"इत्यादौ फलवत्कर्त्तरि परस्मैपदम्। "फलं विश्वोपकाराय धत्ते पर्व्वणि पर्व्वणी"ति। "कमलवनोद्घाटनं कुर्व्वते ये" ये सूर्य्यरश्मय इत्यर्थः, इत्यादावफलवत्कर्त्तर्य्यात्मनेपदमिति। चुरादेस्तु स्वार्थविहितञेर्ञकारेण ञित्त्वेऽपि उभयपदं न स्यात्। अन्यथा स्पमञक्वितर्के इत्यादेर्ञानुबन्धो वृथा स्यात्। यत्तु धातुपारायणसुग्धबोधयो चोरयति चोरयते इत्युभयपदोदाहरणं तत् कदाचिन्मदाकविप्रयुक्तस्यात्मनेपदस्य समाधानार्थम्। यथा नैषधे "मालोकते यथेदानीं मामियं तेन तर्कये" इत्यत्र तर्कये इत्या-

(१) कातन्त्रविस्तारकृत् वर्द्धमानमिश्रः।

त्मनेपदम्। अत्र केचित्तु "आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदि"ति न्यायमवलम्बन्ते।

## [ ञो ज्वलाद्यः ]

टीका। (ञः ञकारानुबन्धो धातुः) ज्वलजमचलतिपो: 'टूनीभूज्वलादेति' णप्रत्यये ज्वालः, पक्षे पचादित्वादनि ज्वलः। एवं कुचज्ञोधपर्ककौटिल्यलेखने, 'टूनीभूज्वलादेति' णः कोचः, पक्षे 'कॄगॄदेति' कः कुचः।

## [ ञिरद्यक्तः ]

टीका। (ञिरित्यनुबन्धो धातुः) अद्यक्तः—अद्य वर्त्तमाने क्तो यस्मात् सः। ञिष्ठास्थाने 'ष्टाञ्चेच्छार्थेति' स्थितो विष्णु-स्तिष्ठतीत्यर्थः।

## [ टुः साथुः ]

टीका। (टुरित्यनुबन्धो धातुः) अथुना सह वर्त्ततेऽसौ साथुः। वटुड वेप चले 'ट्वितोऽथुरि'ति वेपथुः।

## [ डुस्त्रिमग्युतः ]

टीका। (डुरित्यनुबन्धो धातुः) डुकृञ्‌ करणे 'ड्वितस्त्रिग्' इति त्रिमक्, कृत्रिमम्।

## [ णः फणादिः ]

टीका। फणथ निस्नेहे 'तॄफलभजेति' फेणतुः पफणतुः फेणिथ पफणिथ।

[ तस्त्वदन्तः ]

टीका। ( तः तु अदन्तः, तः तकारानुबन्धो धातुः अदन्तः अकारान्तः ) अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धकरणं अनभ्यासाना अङ्कादिषु कान्तत्वादिभ्रमनिरासार्थम्।

[ दस्तनादिः ]

टीका। ( द इत्यनुबन्धो धातुः तनादिगणीयः ) तनुदञ् विस्तृतौ 'तन्भ्यःस्नुवि'ति तनोति। 'झेर्लुक् तथासोरि'ति अतत अतनिष्ट अतथाः अतनिष्ठाः। 'वनतनाद्यनिमामि'ति प्रतत्य।

[ ध्रुधादिकः ]

टीका। ( ध रुधादिक', ध इत्यनुबन्धो धातुः रुधादिगणीयः ) रुधिर्ञ्जिआवृतौ 'दिवस्तुदे'ति रुणद्धि।

[ नः स्वादिः ]

टीका। षुञ् सन्धाक्लेदपीड़ामन्थे 'दिवस्तुदे'ति सुनोति।

[ पो मुचादिः ]

टीका। मुच्लृञपञ्जी मोचे 'नुणरधोमुचामि'ति मुञ्चति।

[ भः शमादिः ]

टीका। शमुभिर्यशमे 'यन्योश्यमादी'ति शाम्यति।

[ मोणिचिशमोः दीर्घो वा ]

टीका। ( मः मकारानुबन्धो धातुः। णिचिशमोः—णिच्च शमृच तौ चिशमौ, णेः परौ चिशमौ तयोरिति विग्रहः। मकारानुबन्धधातूनां ञेः परवर्त्तिनो रिणपचशमोः परयोर्वा दीर्घ

इत्यर्थः) दीर्घो दीर्घवान्। घटषमङ चेष्टे (घटादिजनीति सूत्रे) 'ञोणमोस्तुर्यथेति' अघटि अघाटि, घटं घटं घाटं घाटं।

[ णिचि ह्रस्वः ]

टीका। मोऽनुवर्त्तते। (मकारानुबन्धो धातुः) णिचि ञौ परे ह्रस्वो ह्रस्ववान्। 'घटादिजनीति' घटयति।

[ मिर्वा ]

टीका। णिचि ह्रस्व इत्यनुवर्त्तते। (मिकारानुबन्धधातूनां ञौ परे विकल्पेन ह्रस्वो भवतीत्यर्थः) फणमिणगतौ 'वा ग्रमयमेति' फणयति फाणयति।

[ दिवाद्यो य ]

टीका। (यकारानुबन्धो धातुर्दिवादिगणीयः) दिव्यु जिगीषादौ 'दिवस्तुदेति' दीव्यति।

[ ल अदादिकः ]

टीका। अद्लौ भक्षे 'लुगदृभ्योऽप' इति अत्ति।

[ लुः स्वपादिश्च ]

टीका। चकारादद्दादिश्च। स्वमते स्वपादेः प्रयोजनं नास्ति। दरिद्रातीत्यादौ स्वपादित्वादजादौ सार्व्वधातुके आद्यचःस्य उदात्तस्वरत्वम्भवति। तथाच आद्युदात्तत्वमिति वोपदेवः (१)।

---

(१) सिद्धान्तकौमुद्यां वैदिकप्रकरणे धातुस्वरप्रक्रियायामयमर्थः स्फुटीकृतो यथा—"स्वपादिहिंसामच्यनिटि ६।१।१८८। स्वपादीनां हिंसेश्चानिटि अजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात्। स्वपादिरदाद्यन्तर्गणः। स्वपन्ति श्वसन्ति हिंसन्ति।

## [ लिङ्गोदिः ]

टीका। ह्रादेरदाद्यन्तर्गणत्वेन ख्यातत्वात् अदादिवल्लुच-कानुबन्धो न कृतः। अथवा 'लुः स्वपादिश्च लिङ्गोदि'रित्येकं वाक्यम्। लुलि इत्युभयानुबन्धौ धातु क्रमात् स्वपादिह्रादौ स', काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ह्रादिः पृथग्गण इत्येके। अतएव पठन्ति च "भ्वाद्यदादी जुहो-त्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादि-चुरादय इति। ऊलि चोमेऽदने 'ह्रादौरे ह्रिरि'ति जुहोति।

## [ वोष्टतादिः ]

टीका। इतङ्वल्ल वर्त्तने, 'इङ्गो नेमृपे' इति तेनैव परस्मैपदे वर्त्स्यति विष्टत्स्यति। आत्मनेपदे तु वर्त्तिष्यते। अन्यत्र विष्टत्वा विवर्त्तिषा।

## [ श तुदादिकः ]

टीका। तुद औ श व्यथे 'दिवसतुदेति' तुदति।

## [ ञिः कुटादिश्च ]

टीका। चकारात् तुदादिश्च। 'कुटा णुषी ङ्णिति' इति नियमात् कुट थि कौटिल्ये इत्यादीनां अकुटीदित्यादौ न गुणः। नूथिस्तवने इत्यादीनां अनुवीदित्यादौ न वृद्धिः अगुणत्वादुवृच।

## [ प ऊदङ्वान् ]

टीका। आख्यातिकस्य ङोऽभावार्थं ऊदिति विशेषणम्। स्तमते ह्रभयत ङ एव। डुञौप पच पाके 'औपिचिन्नीति' पचा।

[ ञो जक्षादिः ]

टीका। जक्ष घलुप भक्षहासयोः, 'ह्विषक्षजक्षादौ' इति ह्विसंज्ञाया शवन्तस्य 'विदचोऽह्वे'रिति न नुण् तेन जक्षत्। ञौवे जक्षशसोस्तु 'ह्वेः शतु'रिति जक्षन्ति जक्षति। प्याप्यातिकेन्तौ अन्तोऽह्वेरिति जक्षति, 'अतुस्सिह्वे'रिति अजक्षुः।

[ र वैदिकः ]

टीका। ( र इत्यनुबन्धो धातुः ) वैदिको वेदेष्वेव प्रयुक्तो न तु भाषायामित्यर्थः। गार्लि स्तुतौ जगाति।

[ धातवो हन्तिभासार्था अकितो वा चुरादयः ]

टीका। इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातव इति। हन्त्यर्था हिंसार्थाः, हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटिस्पर्शिद्युताविव्यत्र द्युत्यर्थत्वेऽपि किकरणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवस्तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेव धातुपारायणकामधेनुरौ (१)। यथा हनृली गतौ वधे घातयति हन्तीत्यर्थः। शुभलुडदीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरादित्वं सर्व्वैर्न मन्यते। अन्येषान्तु चुरादित्वं यथा "इन्द्रियादेरसामर्थ्यं बध्यमानमदीपयत्" इति भट्टवार्त्तिकम्। "दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषमि"ति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामचोहरत्" इति

(१) अर्थे धातवो विकल्पाभीप्सया चुरादौ वा भवन्ते इति धातुपारायणम्।

## [ लिङ्खादिः ]

टीका। ङ्खादिरदाद्यन्तर्गणत्वेन ख्यातत्वात् अदादित्वसूचकानुबन्धो न कृतः। अथवा 'लुः खपादिश्च लिङ्खादि'रित्येकं वाक्यम्। लुलि इत्युभयानुबन्धौ धातू क्रमात् खपादिङ्खादौ स्तः, काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ङ्खादिः पृथग्गण इत्येके। अतएव पठन्ति च "भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादय इति। ङ्खि होमेऽदने 'ङ्खादीरे ङ्खि'रिति जुहोति।

## [ वोद्वतादिः ]

टीका। वृतङुवक्ष वर्त्तने, 'हृद्गो नेस्मे' इति तेनैव परस्मैपदे वर्त्स्यति विवृत्सति। आत्मनेपदे तु वर्त्तिष्यते। अन्यत्र विवृत्सा विवर्त्तिषा।

## [ श तुदादिकः ]

टीका। तुद औ ष व्यथे 'दिवक्षुतुदेति' तुदति।

## [ शिः कुटादिश्च ]

टीका। चकारात् तुदादिश्च। 'कुटा गुञ्री शिणति' इति नियमात् कुट शि कौटिल्ये इत्यादीनां अकुटीदित्यादौ न गुणः। नूयिस्तवने इत्यादीनां अनुवीदित्यादौ न वृद्धिः अगुणत्वादुवृच।

## [ प ऋदङ्वान् ]

टीका। आख्यातिकस्य ङोऽप्राप्तत्वर्थं ऋदिति विशेषणम्। स्वमते ह्युभयत्र ङ एव। डुञौप पच पाके 'औपिचिन्तीति' पचा।

[ञो जचादि·]

टीका। जच चलय भचहासयो', 'द्विरुक्तजचादौ' इति द्विसंज्ञाया यवन्तस्य 'विदचोऽद्वे'रिति न नुण् तेन जचत्। क्लीवे जस्शसोस्तु 'द्वेः शतु'रिति जचन्ति जचति। आख्यातिकेऽन्तौ 'अन्तोऽद्वे'रिति जचति, 'अतुस्सिद्वे'रिति अजचुः।

[र वैदिकः]

टीका। (र इत्यनुबन्धो धातुः) वैदिको वेदेष्वेव प्रयुक्तो नतु भाषायामित्यर्थः। गार्लि स्तुतौ जगाति।

[धातवो हन्तिभासार्था अकितो वा चुरादयः]

टीका। इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातव इति। हन्त्यर्था हिंसार्थाः, हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटिक्षपिद्युतावित्यत्र द्युत्यर्थत्वेऽपि किकरणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवस्तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेव धातुपारायणकमदीश्वरौ (१)। यथा हनूलौ गतौ वधे घातयति हन्तीत्यर्थः। शुभलङ दीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरादित्वं सर्व्वैर्न मन्यते। अन्येषान्तु चुरादित्वं यथा "इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिपत्" इति भट्टवार्त्तिकम्। "दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषमि"ति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामजीहरत्" इति

(१) सर्व्वे धातवो विवक्षाधीनत्वाच्चुरादौ वा पठ्यन्ते इति धातुपारायणम्।

पञ्चतन्त्रम्। "दशवर्षसहस्राणि रामो राज्यमकारयदि"ति व्यास इत्यादि।

**क्रादिः कृगृदृदृप्रच्छो मुहद्रुहष्णुहूनशष्णिहः।**
**मुहादि ङिद्हलन्तोऽनुदात्तेद्लुङिद्द्युतादिकः॥**

टीका। अथ स्वरूपेण फलं निरूपयति क्रादिरिति। क्रादिः कृश विक्षेपे, गृश निगरणे, दृङ्आदरे, धृङ्स्थितौ, प्रच्छौशज्ञीप्से इति पञ्च। फलन्तु अन्येषां मते क्रादिभ्यः सन् इट् चिकरिषति इत्यादि। स्वमते तु स्मिङ्पूङरञ्ज्वशित्यादि-सूत्रे एषां ग्रहणात् क्रादेः फलाभावः। मुहद्रुहष्णुहूनशष्णिहो मुहादिः। मुह्लूज़ि वैचित्त्ये, द्रुह्लू जिघांसे, ष्णुह्लू उद्गारे, नश् लृयू नाशे, ष्णिह्लू ञ्जि प्रीतौ। फलन्तु 'मुहा घड्वे'ति मुक् मोग्धा, 'ढोढोभा'विति मुट् मोढ़ा इत्यादि। द्रुहस्तु घडोऽप्राप्ति-पक्षे 'ढोढोभा'वित्यनेन ढ एव नतु 'दादेर्घ' इत्यनेन घः, अन्यथा दादेर्घ इत्यनेनैवेष्टसिद्धौ मुहादावस्य पाठोऽव्यर्थः स्यात्।

[ ङिद्हलन्तोऽनुदात्तेत् ]

टीका। ङानुबन्धो हलन्तो हसन्तो यो धातुः सोऽनुदात्तेत् अनुदात्तस्वरानुबन्धः परिभाषित इत्यर्थः। तेषां वेदेष्वेवोच्चारण-भेदोऽस्तीति फलम्। आत्मनेपदस्थेति केचित्।

[ लृङिद्द्युतादिकः ]

टीका। लृङ इत्युभयानुबन्धो धातुर्द्युतादिः स्यात्। द्युतलृङ दीप्त्या 'द्यासुलिद्युदि'ति परस्मैपदे अद्युतत्। लिदित्यनेनैवेष्टसिद्धौ द्युतादिपाठः प्राचामनुरोधात्।

श्विश्रिडीशीयुरुनुस्नुक्षुक्ष्णुटङ्वृञ्विवर्जिताः।
एकस्वरा आदिवर्णोदृदन्ता धातवोऽनिटः॥

टीका। टुओश्वि गतिवृद्ध्योः, श्रिञ् सेवने, डीङ्य गतौ, डीङ् च नभोगतौ, शीङ्लञि स्वप्ने, युल मिश्रणे, रुल ध्वनौ, रुङ्-वधे गत्यां, नुल स्तुतौ, ष्णुल प्रस्रुत्या, टुक्षुल क्षुते, क्ष्णुल तेजने, वृङ् सम्भक्तौ, वृनगञ् वृतौ। ट इत्यनेनैवेष्टसिद्धौ उभयग्रहणं स्वरूपस्य कस्यचिदप्राप्त्यर्थम्। तेन युजगयन्धे इत्यत्रादिम् न स्यात्। ख्रादिवर्ज्जिता एकस्वरा ये आकारान्ता इवर्णान्ता उकारान्ता ऋकारान्ताश्च धातवस्तेभ्यः सामान्यविधानादिम् न स्यात्। यथा 'नेमेकाजादुद्दत' इति पाता जेता क्रेता श्रोता कर्त्तेति। विशेषविधानात्तु स्यादेव। यथा 'यमरमनमे'ति अपासिषाम्। 'स्तुसुधोः सेरिमपे' इति असावीत् अस्तावीत् अधावीत्। 'स्मसहेन' इति करिष्यति। ख्रादेस्तु ख्रयितेत्यादि।

[ इति परिभाषा ]

टीका। वक्ष्यमाणग्रन्थस्य संक्षेपनिर्व्वाहार्थं सङ्केतविशेषः परिभाषा इत्यर्थः।

अथ धातवो निर्द्धार्य्यन्ते। तत्रादावदन्ताः तेषु च श्वपतञ्वर्जेषु सर्व्वेषु धातुषु ककारोऽनुबन्धः, तकारस्तु सर्व्वेष्वेव। ननु उमाल्लोप इत्यनेनाल्लोपस्य नित्यत्वाददन्तत्वं व्यर्थमिति चेन्न यतः "अल्लोपित्वं स्थानिवत्त्ववशाददन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनं। तद्बलादन्त्यदीर्घश्च पुक्चेत्यज्ञापयत्यत" इति(१)।

(१) अस्यार्थः। अल्लोपित्वं इमाल्लोप इनष्टा अदन्तधातोरकारलोपे धातोरल्लोपित्व, स्थानिवत्त्वं तस्य लुप्ताकारस्य स्थानिवत्त्वल्लोकारस्य इत्थमपि अदन्तत्वप्रयोजनं धातोरदन्तत्वकरणफलम्। यत्र यस्मिंस्तु धातौ एते अल्लोपित्व-

यथा—अग्लोपित्वेन अजगवेषदित्यादौ न ह्रस्वसन्वद्भावौ । लोपो ऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन कुथयतीत्यादौ न गुणः गणयतीत्यादौ च न वृद्धिः । यत्र तु एते न विद्येते अग्लोपित्व-स्थानिवत्त्वयोः प्रयोजनं न सम्भवति तत्र धातौ तद्बलात् अदन्तत्व-स्यौकारबलात् अल्लोपविकल्पनम् । अकारस्थितिपक्षे दीर्घः पुक् च आदन्तत्वात् यथा च स्यादतोऽङ्कापयतीति सिद्धमिति केचित् । स्वमते तु अग्लोपित्वस्थानिवत्त्वयोः कार्यं येषु न स्यात् ते धातवो हसन्ता एव मन्तव्याः तेन अङ्कापयतीत्यादिप्रयोगाः स्वमतविरुद्धा इति बोध्यम् । नच स्वमतविरुद्धानामिहोपन्यासोऽपि विरुद्ध इति वाच्यं, अष्टाना मतान्यालोक्य कर्त्तव्ये परमतन्यासेऽपि दोषाभावात् । अन्यथा कैश्चिदमन्यमानस्य ह्लजकृताविति भौवादिकस्य पाठो विरुद्धः स्यात् । किञ्च यदि तन्मतैकवाक्यता क्रियते तदाग्लोप-विकल्पोऽन्त्यदीर्घश्च मनीषादित्वात् साध्यः । यथा अङ्कघोऽङ्गिः हसाल्लोप इति अल्लोपः टौविभक्तेर्ढिः ञ्यिझौत्वङ् "नकारजावनु-स्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः" इति वचनात् ङस्य नमस्कृतिकल्पे 'स्वादौ नवद्र इति' ङकारं च्छित्वा किं इत्यस्य हित्वे कसः धत्वे निमित्ताभावे नैमित्तिक-स्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारे तस्य च ङत्वे अङ्घिक-टिति ९ केचित्तु अङ्क इति ङप्रकृतिं मन्वाना: अङ्घि इत्यस्य

---

स्थानिवत्त्वप्रयोजने न विद्येते तत्र तस्मिन् धातौ अग्लोपविकल्पनं विकल्पेन अकारलोपो भवति । विकल्पपक्षे तद्बलात् अदन्तत्वौकारबलात् अन्तदीर्घ अन्त्याकारेण दीर्घो भवेत्, पुक् च अकारस्य दीर्घत्वे आदन्तत्वात् णौप्रत्ययेन पमुक स्यात् । अत अकारात् आकारस्य अङ्कापयति । अङ्कधातोर्यथा अकारलोपे अङ्कयति तथा अकारस्थितिपक्षे अङ्कापयतीत्यपि इति विवरणम् ।

र्द्वित्वे आञ्चिङ्कदित्याङ्कः। अत्र ऋस्वसन्वद्भावयोरसम्भवान्नाग्लोपित्वं गुणवृद्ध्योरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽपि अकारलोपस्य स्थानिवत्त्वं मन्वानाः क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यं इत्याचकदित्युदाहरन्ति।

---

अकारान्तवर्गः।

अङ्काङ्ग त्क पदे लक्ष्मण्यंशांस त्क विभाजने।
अर्थ त्कङ् याचनेऽन्ध त्क दृक्क्षयेऽघ त्क तत्कृतौ॥

१। अङ्कत्क पदे लक्ष्मणि। (अङ्क, अदन्त चु, प) कण्ठ्यवर्गाद्योपधः। पदं संख्यासंस्थानम्, लक्ष्म चिह्नयुक्तकरणम्। तथाच—अर्थः क्रियैव धातूना कर्तृव्यापारलक्षणा। आत्मनिष्ठं क्रियार्थत्वं धात्वर्थेष्वक्रियात्मसु इति वोपदेवः (१)। त, क— अङ्कयति अङ्कापयति। अङ्कयत्यरिसैन्यानि युधि पृष्ठेषु सायकैरिति हलायुधः।

२। अङ्गत्क पदे लक्ष्मणि। (अङ्ग, अदन्त चु, प) कण्ठ्यवर्ग

---

(१) कर्तृव्यापारलक्षणा कर्तुं क्रियाक्षतचेष्टाविशेषरूपा क्रियैव धातूनामर्थः। किन्तु धात्वर्थेषु अक्रियात्मसु गण्डिगण्डे इत्यादिवत् क्रियाभिन्नद्रव्यादिस्वरूपेषु सत्सु आत्मनिष्ठक्रियार्थत्वं आत्मनिष्ठा धात्वर्थनिष्ठा या क्रिया सैव अर्थो येषां तेषां भावस्तत्त्वं धातूनामिति शेषः। यदा धात्वर्थो द्रव्यादिस्वरूपस्तदा तन्निष्ठक्रियाविशेषमादायैव धातूनां क्रियार्थत्वमिति तात्पर्य्यम्। अतएव गण्डिगण्डे इत्यत्र "गण्डे कपोलविषयक्रियाम्। तथाच यत्र द्रव्यनिर्द्देशस्तत्र तन्निष्ठक्रियाविशेष उपलक्ष्यते इति मैत्रेयवोपदेवौ। रमानाथस्तु कडुकार्कश्ये इत्यस्मात् कार्कश्य इत्यस्यानुवृत्त्या कपोलकर्तृककार्कश्येऽयमिति व्याख्याय गण्डति कपोल पांशुना इत्युदाहृतवानि' ति स्वयं वक्ष्यति। केचित्तु गण्डशब्दस्य गण्डकर्तृककम्पनं चुम्बनञ्चेति व्याख्याय गण्डति कपोल' कपोलं वेत्युदाहरन्ति।

तृतीयोपधः। मद्लक्ष्मव्याख्यानं पूर्व्ववत्। त, क—अङ्कयति अङ्कापयति।

३। अंश ल्क विभाजने। (अंश, अदन्त चु, प) तालव्योपधः। विभाजन इति भाजल्लतु पृथक्कृत्यामित्यस्य रूपम्। त, क—अंशयति अंशापयति धनं वणिक्।

४। अंस ल्क विभाजने। (अंस, अदन्त चु, प) दन्त्योपधः। अन्यत् सर्व्वं अंशधातुवत्।

५। अर्थ ल्क ङ याचने। (अर्थ, अदन्त चु, आ)। ङ—अर्थयते अर्थापयते। "गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नव" मिति, "प्रार्थयत्यल्पसल्यानौ" त्यादौ प्रार्थन प्रार्थः पश्चात् प्रार्थं करोतीति णौ परस्मैपदम्।

६। अन्ध ल्क दृक्क्षये। (अन्ध, अदन्त चु, प) दृक्क्षयो दृष्टिरहितीभावः, तेनाकर्म्मकोऽयं धातुः। तथाच—सत्ताजीवनदर्पभीतिशयनक्रीडानिवासक्षयाव्यक्तध्यानभोगतिस्थिति-जरालज्जाप्रमादोदये। मोहे खोटनवेगयुद्धदहनख्यातिघरोन्मादके युद्धिखेदपलायनभ्रमणके प्रान्तौ सुतौ मज्जने। हृष्टौ जागरशोपवकगमनोत्साहे स्रुतौ संशये स्नानौ मन्दगतौ च नृत्यपतने चेष्टाक्रुधो रोदने। हृद्धौ चावक्षतौ च सिद्धिविरतौ दर्पोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनाद्ये भातत्रोऽकर्म्मकाः। दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः। वाचका भावमात्रस्य यतस्तस्मादकर्म्मकाः॥ कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः। तदङ्गावेऽकर्म्मकाः स्युस्तद्वत् कृत्या सकर्म्मका इति॥ त, क—अन्धयति, अन्धापयति।

७। अघ ल्क तत्कृतौ। (अघ, अदन्त चु, प) तत्कृतिः पापकृतिः। त, क—अघयति व्याधः। कर्म्मणोऽर्थमध्यपातादकर्म्मको-

ऽयम्। तथाच "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्। प्रसिद्धे-रविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया" इति गोयीचन्द्रः। धात्व-र्थेन सह कर्म्मण उपसंग्रहादित्यर्थः। क्रमेणोदाहरणानि—नदी वहति क्षरतीत्यर्थः। श्वयति व्याधः। भवति घटः। आस्ते जनः।

अवधीर त्कवज्ञायामान्दोल त्क तु दोलने।
ऊन त्क परिहाणे स्यादोज त्क बलतेजसोः॥

८। अवधीरत्क अवज्ञायाम्। (अवधीर, अदन्त चु, प) त, क—अवधीरयति साधुमसाधुः। (अवधीरितसुहृद्वाक्यस्य फल-मेतदिति हितोपदेशः)।

९। आन्दोल त्क तु दोलने। (आन्दोल, अदन्त चु, प) त, क—नान्दोलयन्ति परच्छिद्र साधवः। टौदिविभक्तौ आन्दु-दोलत्। (तु शब्दः परत्र सम्बन्धज्ञापकः, एवं सर्व्वत्र)।

१०। ऊन त्क परिहाणे स्यात्। (ऊन, अदन्त चु, प) दीर्घादिरन्त्योपधः। तथाच "लोभमाशु हृदयं नयदूनां राग-वृद्धिमकरोन्न यदूना"मिति माघयमकम्। परिहाणं न्यूनक्रिया। त, क—ऊनयति स्वर्णं वणिक् प्रथमपरिमाणात्। परिमाण-मात्रेऽयमिति केचित्। ऊनधो ञिः अङ् द्वित्वे स्वस्थानमेव नास्ति अतो नाग्लोपित्वमिति सन्देहनिरासार्थमाह। "मा भवान् ऊनिनत्। ओनेर्ऋदनुबन्धज्ञापकबलात् द्वित्वात् प्राक् प्राप्तो-ऽप्यस्योऽग्लोपित्वान्न स्यादिति" कामधेनौ वोपदेवः।

११। ओज त्क बलतेजसोः। (ओज, अदन्त चु, प) बलमिन्द्रियशक्तिः, तेजःप्राणशक्तिः। मा भवान् ओजिजत्।

कथ त्क वाक्यप्रबन्धे कल त्क गतिसंख्ययोः।

स्यात् कर्ल कल कर्त्त त्का शैथिल्ये कर्ण तक् भिदि ॥

१२ । कथ त्क वाक्यप्रबन्धे । (कथ धा, अदन्त चु, प) वाक्यप्रबन्धो वाक्यरचना । त, क—कथयति । (टौदिविभक्तौ अचीकथत् अचकथत्) ।

१३ । कल त्क गतिसंख्ययोः । (कल धा, अदन्त चु, प) (गतिरिह यापनं अन्तर्भूतण्यर्थत्वात्) त, क—कलयति कालं धीरः, यापयति गणयति चेत्यर्थः ।

१४ । कर्ल त्क शैथिल्ये । (कर्ल धा, अदन्त चु, प) रेफद्वययुक्तलकारः । त, क—कर्लयति कर्लापयति धूलिर्जलेन ।

१५ । कल्र त्क शैथिल्ये । (कल्र धा, अदन्त चु, प) रेफोपधलमध्यः । त, क—कल्रयति कल्रापयति धूलिर्जलेन ।

१६ । कर्त्त त्क शैथिल्ये । (कर्त्त धा, अदन्त चु, प) रेफोपधतकारः । त, क—कर्त्तयति कर्त्तापयति धूलिर्जलेन ।

१७ । कर्ण तक् भिदि । (कर्ण धा, अदन्त चु, प) त, क—कर्णयति, कर्णापयति । आङ्पूर्व्वकोऽयं श्रवणे । तथाच "दैवाकर्ण्य येन येन सहसा यद्यत्समासादित"मिति । उपसर्गास्तत्तदर्थाना द्योतका एव नतु वाचकाः । केवलधातोरनेकार्थत्वेऽवश्यवक्तव्ये उपसर्गपूर्व्वस्याप्यन्यार्थो धातोरेव कल्प्यते लाघवात् । क्वचिदुपसर्गा धात्वर्थमेवानुवर्त्तन्ते । तथाच "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते । तमेव विशिनष्टन्य उपसर्गगतिस्त्रिधा" । इति विस्तरः इत्ति । क्रमेणोदाहरणानि—आदत्ते गृह्णातीत्यर्थः । प्रसूयते अत्र प्रसव एव धात्वर्थः, प्रशब्दस्तमेवार्थं द्योतयति । प्रणमति प्रकर्षेण नमतीत्यर्थः । केचित्तु अनर्थकोऽन्यः प्रयुज्यते इति चतुर्थचरणं पठन्ति तच्चिन्त्यम् ।

काल त्क कालोपदेशे कुण त्कामायमन्त्रयोः।
स्यात् कुमार कुमाल त्क केलौ केत त्क मन्त्रणे॥
निश्रावणेऽथ कूण त्क सङ्कोचेऽथ कुह त्क ङः।
विस्मापनेऽथ कूट त्क दाहे मन्त्रे क्षप त्क तु।
दौर्ब्बल्ये क्षप तक्म स्यात् क्षेपे खच त्क बन्धने॥

१८। काल त्क कालोपदेशे। (काल, अदन्त चु, प) त, क—अचकालत् कालमियत्तया गणकः, एतावती वेलेति कथितवानित्यर्थः।

१९। कुण त्क आमायमन्त्रयोः। (कुण, अदन्त चु, प) क्रसौ मूर्द्धन्योपधः। त, क—कुणयति। मन्त्रोऽभिमुखीकरणं, गुप्तोक्तिरित्येके।

२०। कुमार त्क केलौ। (कुमार, अदन्त चु, प) क्रसौ। त, क—कुमारयति। अचुकुमारत्।

२१। कुमाल त्क केलौ। (कुमाल, अदन्त चु, प) क्रसौ। त, क—कुमालयति। अचुकुमालत्।

२२। केत त्क मन्त्रणे निश्रावणे। (केत, अदन्त चु, प) त, क—केतयति। मन्त्रणं निमन्त्रणम्। अचिकेतत्। निश्रावणं समयोज्ञापणम्।

२३। अथ कूण त्क सङ्कोचे। (कूण, अदन्त चु, प) दीर्घो मूर्द्धन्योपधः। त, क—कूणयति। अचुकूणत्चक्षुः सङ्कुचितमभूदित्यर्थः।

२४। अथ कुह त्क ङ विस्मापने। (कुह, अदन्त

चु, आ) क्रुत्ती, विस्मापनं अन्यतो विस्मयोत्पादनम्। त, क, कु—कुहयते कुहकेनेन्द्रजालिको लोकं विस्मापयतीत्यर्थः। "स्नाता कुहयते विस्मापयते हेतुतो भय"मिति भट्टमल्लदर्शनाद्विस्मापने इति पाठ इत्येके।

२५। अथ कूट त्क दाहे मन्त्रे। (कूट, अदन्त चु, प) दीर्घो। अचुकूटत्। (यः कूटयति शत्रूणां दृष्टा गजघटा रणे इति हलायुधः। २३४)

२६। क्षप त्क, त दौर्बल्ये। (क्षप, अदन्त चु, प) सप्तमस्वरी। क्षपयति। षष्ठस्वरीति विलोचनः। (प्रचुरं प्रथितो ह्यर्थं नासौ क्षपयति प्रभुरिति हलायुधः। २३५। अर्थं दातमितिशेषः)

२७। चप त्क म स्यात् क्षेपे। (चप, अदन्त चु, प) त, क—चपयति। म—अचचपि अचापि, चपं चपं चापं चापं। मानुबन्धसामर्थ्यात् स्वानित्वाभावे दीर्घः। स्वमते तु अत दीर्घविधिरुपधा नापेक्षते।

२८। खच त्क बन्धने। (खच, अदन्त चु, प) त, क—खचयति।

खोट खोड़ त्क क्षेपे खेट खेड़ त्क भक्षणे।

२९। खोट त्क क्षेपे। (खोट, अदन्त चु, प) त, क—अचुखोटत्।

३०। खोड त्क क्षेपे। (खोड, अदन्त चु, प) त, क—अचुखोडत्।

३१। खेट त्क भक्षणे। (खेट, अदन्त चु, प) त, क—

अचिखेटत्। (खेटयत्यरिवीरांश्च संग्रामरसिकान् नृप इति हलायुधः। १५५। खेटयति हन्तीत्यर्थः)

३२। खेड़ त्क भक्षणे। (खेड़, अदन्त चु, प) त, क—अचिखेड़त्।

**गद त्काभ्र ध्वनौ गर्व्व त्कङ् दर्पेऽथ गृह त्कङः।**
**ग्रहे गण त्क संख्याने गवेष त क मार्गणे॥**

३३। गद त्काभ्रध्वनौ। (गद, अदन्त चु, प) त, क—गदयति मेघः। अभ्रध्वनिर्मेघकर्तृकशब्दः।

३४। गर्व्व त्कङ् दर्पे। (गर्व्व, अदन्त चु, आ) त, क, ङ—गर्व्वयते गर्व्वापयते धनैर्नीचः। दर्पोऽहङ्कारः। (विद्याधनसम्पन्नोऽपि यो न गर्व्वयते प्रभुरिति हलायुधः। ७१)।

३५। अथ गृह त्कङ ग्रहे (गृह, अदन्त चु, आ) सप्तमस्वरी। त, क, ङ—गृहयते। ग्रहो ग्रहणम्। (द्विषां गृहयते शिर इति हलायुधः। ३२)।

३६। गण त्क संख्याने। (गण, अदन्त चु, प) मूर्द्धन्योपधः। त, क—गणयति। (डोद्विभक्तौ अजीगणत् अजगणत्)।

३७। गवेष तक मार्गणे। (गवेष, अदन्त चु, प) मूर्द्धन्योपधः। (मार्गणमन्वेषणम्) त, क—अजगवेषत् गुणं गुणी। (गवेषयति सत्क्रियां (यः) इति हलायुधः। २४७)।

**गोमत्क लेपने गात्र त्कङ् शैथिल्ये गुण त्क तु।**
**मन्त्रे गह त्क गहने चित्र त्क चणिकेक्षणे।**
**लेख्येऽद्भुते चह त्क स्यात् शाठ्ये छद त्क संदृतौ।**

३८। गोम ल्क लेपने। (गोम, अदन्त चु, प) त, क—गोमयति) अजुगोमत् गोमयेन स्थानं चेटी।

३९। गात्र ल्क ङ् शैथिल्ये। (गात्र, अदन्त चु, आ) दन्त्यवर्गाद्यमध्यः। (शैथिल्यं शिथिलीभावः) त, क, ङ—गात्रयते गात्रापयते।

४०। गुण ल्क ट मन्त्रे। (गुण, अदन्त चु, प) ह्रस्वी मूर्द्धन्योपधः। त, क—गुणयति।

४१। गह्व ल्क गह्वने। (गह्व, अदन्त चु, प) गह्वनं दुर्ब्बोधः। त, क—गह्वयति शास्त्रं जडधी, दुःखेन जानातीत्यर्थः।

४२। चित्र ल्क चणिकेच्चणे लेख्येऽद्भुते। (चित्र, अदन्त चु, प) चणिकेच्चणं कादाचित्कदर्शनम्। त, क—चित्रयति चित्रापयति राज्ञं लोकः कदाचित् पश्यतीत्यर्थः। चित्रयति प्रतिमा लोकः। (अद्भुतं साचर्य्यीभावः, चित्रयति लोकः आश्चर्य्यान्वितो भवतीत्यर्थः)।

४३। चह्व ल्क स्यात् शाठ्ये। (चह्व, अदन्त चु, प) (शाठ्यं प्रतारणम्) त, क—चह्वयति खलः (साधुं प्रतारयतीत्यर्थः)।

४४। छद ल्क संवृतौ। (छद, अदन्त चु, प) (संवृतिराच्छादनम्) त, क—छदयति दिशं मेघः। (छदयति सुरलोकं यो गुणैरिति हलायुधः १६)।

छिद्र ल्क भेदे छेद ल्क छेदे तीर ल्क कर्म्मणाम्।
समाप्तावथ तूण ल्क सङ्कोचे तुत्थ तक् स्तुतौ॥

४५। छिद्र त्क भेदे। ( छिद्र, अदन्त चु, प ) भेद इह रन्ध्रकरणम्। त, क—छिद्रयति छिद्रापयति भाण्ड बालकः।

४६। छेद त्क छेदे। ( छेद, अदन्त चु, प ) त, क—अचिच्छेदत्। ( छेदयत्यचिच्छेदयमिति हलायुधः। २४६ )

४७। तीर त्क कर्म्मणां समाप्तौ। ( तीर, अदन्त चु, प ) कर्म्मणामिति स्पष्टार्थम्। ( १ ) त, क—अतितीरद्व्रतं लोकः समापितवानित्यर्थः।

४८। अथ तूण त्क सङ्कोचे। ( तूण, अदन्त चु, प ) दीर्घी, ऊर्द्धन्योपधः। त, क—अतुतूणत्।

४९। तुत्थ तक् स्तुतौ। ( तुत्थ, अदन्त च, प ) आद्ये पञ्चमस्वरः शेषे दन्त्यवर्गाद्ययुक्तास्थकारः। त, क—तुत्थयति तुत्थापयति। स्तुतिराच्छादनम्।

दुःख त्क तत्क्रतौ दण्ड त्क तत्पाते ध्वन त्क तु।
शब्दे निवास तक् स्तृत्यां प्रेङ्खोल तक चापले॥

५०। दुःख त्क तत्कृतौ। ( दुःख, अदन्त चु, प ) विसर्गमध्यः। तथाच "काले तडिल्लताजाले घनपीनपयोधरे। कान्तः सर्व्वगुणोपेतो बालेन्दुः खे न लभ्यते"॥ इति विन्दुच्युतकम्। अस्यार्थः—तडिल्लतासम्बद्धवर्ति घनस्थूलमेघे काले कमनीयः सर्व्वगुणोपेतो बालेन्दुः खे आकाशे न लभ्यते। पक्षे हे बाले

( १ ) कर्म्मणामित्युपादानमस्य सकर्म्मकत्वज्ञापनार्थम् अन्यथा उच्चीशबन्ध समापने इत्यत्र समापनशब्देन यथा समाप्तीभाव उच्यते तथात्रापिसमाप्ति शब्दस्य समाप्तीभाववाचित्वेऽस्याकर्म्मकत्वापत्तिरिति शब्दकल्पद्रुमधृतातिरिक्तपाठ। कर्म्मसमाप्तिश्चेद्धात्वर्थोभवेत् तदा धात्वर्थेनोपसङ्ग्रहादित्युक्तेरस्याकर्म्मकत्व स्यादतएव कर्म्मणामिति स्पष्टार्थमित्युक्तम्)।

३८। गोम ल्क लेपने। (गोम, अदन्त चु, प) त, क— गोमयति) अनुगोमत् गोमयेन स्थानं चेटी।

३९। गात्र ल्क ङ् शैथिल्ये। (गात्र, अदन्त चु, आ) दन्त्यवर्गाद्यमध्यः। (शैथिल्यं शिथिलीभावः) त, क, ङ—गात्रयते गात्रापयते।

४०। गुण ल्क तु मन्त्रे। (गुण, अदन्त चु, प) ऋसो मूर्द्धन्योपधः। त, क—गुणयति।

४१। गह्व ल्क गह्वने। (गह्व, अदन्त चु, प) गह्वनं दुर्ब्बोधः। त, क—गह्वयति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः।

४२। चित्र ल्क चाणिकेक्षणे लेख्येऽद्भुते। (चित्र, अदन्त चु, प) चाणिकेक्षणं कादाचित्कदर्शनम्। त, क—चित्रयति चित्रापयति राज्ञं लोकः कदाचित् पश्यतीत्यर्थः। चित्रयति प्रतिमां लोकः। (अद्भुतं साश्चर्य्यभावः, चित्रयति लोकः आश्चर्य्यान्वितो भवतीत्यर्थः)।

४३। चट्ट ल्क स्रात् शाठ्ये। (चट्ट, अदन्त चु, प) (शाठ्यं प्रतारणम्) त, क—चट्टयति खलः (साधुं प्रतारयतीत्यर्थः)।

४४। छद ल्क संहतौ। (छद, अदन्त चु, प) (संहतिराच्छादनम्) त, क—छदयति दिशं मेघः। (छदयति मन्मोकं यों गुणैरिति हलायुधः १६)।

छिद्र ल्क भेदे छेद ल्क छेदे तीर ल्क कर्म्मणाम्।
समाप्तावथतूण ल्क सङ्कोचे तुत्थ तक् स्तुतौ॥

चु, प) द्वौ यकारयुतैकलकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। लूनिश्छेदः, पूतिः पवित्रीकरणम्। त, क—अपपल्यूलत् तृणं लोकः। पल्युलयति वनं गङ्गा।

६४। पुट ल्क तु संसर्गे। (पुट, अदन्त चु, प) त, क—पुटयति पुष्पं सूत्रेण लोकः, संसृजतीत्यर्थः।

६५। पच ल्क परिग्रहे (पच, अदन्त चु, प) त, क—पचयति, पचापयति।*

६६। भाम ल्क कोपने। (भाम, अदन्त चु, प) त, क—अबभामत्। (भामयति कुप्यति या सा भामिनी। तथाच कोपनासैव भामिनीत्यमरः)।

भाज ल्क तु पृथक्कृत्यां मृग ल्क ङ तु मार्गणे।
मह ल्क पूजे मूत्र ल्क प्रस्रावे मन तक् धृतौ॥

६७। भाज ल्क तु पृथक्कृत्याम्। (भाज, अदन्त चु, प) त, क—अबभाजत् धनं भ्रातृवर्गः। (विभाजयति यो द्रव्यमिति हलायुधः। २६४)

६८। मृग ल्क ङ तु मार्गणे। (मृग, अदन्त चु, आ) त, क, ङ—मृगयते। मार्गणमनुसन्धानम्। "रामो मृगं मृगयते वनवीथिकासु" इति महानाटकम्। (सेवायै मृगयामहे नरमहो मूढ़ा वराकावयमिति शान्तिशतके) कातन्त्रादौ मृग 'अन्वेषणे इति दिवादिपरस्मैपदी धातुश्च दृश्यते, दुर्गसिंहतिलोचनयोरसम्मतत्वादनेनोपेक्षितः। "मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति मा"मिति तु अकारान्तस्यैव भावे क्विपि ञिलोपे मृगं करोतीति कण्ड्वादित्वात् क्ये साध्यम्।

६९। मह एक पूजे। (मह, अदन्त चु, प) त, क—महयति।

७०। मूत्र एक प्रस्रावे। (मूत्र, अदन्त चु, प) दीर्घी। त, क—मूत्रयति मूत्रापयति।

७१। मन तङ् धृतौ। (मन, अदन्त चु, प) दन्त्योपधः। त, क—मनयति।

**मृष एक मृष तङ् चान्तौ मिश्र एकयुत्यां रह एक तु।**
**त्यागे रस एक त्वास्वादे स्नेहे रूप एक तत्कृतौ॥**

७२। } मृष एक चान्तौ } (मृष, अदन्त चु प। मृष,
७२। } मृष तङ चान्तौ } अदन्त, उ) द्वौ मूर्द्धन्योपधौ। त, क—मृषयति। (मृषयति न भृषाणामिति हलायुधः। अणुमात्रमनुचितं य इति शेषः। १५) त, अ—मृषति, मृषते।

७३। मिश्र एक युत्याम्। (मिश्र, अदन्त चु, प) तालव्यमध्योऽयं, दन्त्यमध्य इति वर्णदेशनायाम्। युतिःसंयोजनम्। त, क—मिश्रयति मिश्रापयति घृतेनान्नं लोकः।

७४। रह एक तु त्यागे (रह, अदन्त चु, प) त, क—रहयति शोकं धीरः। (न भूरि दानं विरहय्य सत्क्रियामिति भारविः)।

७५। रस एक त्वास्वादे स्नेहे। (रस, अदन्त चु, प) दन्त्योपधः। त, क—रसयति मधु द्विरेफः। (रसयन्ति सुधाद्यानि तत्करप्रतिपालिता इति हलायुधः। यस्योद्याने पतत्रिण इति शेषः। २०२)

७६। रूप एक तत्कृतौ। (रूप, अदन्त चु, प) तत्कृतीरूपयुक्तकरणम्। त, क—अरुरूपत् प्रतिमां शिल्पी। निपूर्वकः स्वरूपकथने, अनुमानं निरूप्यते इत्यनुमानखण्डम्।

रच त्क कृत्यां कृच त्क पारुष्ये रंह तक् गतौ ।
रूप त्क स्याद्विस्फुरणे लज लञ्ज त्क भासने ॥

७७। रच त्क कृत्याम्। (रच, अदन्त चु, प) त, क—रचयति।

७८। कृच त्क पारुष्ये। (कृच, अदन्त चु, प) दीर्घी। तथाच—स पुनातु व्रजे यच गोरज पातकृचितौ। शिशुर्विच्छिद यमजौ निष्पिष तकृचितौ॥ इति कीचकयमकम। पारुष्य मस्निग्धीभाव। त, क—कृचयति कृचापयति केश।

७९। रंह तक् गतौ। (रंह, अदन्त चु, प) त, क—रंहयति, रंहापयति।

८०। रूप त्क स्यात् विस्फुरणे। (रूप, अदन्त चु, प) दीर्घी। मूर्द्धन्योपध। त, क—अरुरूपत्। (पदातिरन्तर्गिरि रेणुरूपित इति किराते। १। ३४)

८१। लज त्क भासने। (लज, अदन्त चु, प) भासन दीप्ति। त, क—लजयति।

८२। लञ्ज त्क भासने। (लञ्ज, अदन्त चु, प) भासन दीप्ति। त, क—लञ्जयति, लञ्जापयति।

लड लाड तक क्षेपे ललत्क्षेपे वरत्क च।
वर्ण त्क स्तुतिविस्तारशुक्लाद्यद्युक्तिदीपने॥

८३। लड तक क्षेपे। (लड, अदन्त चु, प) त, क—लडयति, अललडत्।

८४। लाड़ तक क्षेपे (लाड़, अदन्त चु, प) त, क—लाड़यति, अललाड़त्।

८५। ललल्क्षेपे (लल, अदन्त चु, प) ईप्स इति आप-धातोः सनन्तस्य भावे अलिरूपं। ननु संख्याद इत्यनेन समान-रूपोऽपि अल् कथं न बाध्यते इतिचेन्न स्त्रीविहितप्रत्ययैः कश्चित् सरूपोऽपि न बाध्यते इति मतस्यावश्यवक्तव्यत्वात्। अत-एव कारणं भर्त्सनं निर्यातनं नियामनमित्यादौ ओपिग्रन्थि-ग्रन्थीत्यनेन अनट् न बाध्यते। एवं वक्ष्यमाणेषु व्रीड़ लज्जे, ईह ईहे इत्यादिष्वपि बोध्यं। त, क—ललयति धनं लोकः।

८६। वर त्क च। (वर, अदन्त चु, प) रेफोपधः। त, क—वरयति। चकारादीप्से।

८७। वर्ण त्क स्तुतिविस्तारशुक्लाद्युद्युक्तिदीपने (वर्ण, अदन्त चु, प) उद्युक्तिरुद्योगः। त, क—वर्णयति वर्णापयति कविः स्तौतीत्यर्थः। वर्णयति तन्तुं तन्तुवायः विस्तारयतीत्यर्थः। वर्णयति प्रतिमां कारुः शुक्लादिवर्णां करोतीत्यर्थः। वर्णयति रविः उद्युङ्क्ते दीप्यते चेत्यर्थः। शुक्लाद्युद्युक्तिदीपने इत्यपि पाठ इति केचित्।

वसत्क वासे वासत्कोपसेवायां व्यय त्क तु।
गतौ वित्त त्क च त्यागे वात त्क गतिसेवयोः॥
सुखे वेल त्क कालार्थे वैञ्च त्क दृशि वराट तक्।
भागे वट त्क वेष्टे च वल्यूल वल्युल त्क तु॥
पल्यूलार्थेऽथ वीज त्क व्यजने वीर तङ्क तु।
शौर्य्ये मण त्काङ्चूर्णे ग्यथमारस्तथ त्क तु॥
दौर्ब्बल्ये याम तक् मन्त्रे शूर त्काङ् विक्रमे शठ।

## श्वठ त्क दुर्वाचि शील तकाश्यासेऽतिशायने ॥

८८। वस त्क वासे। (वस, अदन्त चु, प) त, क—वसयति सस्यं लोकान् राजा निवासयतीत्यर्थः।

८९। वासत्कोपसेवायाम्। (वास, अदन्त चु, प) उपसेवा-गुणान्तराधानम्। त, क—अववासत् वस्त्रं चन्दनेन जनः। (वस्त्रा गन्धेन वासितमिति विष्णुपुराणम्)।

९०। व्यय त्क,तु गतौ। (व्यय, अदन्त चु, प) त, क—व्यययति धनं दाता। (वक्र व्यययति द्रव्यमिति हलायुधः। १।७)

९१। वित्त त्क च त्यागे। (वित्त, अदन्त चु, प) त, क—वित्तयति, वित्तापयति। चकारात् व्यय त्क च (व्ययधातुरपि त्यागार्थक इत्यर्थः)।

९२। वात त्क गतिसेवयोः सुखे। (वात, अदन्त चु, प) त, क—अववातत्। तयोऽर्थाः। रमानाथस्तु गतिसुखसेवनयोरिति मत्वा गतौ सुखं गतिसुखं, वातयति पान्थं वातः गच्छन्तं सुखयतीत्यर्थ इत्याह। सुखसेवनयोरिति कौमराः।

९३। वेल त्क कालार्थे। (वेल, अदन्त चु, प) कालार्थः कालोपदेशः। त, क—अविवेलत् कालमियत्तया गणकः एतावती वेलेति कथितवानित्यर्थः।

९४। वेल त्क इगि। (वेल, अदन्त चु, प) अन्तस्थादितीय-युक्तः। त, क—वेलयति वेलापयति। इति दर्शने।

९५। वण्ट त्क भागे। (वण्ट, अदन्त चु, प) त, क—वण्टयति, वण्टापयति। (वण्टयन्ति च रत्नानि भूमिं वण्टापयन्ति चेति हलायुधः। विभा इति शेषः। ८८)

९७। वट ल्क वेष्टे च (वट, अदन्त चु, प) त, क—वटयति। चकारात् भागे च।

९८। वल्यूल ल्क } पल्यूलार्थे (वल्यूल, अदन्त चु, प।
९९। वल्युल ल्क } वल्युल, अदन्त चु, प) द्वौ यकारयुक्तौ
लकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। त, क—अववल्यूलत्, वल्युलयति। पल्यूलार्थे लूनिपूत्योरित्यर्थः।

९९। वीज ल्क व्यजने। (वीज, अदन्त चु, प) त, क—अविवीजत् चामरेण दर्पं भृत्यः। (वीज्यते स हि समुप्त इति कुमारसम्भवे) वीज इति जान्तो गत्यर्थो भ्वादिरात्मनेपदी कातन्त्रे दृश्यते।

१००। वीर त ङ्क शौर्ये। (वीर, अदन्त चु, आ) त, ङ, क—अविवीरत। शौर्यमुद्यमः।

१०१। व्रण ल्क अङ्गचूर्णे। (व्रण, अदन्त चु, प) अङ्गचूर्णमङ्गभेदः। त, क—व्रणयति गात्रं बाणेन भटः।

१०२। श्रथ ल्क } दौर्ब्बल्ये। (श्रथ, अदन्त चु, प। श्वार,
१०३। श्वार ल्क } अदन्त चु, प। श्लथ, अदन्त चु, प।
१०४। श्लथ ल्क } (आद्यो रेफयुक्त, मध्यमो रेफोपध,
शेषोऽन्तस्थाष्टतीययुक्तः। त, क—श्रथयति, अशश्वारत्, श्लथयति।

१०५। श्राम ल्क मन्त्रे। (श्राम, अदन्त चु, प) त, क—अशश्रामत्। मन्त्रोऽभिमुखीकरणम्। गुप्तोक्तिरित्येके।

१०६। शूर ल्क ङ विक्रमे। (शूर, अदन्त चु, आ) दीर्घो। त, क—अशुशूरत। विक्रम उद्यमः। (रणे शूरयते यथेति हलायुधः। २४४)

१०८ । शठ ल्क } दुर्व्वाचि । (शठ, अदन्त चु, प । श्वठ,
१०९ । श्वठ ल्क } अदन्त चु, प ) शेषो वकारयुक्तः । त,
क—शठयति श्वठयति नीचः कुत्सितं वदतीत्यर्थः । रमानाथस्तु सम्यग्भाषणे इति मत्वा शठयति सम्यग्वदतीत्यर्थं इत्याह । सम्यग्भाषण इति जौमराः । सम्यग्भावे इत्येके ।

११० । शील ल्क अभ्यासेऽतिशायने । ( शील, अदन्त चु, प ) तालव्यादिः । अतिशायनमतिशयकरणम् । त, क—अशिशीलत् । उपधारणे इत्यन्ये । शीलय नीलनिचोलमिति जयदेवः । ( शीलयत्यात्मनोहितमिति हलायुधः । २४५ )

षमष्टम ल्क वैक्लव्ये सान्त्वसाम ल्क सान्त्वने ।

१११ । षम ल्क } वैक्लव्ये । (षम, अदन्त चु, प । ष्टम, अदन्त
११२ । ष्टम ल्क } चु, प ) द्वौ मूर्द्धन्यादी । षोपदेशपाठो भ्वादादीति दन्त्यत्वे कृतषकारत्वात् षत्वार्थः । त, क—सिषमयिषति, तिष्टमयिषति । एवं सर्व्वत्र । वैक्लव्यं विह्वलीभावः ।

११३ । सान्त्व ल्क } सान्त्वने । ( सान्त्व, अदन्त चु, प ।
११४ । साम ल्क } साम, अदन्त चु, प ) द्वौ दन्त्यादी । आद्यस्तमध्यो वकारोपधः । एतयोरजन्तसादित्वेऽपि दन्त्यादित्वस्य बीजं ष्टकसक म प्रतीघाते इत्यत्र द्रष्टव्यम् । सान्त्वनं प्रियकरणम् । त, क—सान्त्वयति सान्त्वापयति । अससामत् दीनं धनेन दाता । ( यः कामयति सामन्तः स्निग्धैरालोकनैश्च ता इति हलायुधः । ताः सीमन्तिनीः । २२३ )

संग्राम ङ ञ तक् युद्धे स्पृहत्केप्से साट ल्क तु ।
प्रकाशने सभाज ल्क सेवने प्रीतिदर्शने ॥

११४। संग्राम ङ अ त क् युद्धे। (संग्राम, अदन्त चु, आ, उ) त, क, ङ—संग्रामयते। अ—संग्रामयति, संग्रामयते। तस्थौ सिसंग्रामयिषुः शितेषुरिति भट्टिः। ३। ४७। ञित्त्वेनैवोभयपदसिद्धौ ङित्करणमफलवत्कर्त्तर्य्यात्मनेपदार्थम्। एवं सर्व्वत्र। किन्त्वेष आत्मनेपदीति प्राञ्चः। कदाचित् परस्मैपदार्थो अकारः।

११५। स्तूप त्कोप्ये। (स्तूप, अदन्त चु, प) त, क—स्तूपयति। द्वेषः प्राप्तुमिच्छा।

११६। साट त्क प्रकाशने। (साट, अदन्त चु, प) द्वितीयस्वरयुक्तदन्त्यसादिरयम्। त, क—असमाटत्।

११७। सभाज त्क सेवने प्रीतिदर्शने। (सभाज, अदन्त चु, प) त, क—अससभाजत्। (सभाजयति सज्जनानिति हलायुधः। सेवते इत्यर्थः। २६४। स्नेहात् सभाजयितुमेत्यदिनान्यमूनीत्युत्तरचरितम्)

स्थूल त्कङ् द्विंहणे सूत्र त्क ग्रन्थे सत्र तङ्क तु।
सम्बन्धे सन्ततौ सूचत्कपैशुन्ये स्वर त्क तु॥
आक्षेपे स्तेन तक् चौर्य्ये स्तोम त्क श्लाघने स्तनत्।
कामशब्दे सार तक् दौर्ब्बल्ये सुख त्क तत्क्रतौ॥

११८। स्थूल त्कङ् द्विंहणे। (स्थूल, अदन्त चु, आ) दीर्घो। त, क, ङ अतुस्थूलत। द्विंहणं वृद्धिः।

११९। सूत्र त्क ग्रन्थे। (सूत्र, अदन्त चु, प) दीर्घो, दन्त्यवर्गाद्यमध्यः। वेष्टने इत्यन्ये। त, क—सूत्रयति सूत्रापयति सूत्रेण इस्तं लोकः।

१२०। सत्र त_ङ्क सम्बन्धे सन्ततौ। (सत्र, अदन्त चु,

या ) इत्यवर्गाद्यमध्यः । सन्ततिर्निर्बोढक्रियेति भट्टमल्लः । त, क, ङ—सत्रयते सत्रापयते प्रतिज्ञां साधुः । सन्ततिविस्तार इति गोविन्दभट्टः ।

१२१ । सूच त्क पैशुन्ये । ( सूच, अदन्त चु, प ) दीर्घी । त, क—असुसूचत् कथां लोकः कथितवानित्यर्थ इति रमानाथः । पैशुन्यमन्तर्द्रोह इत्येके । ( १ )

१२२ । स्वर त्क आक्षेपे । (स्वर, अदन्त चु, प) वकारयुक्ता-दीरेफोपधश्च । (आक्षेपस्तिरस्कारः) स्वरयत्यतिदुष्टोऽपि न कञ्चन परिग्रहमिति हलायुधः । २२२ । ( न स्वरयति नाधिक्षिपति न भर्त्सयतीति यावत्, परिग्रहं परिजनं) त, क—सिस्वरयिषति । पञ्चमस्वरयुक्त इति चतुर्भुजः । सुरयति, सुसुरयिषति ।

१२३ । स्तेन तक् चौर्य्ये । ( स्तेन, अदन्त चु, प ) त, क—अतिस्तेनत धनं चौरः ।

१२४ । स्तोम त्क श्लाघने ( स्तोम, अदन्त चु, प ) श्लाघन प्रशंसा । त, क—अतुस्तोमत् कवि बुधः ।

१२५ । स्तन त्काभ्रशब्दे ( स्तन, अदन्त चु, प ) त, क—स्तनयति मेघः । (स्तनितं गर्ज्जितं मेघनिर्घोषे रसितादिचेत्यमरः)।

---

( १ ) पिशुन इह सूचकः पिशुनौ खलसूचकावित्यमरोक्तेः । पिशुनस्य भावः पैशुन्यं सूचकत्वं विज्ञापनमिति यावत् । तथाच-सञ्ज्ञासाञ्चेतना नाम हस्ताद्यैश्चार्थ सूचनेत्यमरः । कार्य्यविज्ञापनमित्यर्थः । एवं सूचनाव्यधनेऽदृष्टे गन्धनेऽभिनयेऽपि चेति मेदिनी । गन्धनं द्रोहणं । गन्ध कङ् दुर्ह्वि इत्यनेन निष्पादनात् । अभिनयं सङ्केतेन विज्ञापनमित्यर्थः । अतएव अधोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेश इति रघौ । एवं गोचरे वा विलग्ने वा ये यष्टारिष्टसूचका इति दीपिका । इत्यधिक पाठ ।

१२६। सार तक् दौर्ब्बल्ये ( सार, अदन्त चु, प ) रेफोपधः। त, क—अससारत्।

१२७। सुख त्क तरक्रतौ (सुख, अदन्त चु, प) तरक्रतिः सुखक्रिया। त, क—श्रीजयदेवकवेरिति गीतं सुखयतु केशवपदमुपनीतमित्यादि।

**स्फुट त्क स्वाद्विसरणे स्कन्द त्क तु समाहृतौ।**
**स्वन स्वम तक ध्वाने छिल्लोल तक दोलने॥**

१२८। स्फुट त्क विसरणे ( स्फुट, अदन्त चु, प ) विसरणं विकसनम्। त, क—स्फुटयति चम्पककलिका। अपुस्फुटत्।

१२९। स्कन्द त्क समाहृतौ (स्कन्द, अदन्त चु, प) दन्त्यवर्गतृतीयोपधोऽय, तच्चतुर्थोपधोऽयमिति केचित्। (१) त, क—स्कन्दयति स्कन्दापयति। अचस्कन्दत्।

१३०। स्वन तक } ध्वाने ( स्वन, अदन्त चु, प। स्वम,
१३१। स्वम तक } अदन्त चु, प) द्वौ वकारान्तःस्वादियुक्तौ क्रमात्। त, क—स्वनयति, स्वमयति।

१३२। छिल्लोल तक दोलने ( छिल्लोल, अदन्त चु, प ) अन्तःस्थतृतीयद्वयमध्यस्तदेनोपधश्चायम्। त, क—अचिछिल्लोलत् वायुर्लताम्।

**इत्यकारान्तधातूनां सद्वात्रिंशच्छतं मतम्।**
**तुल्यावयवानां धातूनां पृथक्पठितानामप्येकत्वे संख्यासङ्गतिः॥**

( अदन्तचुरादिषु अङ्कादिछिल्लोलान्ता धातवः परिगणनया त्रयस्त्रिंशदधिकशतसंख्यका भवन्ति। किन्तु स्पृश त्क चान्तौ स्पृशश्च

(१) उभयथैव कैश्चिद मन्यते इत्यधिक पाठ।

घान्ताविति गणद्वये धातुद्वयस्य तुल्यावयवत्वादेकत्वे समुदायस्य षड्विंशच्छतसंख्याया नासङ्गतिरित्याशयः )।

---

## आकारान्तवर्गः ।

**ख्याल् ख्यातौ कथने गार्लि स्तुतौ जन्मनि गाङ् गतौ।**
**घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने ॥**

१। ख्याल् ख्यातौ कथने ( ख्या, चदा, प ) ख्यातिः प्रसिद्धिः । ल—ख्याति गुणी प्रसिद्धः स्यादित्यर्थः । ख्याति साधुं कथा हरेः । तथाच ख्या प्रकथने, प्रकथनं प्रसिद्धिरिति गोविन्द-भट्टः । ख्या प्रकथने इति चतुर्भुजभुमरौ ।

२। गार्लि स्तुतौ जन्मनि ( गा, स्था, प ) र—वैदिकः। (१) लि—जगाति ।

३। गाङ् गतौ ( गा, भ्वा, आ ) ङ—गाते ।

४। घ्रा गन्धग्रहणे ( घ्रा, भ्वा, प ) जिघ्रति पुष्पं लोकः ।

५। ज्यागि जरायां ( ज्या, क्र्यादि, प्वादि, प ) (२) जरा—गतवङ्गवयोभाव । गि—जिनाति वृद्धः। जीनः, ज्यानिः। ( न जिनाति तेज इति हलायुधः । १ )

---

(१) वेदेष्वेवास्य प्रयोग इत्यर्थः ।

(२) परिभाषायां "गि" प्वादिरपि, ल्वत्व पपिगन्द्वात् क्र्यादिश्च" इत्युक्तं तेनैव जिनातीत्यादौ क्र्यादित्वात् श्नाप्रत्ययः । स प्वादिर्ल्वादिश्च इत्युक्त्या जीन इत्यादौ ल्वाद्योदिति इत्येष क्त्र न । ज्यानिरित्यत्र ल्वादित्वेनैवेट्सिद्धौ कृ गृ ज्यानेति निविधानद्वये पुनर्ज्योपहणं क्तिस्यानजातस्य ने कदाचित् स्यानिवत्वाभ्युपगमार्थं तेन ज्यानिरित्यत्र न पक्ष्मपाद्योरित्यनेन जिरादिः ।

प्वादीनां ह्रस्वो यथा—' पुनाति शोधे लुनाति छेदे स्तृणाति हिंसे जनाजनाहे ।

६। ज्ञा ग बोधने (ज्ञा, क्रा, प) ग—जानाति। "सन्दर्भ-शुद्धिं गिरां जानीते जयदेव एव" इत्यत्रानुपसर्गात् फलवत्-कर्त्तर्य्यात्मनेपदम्। "ततोऽनुजज्ञे गमनं सुतस्य" इत्यत्रानुशब्द-स्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात्। (शेषोदाहरणे कर्म्मणि प्रत्यय इत्यन्ये)।

**ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ।**
**ज्ञाक् प्रेरणे दाल लूनौ दा तु दाने डुदाञ्लि च॥**

६। ज्ञाकम् मारण आलोके निशाने तोषणे स्तुतौ (ज्ञा, चु, घटादि, म) क, म—ज्ञपयति, अज्ञपि अज्ञापि, ज्ञपं ज्ञपं, ज्ञापं ज्ञापं (ओणमोस्तु चैवेत्युक्ते) आलोकोदर्शनप्रेरणम्। निशानं तीक्ष्णीकरणम्। तोषणं तुष्टीकरणम्। ज्ञपयति शत्रुं मूरोमारयतीत्यर्थः। (यज्ञे संज्ञापयत्यजानिति हलायुधः। ६२।

भूजगि कम्मे वृजगि वरणे भृगि हृगि ख्यातौ हनने। मृगितु धातु कथितोहत्यां पृगितु रणे पूरणकत्याम्। मृगितु हिंसे वृगितु हत्या दृगि विदारे नृगितु नीत्याम्। भृगितु भर्त्से जूहङ्गले गृगितु शब्दे ज्या जीर्णत्वे। री रेषगतौ ऋगितु गत्यां लीगि ल्वीगि श्लेषणकत्याम्। व्रीगगिवरणे ल्वीगगि गत्या भ्लीगगिधातु कथितो भत्याम्। पञ्चाधिकविंशतिरिति गदिता प्वादिगणे धातव इह विदिता'। (कविकल्पद्रुमे स्वदन्तगणपाठे मृधातुर्नास्ति किन्तु शृस्वृगि हिंसे इत्यनयोर्व्याख्याने शेषोदन्त्यादिर्वकारोपध तदृच्छितोऽपीति केचिदित्युक्ते केषाञ्चिन्मते मृधातुरपि प्वादिरस्ति तन्मतमादायैव प्वादिगणस्य पञ्चविंशतिसंख्यासङ्गमनमिति सुधीभि र्भाव्यम्। केचित्तु धृधातुमपि प्वादिगणे पठन्ति तन्मतानुसारेण वा संख्यासङ्गति-रित्यपि चिन्त्यम।

पाणिनीयमते तु प्वादयो द्वाविंशति। तथाच—निष्ठातकारस्य नकारविधान-प्रसङ्गे ल्वादिभ्य।८।२।४४। इति सूत्रस्य वृत्तौ एकविंशतेर्लूञादिभ्य प्राग्व-दित्युक्तं भट्टोजीदीक्षितेन। क्र्यादिषु प्वादयो द्वाविंशति पठ्यन्ते इत्युक्तं तत्त्व-बोधिन्यां ज्ञानेन्द्रेण।

घान्ताविति गणद्वये धातुद्वयस्य तुल्यावयवत्वादेकत्वे समुदायस्य सह्यालिंगच्छतसंख्याया नासङ्गतिरित्याशयः )।

---

## आकारान्तवर्गः।

ख्याल् ख्यातौ कथने गार्लि स्तुतौ जन्मनि गाङ् गतौ।
घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने॥

१। ख्याल् ख्यातौ कथने ( ख्या, अदा, प ) ख्यातिः प्रसिद्धिः। ल—ख्याति गुणी प्रसिद्ध. स्यादित्यर्थः। ख्याति साधुं कथा हरेः। तथाच ख्या प्रकथने, प्रकथनं प्रसिद्धिरिति गोविन्द भट्टः। ख्या प्रकथने इति चतुर्भुजजमरौ।

२। गार्लि स्तुतौ जन्मनि ( गा, ह्वा, प ) र—वैदिकः। (१) लि—जगाति।

३। गाङ् गतौ ( गा, भ्वा. आ ) ङ—गाते।

४। घ्रा गन्धग्रहणे ( घ्रा, भ्वा, प ) जिघ्रति पुष्पं लोकः।

५। ज्यागि जरायां ( ज्या, क्र्यादि, प्वादि, प ) (२) जरा—गतवङ्कवयोभाव। गि—जिनाति वृद्धः। जीनः, ज्यानि। ( न जिनाति तेज इति हलायुधः। ? )

---

(१) वेदेष्वेवास्य प्रयोग इत्यर्थः।

(२) परिभाषायां 'गि प्वादिरपि, अत्र व्यपिमन्दात क्र्यादिश्च' इत्युक्तं तेनैव जिनातीत्यादौ क्र्यादित्वात् श्नाप्रत्यय। स प्वादिर्ल्वादिश्च इत्युक्त्या जीन इत्यादौ ल्वादीपूर्दिति ह्रस्वेण क्नस्य न। ज्यानिरित्यत्र ल्वादित्वेनैवेट्सिद्धौ कृ गॄ ज्यानेति निषेधानघाले पुनर्ज्याग्रहणं क्तिप्रत्ययजातस्य ने कदाचित् ग्लानिवज्ज्यानग्री-कारार्थं तेन ज्यानिरित्यत्र न पदस्यपाद्योरित्यनेन निर्दिति।

प्वादीनां संग्रहो यथा—"पूञगि मोचे लूञगि छेदे कूञगि हिंसे स्तृञाच्छादे।

६। ज्ञाग बोधने (ज्ञा, क्र्या, प) ग—जानाति। "सन्दर्भशुद्धिं गिरा जानीते जयदेव एव" इत्यत्रानुपसर्गात् फलवत्कर्त्तर्य्यात्मनेपदम्। "ततोऽनुजज्ञे गमनं सुतस्य" इत्यत्रानुशब्दस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात्। (शेषोदाहरणे कर्म्मणि प्रत्यय इत्यप्यन्ये)।

ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ।
ज्ञाक् प्रेरणे दाल लूनौ दा तु दाने डुदाञ्लि च॥

६। ज्ञाक्म मारण आलोके निशाने तोषणे स्तुतौ (ज्ञा, चु, घटादि, प) क, म—ज्ञपयति, अजिज्ञपि अज्ञापि, ज्ञपं ज्ञपं, ज्ञापं ज्ञापं (ञोणमोस्तु र्घञ्चेत्युक्तेः) आलोकोदर्शनप्रेरणम्। निशानं तीक्ष्णीकरणम्। तोषणं तुष्टीकरणम्। ज्ञपयति शत्रुं शूरोमारयतीत्यर्थः। (यज्ञे सञ्ज्ञापयत्यजानिति हलायुधः। ६८।

---

भूञगि कम्पे वृञगि वरणे ऋृगि स्तृगि स्यातौ हनने। मृगित्तु धातु कथितोहत्यां पृगित्तु रक्षे पूरणकत्याम्। सृगित्तु हिंसे वृगित्तु हत्या दृगि विदारे नृगित्तु नीत्याम्। भृगित्तु भर्त्से जृहृद्भत्ते गृगित्तु शब्दे ज्या जीर्णत्वे। री रेषगतौ क्षृगित्तु गत्यां नीगि ल्पीगि क्षेपणकत्याम्। व्लीगगिवरणे ल्वीगगि गत्यां भ्लीगगिधातु कथितो भयाम्। पञ्चाधिकविंशतिरिति गदिता' प्वादिगणे धातव इह विदिता '। (कविकल्पद्रुमे स्वदन्तगणपाठे सृधातुर्नास्ति किन्तु शृम्वृगि हिंसे इत्यनयोर्व्याख्याने शेषोदन्त्यादिर्मकारोपध तद्रूहितोऽपीति केचिदित्युक्ते केषाञ्चिन्मते सृधातुरपि प्वादिरस्ति तन्मतमादायैव प्वादिगणस्य पञ्चविंशतिसंख्यासङ्गमनमिति सुधीभिर्भाव्यम्। केचित्तु धृधातुमपि प्वादिगणे पठन्ति तन्मतानुसारेण वा सङ्ख्यासङ्गतिरित्यपि चिन्त्यम्।

पाणिनीयमते तु प्वादयो द्वाविंशति। तथाच—निष्ठातकारस्य नकारविधानप्रसङ्गे, ल्वादिभ्य। ८।२।४४। इति सूत्रस्य वृत्तौ एकविंशतेर्लूञादिभ्य प्रागवदित्युक्त भट्टोजीदीक्षितेन। क्र्यादिषु प्वादयो द्वाविंशति पठ्यन्ते इत्युक्तं तत्त्वबोधिन्या ज्ञानेन्द्रेण।

चिनत्तीत्यर्थः) क्षपयति कूर्मं कामिनी पिङ्गान् दर्शयतीत्यर्थः। क्षपयति खड्गं कर्मकारः शानयतीत्यर्थः। क्षपयति गुरुं शिष्यस्तोषयतीत्यर्थः। स्तुतिः केचिन्न मन्यते। आलोको ज्ञानप्रेरणमित्यनुन्यासरचितौ। अतएव क्रमदीश्वरोऽपि जानातेर्घटादित्वं विभाषया मन्यते। तेन क्षपयितुं बाधयितुमिच्छमाणो ऽक्षोभ्रमान इति पाणिनीयदृक्तौ ज्ञानप्रेरणेऽपि ऋक्षे सनि क्षीप्सामान इति प्रसिद्धम्। एवं, विज्ञप्तिरेषा मम जीवधन्यो इत्यादिषु च विज्ञापनमेवार्थः।

६। ज्ञा वा प्रेरणे (ज्ञा, चु, प) प्रेरणमिह नियोजनम्। क—ज्ञापयति भृत्यं स्वामी नियुङ्क्ते इत्यर्थः। (आज्ञापय ज्ञातविशेष पुंसामिति कुमारसम्भवम्। ३। ३)

७। दा ल लूनौ (दा, अदा, प) ल—दाति। लूनिश्छेदः। केचित्तु दा प लवने इति पठित्वा पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि मन्यन्ते। स्वमते तु पित्त्वाभावाद्दासंज्ञाया दीयते इत्यादौव। (दाति दारिद्र्यमर्थिनामिति हलायुधः। २४)

७। दा तु दाने (दा, भ्वा, प) दान दाने इति प्रसिद्धोऽयं, अस्यैव यच्छादेशः। यच्छति। (दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनमित्यादि)।

७। डुदाञ्लि च (दा, ला, उ) डु—दत्त्रिमम्। ञ, लि—ददाति दत्ते। चकाराद्दाने।

दरिद्रा जलु दुर्गत्यां द्रा ल क्षमे पलायने।
डु धाञ् लि धारणे पुष्टौ दाने धाग्नियुतौ ध्वनौ॥

८। दरिद्रा जलु दुर्गत्यां (दरिद्रा, अदा, प) दुर्गति-

रकिञ्चनीभावः। च, लु—उपर्य्युपरि पश्यन्तः सर्व्व एव दरिद्रति। (दरिद्रतीत्यत्र जक्षादित्वात् द्विकाले अन्तोऽद्वेरित्यनेन अदादेशः, क्षमते क्षपादेः प्रयोजनं नास्तीत्युक्तं प्राक्)।

९। द्राल स्वप्ने पलायने (द्रा, अदा, प) स्वप्नो निद्रा। निपूर्व्वक एव निद्रायामिति रमानाथः। ल—निद्राति। निद्रालुः। द्राति चौरः पलायते इत्यर्थः। (न निद्राति च सन्ध्ययोरिति हलायुधः। २५४)

१०। डुधाञलि धारणे पुष्टौ दाने (धा, ह्वा, उ) डु—ड्वित्रिमम्। ञ, लि—दधाति वक्ते। धारणं धरणं (धारणमित्यस्य आन्तत्वभ्रमनिराशार्थमिदं व्याख्यानम्) दाने—द्विपताविद्धितं त्वयाथवा इति किराते विद्धितं दत्तमित्यर्थः। (पुष्टौ दधतुर्भुवनद्वयमिति रघौ। १। २६)

११। धाग्नियुतौ ध्वनौ (ध्मा, भ्वा, प) युतिरिह वाक्ङ्त्यान्न दीर्घः। अग्नियुतिरग्निसंयोगः। ध्वनिः शब्दोत्पत्तिहेतुभावः। धमति स्वर्णं वणिक् अग्निसंयुक्तं करोतीत्यर्थः। धमति शङ्खं जनः सशब्दं करोतीत्यर्थः। अग्निफुत्कृतौ च, मुखेनैव धमेद्वह्निमिति। (नाड़ीन्धमः स्वर्णकार इत्यमरः। शङ्खान् दध्मुः पृथक् पृथगित्यादि)।

घ्रा ल गन्धे ध्मा ल पूर्त्तौ पा पाने पा ल रक्षणे।
भा लृप दीप्तौ मा ङ्लि शब्दे मा लृच मानेऽथ मा ङ्य च॥

१२। घ्राल गन्धे (घ्रा, अदा, प) ल—घ्राति। (मांसमघ्रासीदिति भट्टिः। १५। ६)

१३। प्राल पूर्त्तौ (प्रा, चदा, प) ल—प्राति घटं जलेन लोकः। (पूर्त्तिः पूरणम्)।

१४। पा माने (पा, भ्वा, प) चस्यैव पिवादेयः, पिवति पयः पान्यः।

१४। पाल रक्षणे (पा, चदा, प) ल—पाति।

१५। भाल्प दीप्तौ (भा, चदा, प) ल—भाति। प—भा (भीपिचिन्तीत्यनेन पित्त्वात् ङप्रत्ययः) (हिमाद्रिटङ्कादिव भान्ति यस्यामिति भट्टिः। १। ८)

१६। माङ्लि शब्दे (मा, ह्वा, चा) ङ, लि—मिमीते (शब्दायते दुन्दुभिरित्यर्थः। परत्र माल्च माने इत्यत्र चकारेणास्यापि परिमाणार्थत्वमुक्तम्। तथाच—पुरःसखीनाममिमीत लोचने इति कुमारसम्भवम्। ५। १५)

१६। माल्च माने (मा, चदा, प) ल—माति भूमिं नलेन राजा। न माति मानिनो यस्य यशस्त्रिभुवनोदरे इति हलायुधः। ७६। (अयं धातुः परिमाणकरणार्थे सकर्म्मकः परिमितीभावार्थे चाकर्म्मकः। तथाच—ममौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदइति माघः। १। २३)।

१६। अथ माङ्य च (मा, दिवा, चा) ङ, य—मायते। चकारात् माने।

म्नाभ्यासे याल् गतौ रालदाने लाल् च ग्रहेऽथ वाक्।
सुखाप्तिगतिसेवासु स्याद्दाल् गमनहिंसयोः॥

१७। म्नाभ्यासे (म्ना, भ्वा, प) अभ्यासः पौनःपुन्येनानुशीलनम्। मनति सन्ध्यां ब्राह्मणः (आम्नायते सम्यगभ्यस्यते

मुनिभिरसावित्याम्नायो वेद इत्याम्नायशब्दटीकाया भरतः। क्वचिदन्यार्थोऽपि। तथाच—त्वामामनन्ति प्रकृतिमिति कुमार-सम्भवम्। २। १३)।

१८। याल् गतौ (या, अदा, प) ल—याति।

१९। राल दाने (रा, अदा, प) ल—राति।

१९। लाल् च ग्रहे (ला, अदा, प) ल—लाति। चकारात् राल च (राधातोरपि ग्रहणार्थत्वमित्यर्थः) ग्रहो ग्रहणम्। (ताम्रालासीद्वियद्गतामिति भट्टिः। १५। ५३)

२०। अथ वाक् सुखाप्तिगतिसेवासु (वा, चु, प) क—वापयति। (सुखाप्तिरुपभोगः)।

२०। स्वाहाल् गमनहिंसयोः (वा, अदा, प) श्रोद्यादि-रण्ययमित्येके। गमनमिह वायुकर्तृकमेव। ल—वाति वायुः (न वाति वायुस्तत्पार्श्वे तालवृन्तानिलःविकमिति कुमार सम्भवम्। २। ३५) हिंसनं सूचनमिति चतुर्भुजः।

आल् खेदे श्रालृम पाके जिघ्रास्याने प्याल्शोधने।
श्रोहाक्लित्याग श्रोहाङ्लिगतावान्तास्त्रिरष्टधा॥

२१। आल् खेदे (श्रा, अदा, प) रेफयुक्तखालध्यादिः। ल—श्राति। (१)

२१। श्रालृम पाके (श्रा, अदा, घटा, प) रेफयुक्तखाल-व्यादिः। ल—श्र ति। (श्राति श्रेष्ठं हविरभिमतं श्रोत्रियाणां गृहेष्विति हलायुधः। १९) म—श्रपयति।

---

(१) श्रौ श्रापयति। तथाच "पाकाद्न्यत्र श्रापयति परमं भर्त्यं स्वामी।

२२। ञिष्ठा स्थाने (स्था, भ्वा, प) ञि—स्थितः अस्तीत्यर्थः। स्थानं गतिनिवृत्तिः। (स्थिरीभाव इत्यपि) तिष्ठति साधुधर्म्मे। उष्ठतस्तिष्ठमान इति वीरचरिते प्रकाशार्थे आत्मनेपदविधानात् शानः। अथवा ताच्छील्ये शतुः शानः।

२३। ष्णाल शोधने (स्ना, अदा, प) मूर्द्धन्यादिरयं, (षोपदेशोऽयं) दन्त्यादिरिति केचित्। ल—स्नाति गङ्गायां धीरः। अनुपसर्गस्य णौ ग्लास्नेत्यादिना ह्रस्वो वा, स्नपयति स्नापयति। सोपसर्गस्य तु प्रस्नापयति।

२४। ओहाक्लि त्यागे (हा, ह्वा, प) ओहाङि त्यागे इति प्रसिद्धोऽयम्। यत्र हाक इति ग्रहणं तत्रास्यैव विषयः, तेन हामागेहाक इत्यादिसूत्रेणास्य हीयते इत्यादि। अन्यस्य हायते इत्यादि। ओ—हीनः। लि—जहाति। (जहातु नैनं कथमर्थसिद्धिरिति भारविः। १। १४। हातव्योऽयमसार एव विरसः संसार इत्यादिक सर्व्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मन इति शान्तिशतकम्)। अकर्म्मकश्चायं। यथा स्वार्थाद्धीनः, एवं जहाति अपैति स्वार्थो यस्मादिति जहत्स्वार्था वृत्तिः।

२५। ओहाङि गतौ (हा, ह्वा, आ) ओ—हानः। ङ, लि—जिहीते। (उपाजिहीथा न महीतलं यदीति माघः। १। ३७। धातूनामनेकार्थत्वादुद्वमनार्थेऽपि, तथाच—भोगिभिरग्निस्फुलिङ्गमुज्जिहाना इति भट्टिः। ३। ४७)।

आन्तास्थिरटपा।

आन्ताः आकारान्ता धातवस्थिरटपा चतुर्विंशतिः।

---

अवैकार्थत्वादस्य गतौ वर्त्तते इति बोद्धव्यम्। [illegible]

( पूर्ववत् तुल्यावयवाना धातूनामेकरूपत्वे सत्यामसिद्धतिरित्यनु-सन्धेयम् )।

---

## इकारान्तवर्गः।

**इ इ ल् गतावधी ल् स्मृत्यामधीङ्ल्ध्ययने किलि।**
**ज्ञाने चि नृग प हिंसायां चि क्षयैश्वर्य्ययोः चिग।**
**वासगत्योश्चिरिर्न् हिंसे, चिन्चिञ्चित्यान्तुचिक्मिच।**

१। इ गतौ ( इ, भ्वा, प ) अयति। ( अयमुदयति मुद्रा-भञ्जनः पद्मिनीनामित्यादि )।

१। इल् गतौ ( इ, अदा, प ) ल—एति। पृथक्पाठ-सामर्थ्यात् पूर्व्वो न लित्। (१) शेषस्तु इ न गताविति प्रसिद्धः। चिनोऽध्ययनावित्यादिषु ग्रहणमस्यैव। ( उदेति सविता ताम्रस्ताम्र एवास्तमेति च इति साहित्यदर्पणम्। चतुरस्रोयनिधोनिरायत इति भारविः। २। २३। ततोऽभ्यगाद्गाधिसुत. चितीन्द्रमिति भट्टि )। १। १७ )।

१। अधी ल् स्मृत्या ( अधि-इ, अदा, प ) अधिरुपसर्गः। अधिग्रहणमन्यपूर्व्वस्य केवलस्य च प्रयोगनिषेधार्थम्। एवं सर्व्वत्र। ल—अध्येति तव लक्ष्मण ( तव त्वामित्यर्थः स्मृत्यर्थदयेशां देति कर्म्मणि षष्ठीविधानात् ) इक स्मरणे इति प्रसिद्धोऽयं। इस्मादिङ्के इत्यनास्यैव ग्रहणम्।

---

(१) अस्यायमाशयः—परोऽस्तु अन्य पूर्व्वापेक्षयाद्व्यवर्द्धमित्यरे पूर्व्वार्थेन इधातोरपि लकारानुबन्धित्व भवितुमर्हति, किन्तु इ प्रथमार्थे इत्यनयाः-देव न तथात्वमिति।

१। अधी ङ् ल् अध्ययने (अधि—इ, अदा, आ) अध्ययनमर्थतः शब्दतश्च गुरुतो ग्रहणात्। ङ, ल—वेदमधीते विप्रः। (सोऽध्यैष्ट वेदानिति भट्टिः। १। २)।

२। किं लि ज्ञाने (कि, ह्वा, प) र—वैदिकः। लि—चिकेति।

३। क्षि नगप हिंसायाम् (क्षि, स्वा, क्र्या, प) न—क्षिणोति। ग—क्षिणाति। (क्षिणाति दुरितं हृष्टा इति हलायुधः। ११०) प—क्षिया। आयुः परं क्षीयते इति तु कर्मकर्त्तरि साध्यम्।

३। क्षि क्षयैश्वर्य्ययोः (क्षि, भ्वा, प) क्षयति पापम्। (१)।

३। क्षि श वासगत्योः (क्षि, तुदा, प) श—क्षियति। (क्षियन्ति निवसन्त्यस्यामिति क्षितिः, क्षि श वासगत्योराधारे क्तिरित्यमरटीकायां भरतः। यशः क्षियति रोदस्योर्यस्य धर्म्मरतात्मन इति हलायुधः। ११२)।

४। चिरिं हिंसे (चिरि, स्वा, प) रेफोपधः। र—वैदिकः। न—चिरिणोति।

---

(१) क्षयति व्याधिरौषधात्। क्षयति पापं गङ्गा इति तु अन्तर्भूतण्यर्थत्वादिति कामधेनुः।

ऐश्वर्यं प्रभुभाव आयत्तीकरणमिति यावत्, तथाच—आसीन्महीक्षिता-माद्य इत्यस्य टीकायां महीक्षिदितिशब्दव्युत्पादनाय महीं क्षयन्ति ईशते इति महीक्षितः क्षितीश्वराः, क्षिधातोरैश्वर्य्यार्थात् क्विप् तुगागमश्चेति मल्लिनाथ। तत्र क्षियन्तीति लिपिकरप्रमादपाठ। तौदादिकस्य क्षिधातोरैश्वर्य्यार्थाबोधकत्वात्। ऐश्वर्यशब्दस्याधीनकरणरूपोऽर्थस्तु ईशधातो व्याख्याने दुर्गादासेन लिखित इति।

५। चि न ञ चित्यां ( चि, स्वा, उ ) चितिश्चयनं राशीकरणमिति यावत्। न, ञ—चिनोति चिनुते। ( फलान्यवाचिनोद्वृक्षानिति मुग्धबोधम्। अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषत इति भारविः। २। १९ )।

५। चि ञ चित्यां ( चि, भ्वा, उ ) ञ—चयति चयते धनं लोकः।

५। चि क्मि च ( चि, चु, प ) क, मि—चययति चाययति। स्मरते तु चपयति चापयतीत्यपि। (१) चकारात् चित्याम्।

## जिरिर्न हिंसे ज्र्यभिभवे जि जये चाथ धिश् छतौ।

६। जिरिर्न हिंसे ( जिरि, स्वा, प ) रेफोपधः। र—वैदिकः। न—जिरिणोति।

७। ज्र्यभिभवे (ज्रि, भ्वा, प) रेफोपधः। ज्रयति शत्रुं बली।

८। जि जये च ( जि, भ्वा, प ) जय उत्कर्षः स्वीकारश्च। उत्कर्षेऽकर्मकः, यथा—राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलय इत्यादि। स्वीकारे—मखैरसंख्यैरजयत् सुरालयमिति कादम्बरी। चकारादभिभवे च, जयति शत्रुं बली। अनभिधाना-

---

(१) परिभाषायां 'मितां' इत्यनेन मिकारानुबन्धधातूनां विभाषया घटादित्वमुक्तं तेनैव ह्रस्वविकल्पो बोध्यः। प्रक्रियारत्नमतानुसारेण नित्यघटादित्वात् इकारस्याकारपक्षेऽपि चपयतीत्येवमेव। एते धातवो विकल्पेन घटादयो भवन्ति। यथा—चनुमि हिंसे गतौ, चिकुमि चयने, फणमिण्गतौ। ध्वनुमि शब्दे, स्तनस्तनुमि रवे, स्वनमि तंसने। त्रपूष मिङ लज्जायां, यमकुमि परिवेशने। तदभावे, दलमिभेदे, स्खलमि स्खालने चये। मिल ष्णसु निवासे स्नादयो चल मिङस्मृतौ। इति त्रयोदशाख्याता धातवो वा घटादय इति।

दस्मात्तवन्तयोः प्रयोगाभावः किन्तु तयोः स्थाने तिवन्तौ इति। किञ्च तुपःस्थाने तातङ् दृश्यते, यथा—भावगम्यलयः कोऽपि जयताद्वाणगोचर इत्यादि। (१)।

८। षथ धि श् धृतौ ( धि, तुदा, प ) श—धियति।

**पि श् गतौ डु मि ञन् क्षेपे रि श् गतौ श्रि ञ सेवने।**
**शि नञ् निशाने द्रायोश्वीर्गतिवृद्ध्योः ष्मि ङ स्मिते॥**

१०। पि श् गतौ ( पि, तुदा, प ) श—पियति।

११। डु मि ञन् क्षेपे ( मि, स्वा, उ ) डु—( मानाज्जात-मिति वाक्ये ) मित्रिमं। ञ, न—मिनोति मिनुते।

१२। रि श् गतौ (रि, तुदा, प ) रेफादिः। श—रियति।

१३। श्रि ञ सेवने ( श्रि, भ्वा, उ ) ञ—श्रयति श्रयते। ( शैलं न्यश्रिश्रियद्वेति भट्टिः। ६। १७ )।

१४। शि नञ् निशाने ( शि, स्वा, उ ) निशानमिति श्यतेरूपं, शानञतेजे इत्यस्य नित्यसनन्तत्वात्। अनेकार्थत्वा-न्निशानमिह तीक्ष्णीकरणम्। न, ञ—शिनोति शिनुते खड्गं कर्म्मकारः। ( निशिनोत्यसिपुत्रिकामिति हलायुधः। ७६ )।

१५। टु ऐ चो श्वि दृर् गतिवृद्ध्योः ( श्वि, भ्वा, प ) तालव्यादिः। टु—श्वयथुः। ऐ—शूयात्। चो—शूनः। दृर्—अश्वत् अश्वयीत्। ( रुदतोऽशिश्वियच्चक्षुरास्यं हेतोरवाश्वयीदिति भट्टिः। ६। १८ )।

१६। ष्मि ङ स्मिते ( ष्मि, भ्वा, आ ) मूर्द्धन्यादिः।

---

(१) एवमेव काव्यकामधेनौ।

(षोपदेशोऽयं, सिष्मिये इत्यादौ षत्वार्थः षोपदेशपाठः।) स्मितमीषद्धास्यं। ङ—स्मायते वधूः। (विपूर्व्वको विस्मयार्थः—रामं विस्मापयेत क इति भट्टिः। ५। ५८) विस्मापयन् विस्मयनीयकीर्त्तिमिति रघौ विस्मापनं विस्मापः (विस्मयोत्पादनमित्यर्थः) पश्चात् तं करोतीति णौ शत्रन्तम्। (१)।

**षिञ् गञ् बन्धे स्मिकङ्नादरे हिन् वर्द्धने गतौ।**
**एकोनविंशतिरमी इकारान्तास्तु धातवः॥**

१७। षि ञ् गञ् बन्धे (षि, स्वा, क्र्या, उ) स्वर्द्यादिः। (षोपदेशोऽयं) ञ, ञ—सिनोति सिनुते। ग, ञ—सिनाति सिनीते।

१८। स्मि कङनादरे (स्मि, चु, आ) इन्ध्यादिः। क, ङ—स्माययते।

१९। हि न् वर्द्धने गतौ (हि, स्वा, प) गतिरिहान्तर्भूतणार्थत्वाद्गतिप्रेरणम्। न—प्रहिणु स्वसूनुमिति भट्टिः। १। २१। वर्द्धने विरलप्रयोगः।

(अमी इकारान्ता धातव एकोनविंशतिरेकोनविंशतिसंख्यया संख्येया इत्यर्थः)।

---

(१) काव्यकामधेनावप्येवम्। अतेदमनुमीयते यदस्य श्लोकस्य प्राचीनपाठ एवमेवासीत्। अधुना तु विस्मापयन् विस्मितमाकाशगतानित्येवं समीचीनपाठ एवास्ति। विस्मयनीयकीर्त्तिमिति प्राक्तनपाठे विस्मयविषयीभूता कीर्त्तिरित्यर्थकत्वे विषयताख्यफलमादाय सकर्म्मकत्वमित्यनुसन्धेयम्।

## ईकारान्तवर्गः ।

ई ल कान्ति-गति-व्याप्ति-क्षेप-प्रजन-खादने ।
ई ङ् य गत्यां क्षी ञ हिंसे ङ् क्री ञग् द्रव्यपर्य्यये ॥

१ । ई ल कान्ति गति व्याप्ति क्षेप प्रजन खादने (ई, अदा, प) कान्तिरिच्छा, प्रजनोगर्भग्रहणम् । ल—एति गौर्गर्भं गच्छा-तीत्यर्थः । नहि तरणिरुदीते दिक्पराधीनवृत्तिरिति गत्यन्तता-न्नित्यत्वादात्मनेपदम् । धातुरयं कैश्चिन्नमन्यते ।

१ । ई ङ् य गत्या (ई, दिवा, आ) ङ, य—ईयते । मोदीयन्ते च विद्विष इति हलायुधः । २३ । (रियुतिमिर-मुदस्योदीयमानं दिनादाविति भारविः । १ । ४६ ) ।

२ । क्षी ञ हिंसे (क्षी, भ्वा, उ) ञ—क्षयति क्षयते ।

३ । ङ् क्री ञग् द्रव्यपर्य्यये (क्री, क्रा, उ) पर्य्ययः परि-वर्त्तः । ङु—क्रीतिमम् । ञ, ग—क्रीणाति क्रीणीते धान्यं धनेन लोकः । (दत्त्वा ग्रस्तप्रहारश्च तेषां क्रीणाति यः श्रियमिति हलायुधः । ११० ) ।

ज्री गि कि ज्यान ञो डी ङ्य गतौ डीङ् च नभोगतौ ।

४ । ज्री गि कि ज्याने (ज्री, क्रा, चु, भ्वा, प) गि—ज्रिणाति, ज्रीणः ज्रीणिः । कि—ज्रायति ज्रयति । गिका-भ्यामेव पाक्षिकचुरादित्वे सिद्धे किपाठो भ्वादित्वार्थः । ज्यान गतवङ्क्वयोभावः ।

५। श्रो डी ङ् य गतौ (डी, दिवा, श्रा) श्रो—डीनः। ङ, य—डीयते।

५। डी ङ् च नभोगतौ (डी, भ्वा, श्रा) ङ—डयते पक्षी। श्रस्यापि निष्ठाया डीन इति कातन्त्राः। धातुपारायणिकास्तु इमनिषेधे (इमनिषेधस्थले) श्रोदनुबन्धडीङोग्रहणादिमि यक्तत्यादृगुणे डयित इत्याहुः। गोयीचन्द्रोऽपि डयितः डयितवानित्युदाजहार। स्वमते तु डीत इत्येव। चकारात् श्रोडीङ्य च (नभोगत्यर्थक इत्यर्थः)।

## णी ञ प्रापणे श्रो दी ङ्य क्षये दीधीङ्क्षुलु देवने।
## दीप्तावोधीङ्य श्राराधे नादरे प्रो ञ तर्पणे॥

६। णी ञ प्रापणे (णी, भ्वा उ) णोपदेशपाठो नादित्वेन प्राग्वन्न इति फलार्थः। प्रणयति। एवं सर्वत्र। प्रापणमिह अग्रन्तस्य रूपम्। तथाच—सृणाति लम्भयति च वहत्यपि नयत्यम् इति क्रियानिर्घण्टः। ञ—नयति नयते गां वनं गोपः प्रापयतीत्यर्थः।

७। श्रो दीङ्य क्षये (दी, दिवा, श्रा) श्रो—दीनः। ङ, य—दीयते। (दीयन्ते प्रत्यहं यस्य दुरितानि तपस्विन इति हलायुधः। ८४)।

८। दीधीङ्क्षुलु देवने दीप्तौ (दीधी, श्रदा, श्रा) दीर्घमध्यः। र—वैदिकः। क्ष—श्रदीधयुः, बहुलं ब्रह्मणीति परस्मैपदे श्रनुस्मिद्देरिति श्रन उस्, गुरुस्यत्ताामिति गुणः (१)।

---

(१) ननु दीधीवेव्योर्नेतुरित्यनेन गुणनिषेधे कथमत्र गुण इति चेत् सत्यं दीधीवेव्योर्नेणुरित्यनेन गुणनिमित्ते (सति) सामान्येन प्राप्तो गुण एव निषिध्यते।

९। ध्यो धीङ्य आराधेऽनादरे (धी, दिवा, आ) अनादर इति कातन्त्रादौ। धो—धीनः। ङ, य—धीयते खलं लोकः।

१०। प्री ञ तर्पणे (प्री, भ्वा, ङ) ञ—प्रयति प्रयते। (तर्पणं सन्तुष्टीकरणं, तथाच—प्रयते च भृत्यानिति हलायुधः। ७)।

प्रीक्च प्री गञ कान्तौ च प्रीङ् य प्रीतौ च पीङ् यतु।
पाने ञि भी लि भीत्यां भी ग गिभ्रत्याञ्च मीङ् यञो।
मी ञ्ग वधे मी कि गत्यां मत्यां री गि रवे गतौ॥

१०। प्रीक् च (प्री, चु, प) चकारात् तर्पणे। क—यं प्राययन्ति कविसूक्तिरसायनानीति हलायुधः। ७। प्रीणयत्यपीति केचित् (१)।

१०। प्री गञ कान्तौ च (प्री, क्रया, ङ) ग, ञ—प्रीणाति प्रीणीते। चकारात् तर्पणे। तर्पणमिह प्रीतीभावः प्रीतीकरणञ्च। प्रभुः प्रीणातु विश्वभुगित्यादि। प्रीणाति बान्धवजनानिति हलायुधः। ७।

१०। प्री ङ य प्रीतौ च (प्री, दिवा, आ) प्रीतिरिह प्रीतीभावः। तथाच—यः प्रीयते प्रणयिष्विति हलायुधः। ७। (प्रकाममप्रीयत यज्वना प्रिय इति माघः। १। १७) चकारात् कान्तौ च।

११। पी ङ्यतु पाने (पी, दिवा, आ) ङ, य—पीयते।

---

पुरुषसंख्यामित्यनेन चान स्थाने जातत्वादगुणे ऽपि चप्राप्तौ गुणो विधीयते इति न विरोध इति कामधेनुः।

(१) प्रीधातो स्वार्थे ञौ कृते प्रीधूञोर्नुक् वेति नकि प्रीणयति पक्षे प्राययतीति केषाञ्चिन्मतमिति भावः)।

१२। जि भी लि भीत्यां ( भी, स्रा, प ) जि—भीतोऽस्ति। लि—बिभेति।

१३। ञ्रीगगि भत्याञ्च ( ञ्री, क्रा, प ) ( भतिः पोषणं ) ग—श्रीणाति श्रीतः, श्रीतिः। गि—श्रिणाति, श्रीणाः, श्रीणिः। गिलेनैव क्रयादित्वसिद्धौ ग करणं प्वादित्वविकल्पार्थम्। चकारात् भीत्याञ्च।

१४। मीङ य घो वधे } (मी, दिवा, था) मी, क्रा, उ )
१४। मीञग् वधे } ङ, य—मीयते। घो—मीनः (मीयते हिंस्यते इति मीन इति मीनशब्दव्युत्पत्तौ भरतः) ञ ग—मीनाति मीनीते। धातुभेदे ङञोरसङ्कर इति वोपदेवः। एवं सर्वत्र। (१)

---

(१) मी ङ य, मी ञ ग इत्युभयोर्यपि गुणसाधनयोग्यप्रत्यये च परे भिम्योर्यव्णौ डाखलनि नियस्तु वेति सूत्रेण डादेशे कर्तव्ये मतभेदो दृश्यते तथाच मुग्धबोधटीकाकारेषु दुर्गादासः—"डुमि ञ न क्षेपे, मी ङ य घो, मी ञ ग् वधे, मी कि गत्यां विशेषानभिधानात् एषां यपि गुणसाधनयोग्यप्रत्यये च डा स्या"दित्याह। एतन्मते मी ङ य, मी ञ ग इति द्वाभ्यामेव यपि प्रमाय, ण्यां यथाक्रमं च्यमाक्त चमामीत्, ञौ मापयतीत्येवं पदानि भविष्यन्तीति।

गङ्गाधरस्तु "अत्र तु दिवादिमीङो न ग्रहणं तदनन्तरसूत्रकरणात्। अतएव दिवादेर्नेति पाणिनीयाः। केषाञ्चिन्मते तस्यापि ग्रहण"मिति व्याचचक्षे। एतन्मते मी ङ य इत्यस्मात् यपि प्रमीय, ण्यां चमेष्ट, ञौ मापयतीति।

कार्त्तिकेयसिद्धान्तेन तु "डुमि ञ न क्षेपे इति स्वादेः मी ङ य घो मीञग वधे इत्यनयोर्दिवादिक्रयादोश्च डास्या"दित्येवं व्याख्यातम्। तर्कवागीशेनाप्ययमेवावलम्बितम्। भरतमल्लिकेन स्वकृतद्रुतबोधव्याकरणस्य स्वकृतटीकायां "मिम्योरिति डुमि ञ प्रक्षेपणे स्वादिः मीञ हिंसायां क्रयादिः अनयोर्ग्रहणं मतु मीङ वधे इत्यस्य दिवादेः, मीनाति मिनोति दीडामिति पाणिनीयानां निर्देशात्, मिमीओर्मेति संचिप्तसारसूत्रस्य अनुबन्धवतो निर्देशात् न मीङ-

१४ । मी कि गत्यां मत्या ( मी, चु, भ्वा, प ) ( मतिर्बोधः ) कि—माययति (१) मयति । ( न चानुमाययत्यन्यस्तस्य यच्चेतसि स्थितमिति हलायुधः । १४३ । )

१५ । री गि रवे गतौ । ( री, क्रा, प ) गि—रिणाति, रीणः, रीणिः । रवः शब्दः । तथाच कातन्त्रादौ रीगतिरेषणयोः । रेषणं वृकध्वनिरिति रमानाथः । रिणाति रेषते वृक इति शब्दार्थे भट्टमल्लः ।

**ओ रीङ्य स्रवणे, ली कि द्रावणे, लीङ्य ओ श्लिषि ।**
**लील्मी गि च ल्वी ग्गि गत्यां वेवी व्लुङ् वील ईलवत् ॥**

१५ । ओ रीङ्य स्रवणे । (री, दिवा, आ) ओ—रीणः । ङ, य—रीयते पयः ।

१६ । ली कि द्रावणे । ( ली, चु, भ्वा, प ) द्रावणं द्रवीकरणम् । कि—लाययति लयति । ( विलयत्ययलानास्य हृदयं मदनव्यथेति हलायुधः । १८६ ) विभ्योर्विभाषा ( ? ) लेति लापयति लौहमग्नौ कर्मकारः । स्नेहद्रवे तु लास्योर्लन्नावेति अनो घृतमग्नौ लीनयतीत्यपि ।

---

हिंसायामित्यस्य प्रकृत्यर्थमिति गोयीचन्द्रेण व्याख्यातत्वात् । तेन दिवादिभोदो नेता प्रमीय । किन्तु श्रीपदेवादीनां मतान्तरो मीपक्षर्थं, टीकाकारा अपि दिवादिमीओऽप्ययं विधिरिति व्याचक्षते" इत्युक्तम् ।

परिभाषायां "न परेयाद्य मध्यम" इत्युक्तेरत्र पादद्वयमध्यवर्त्ती ओदनुबन्धः पूर्वस्यैव । तेन ओजगृष्यो रक्ष्यमाण् क्षे भीत इति ।

(१) सर्वेष्वेवादर्शपुस्तकेषु माययतीति पाठो दृश्यते । किन्तु दुर्गादासमते मिथ्योर्विभाषो दापयमीति सूत्रे मीरिति गन्तव्यमिवास्थाय वादेवत्वमाह अत्र मापयतीति पाठीऽभिमतः ।

१६। लीङ् य श्रो श्लिषि। (ली, दिवा, श्रा) (श्लिषीति श्लिषधातोर्भावे क्विपि ङौ रूपम्, श्लेषोऽत्र परस्परसंयोगः) ङ, य—लीयते चन्द्रः सूर्य्ये। श्रो—लीनः। (नेन्द्रियार्थेषु लीयते इति हलायुधः। २६०। उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथा इत्युद्भटः, दिवाकरा द्रचति यो गुहासु लीनं दिवाभीतमिवान्धकारमिति कालिदासः)।

१६। ली गि च। } (ली, क्रा, प) (ल्वी, क्रा, प)
१७। ल्वी गि च। } द्वावन्तःस्थतृतीयादी। द्वितीयस्तु चोष्ठवर्गाद्योपधः। चकारात् श्लिषि। (श्लेषोऽत्र सयोगः, धातूनामनेकार्थत्वादयं प्राप्तग्रर्थश्च) गि—लिनाति बाला लावण्यं प्राप्नोतीत्यर्थः। कर्म्माविवचायान्तु लिनाति जलधौ नदी। (लिनाति धर्म्म एवासाविति हलायुधः। २६०) लीनः, लीनिः। गि—ल्विनाति ल्वीनः ल्वीनिः। (अयं धातुः) अन्तःस्थाद्योपध इति रमानाथः। ल्विनाति।

१८। ल्वी ग्गि गत्या। (ल्वी, क्रा, प) वकारोपधः। ग—ल्वीनाति, ल्वीत, ल्वीतिः। गि—ल्विनाति, ल्वीनः, ल्वीनिः। गिनैव क्रादित्वसिद्धौ गकरणं ल्वादित्वविकल्पार्थम्।

१८। वेवी र् घ् लु ङ् ईलवत् (वेवी, अदा, आ) (ईलवदित्यनेन ईधातुवदयमपि कान्ति गति व्याप्ति-चेप-प्रजन-खादनार्थक इति सूचितम्) र—वैदिक.। घ—अवेवयुः बह्रलं ब्रह्माणीति परस्मैपदे अतुसुसिद्धेरिति अन उस, गुरुस्थाम्निति गुणः। लु, ङ—वेवीते।

२०। वील ईलवत्। (वी, अदा, प) ल—वेति। ईलवत्

कान्तिगतिव्याप्तिक्षेप प्रजनखादने। (वियन्ति वीरसन्तानं दन्तो यस्य कुलाङ्गना इति हलायुधः। १८८)।

**व्री गि हत्यां व्रीङ् य ओ च व्लीगि गत्याञ्च शीङ्लु जि।**
**स्वप्ने श्री अग् पचि ह्रो लि लज्जेऽमी पञ्चविंशतिः॥**

२१। व्री गि हत्यां। (व्री, क्रा, प) रेफोपधः। (इति-वैरस्यं) ग—यो व्रीणाति जयश्रियं रणमुखे इति हलायुधः। ११। व्रीतः व्रीतिः। गि—व्रिणाति व्रीणाति। व्रीणः व्रीणिः। गित्त्वेव क्र्यादित्वे सिद्धे गकरणं प्वादित्वविकल्पार्थम्।

२१। व्री ङ् य ओ च। (व्री, दिवा, आ) रेफोपधः। ङ्, य—व्रीयते। ओ—व्रीणः। चकारात् हत्याम्। (यो यशो व्रीयते इति हलायुधः। ११)।

२२। व्लीगि गत्याञ्च। (व्ली, क्रा, प) अन्तःस्थतृतीयोपधः। गि—व्लिनाति। व्लीनः व्लीनिः। चकारात् हत्याञ्च।

२३। शीङ्लु जि स्वप्ने। (शी, अदा, आ) लु, ङ—शेते। (शेरते तेऽभि मारुतमिति माघः २। ४२) जि—शयितोऽस्ति (शार्ङ्क्षार्थजीक्षीलादेः सतीति वर्त्तमाने क्तः) मतङ्गे शयामीति गणकृतानित्यतया शपो लुगभावे चेति रमानाथः। वस्तुतस्तु शेते शयः पचादित्वादन् पश्चात् शय इवाचरामीति क्वौ साध्यम्।

२४। श्री अग् पचि। (श्री, क्रा, उ) तालव्यादिः। अ, ग—श्रीणाति श्रीणीते। पचि पाके। (श्रीणात्यन्यः सुकविहृदयान् क्षीरखण्डप्रकारानिति हलायुधः। १२। तत्र श्रीणाति पचतीत्यर्थः)।

२५। ह्री लि लज्जे। (ह्री, ह्वा, प) लि—जिह्रेति नीचसङ्गेभ्य इति हलायुधः। (न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जित इति भट्टिः ६।२)।

धमी पञ्चविंशतिः।

धमी (ईकारान्ताः पञ्चविंशतिः। संख्यासङ्गतिस्तु पूर्वोक्तरीत्यैव)।

---

## उकारान्तवर्गः।

### उ ङ शब्दे ऊर्णु ञ्लाच्छादने टु क्षुल क्षुते।
### कुङ् शब्दे कुल्च् क्रुशि ङार्त्तस्वरे च्युल तेजने॥

१। उ ङ शब्दे। (उ, भ्वा, आ) ङ—अवते गौः।

२। ऊर्णु ल आच्छादने (ऊर्णु, अदा, उ) दीर्घादिर्दन्त्योपधः, रेफयोगान्मूर्द्धन्यः। तेन ऊर्णुनाव इत्यादौ निमित्ताभावात् मूलधातोर्णत्वाभावः। ल, ञ—ऊर्णोति ऊर्णौति ऊर्णुते दिवं मेघः। (प्रोर्णुवन्तं दिशो वायौरिति भट्टिः ५।५६)।

३। टु क्षुल क्षुते। (क्षु, अदा, प) क्षुतं हाँचीति ख्यातम्। टु—क्षवथुः। ल—क्षौति कफी। क्षतकं कामिनि चुक्षुवे श्रगाल्या इति माघः। (जीवेति क्षुवतो ब्रूयादिति स्मृतिः)।

४। कुङ् शब्दे। (कु, भ्वा, आ) ङ—कवते पक्षी। (यन्नाक्कले जनपदः कवते च सूक्तमिति हलायुधः। २०। धातूनामनेकार्थत्वादुच्चारणार्थे सकर्मकोऽयं, कवते उच्चारयति, सूक्तं वेदोक्तस्तोत्रमन्त्रादि)।

४। कुल्च्। (कु, अदा, प) ल—कौति। चकारात् शब्दे।

४। कु शिङार्त्तस्वरे। (कु, तुदा, आ) ङि, ङ—कुवते (तनि) अकुत (कुटादित्वाद्गुणाभावे सिलोपः) (शोकान्नकोति कुवते च भयाच्च कश्चिदित्यभयत्व हलायुधः। २०। कूराश्वाकुपत द्विजा इति भट्टिः। ५। २६)।

५। क्ष्णु ल तेजने। (क्ष्णु, अदा, प) मूर्द्धन्यणोपध. षादिः। (तेजनं तीक्ष्णीकरणं) ल—क्ष्णौति खड्गं कर्म्मकारः।

**खुङ् ध्वनौ गुभि श्रो विष्ठोत्सर्गे गु घु ङ् ङ ध्वनौ।**
**च्युक् हासे सहने च्यु छ्यु ज्यु जुङ् गत्यां जु रंहसि॥**

६। खुङ् ध्वनौ। (खु, भ्वा, आ) ङ—खवते।

७। गु भि श्रो विष्ठोत्सर्गे। (गु, तुदा, प) भि—गुवति, अगुवीत्। श्रो—गूनः (दुग्वोर्दीर्घश्च)।

७। गु ङ ध्वनौ। (गु, भ्वा, आ) ङ—गवते।

८। घु ङ ध्वनौ। (घु, भ्वा, आ) ङ—घवते।

६। ङु ङ ध्वनौ। (ङु, भ्वा, आ) ङ—ङवते।

१०। च्युक् हासे सहने। (च्यु, चु, प) एतदाद्याश्चत्वारोऽन्तःस्थाद्योपधाः। क—च्यावयति।

१०। च्युङ गत्या। (च्यु, भ्वा, आ) ङ—च्यवते। अच्योष्ट सत्वान्नृपतिश्शुरताय इति भट्टिः। ३। २०)।

११। छ्युङ गत्या। (छ्यु, भ्वा, आ) ङ—छ्यवते।

१२। ज्युङ गत्या। (ज्यु, भ्वा, आ) ङ—ज्यवते।

१३। जुङ गत्या। (जु, भ्वा, आ) ङ—जवते।

१३। जु रंहसि। (जु, भ्वा, प) रंहो वेगगतिः। जवति घोटक। (स्फुटसरोजवना जवना नदीरिति भारवियमकम्)।

**णु ल् स्तुतौ तु ल् वृत्तिहिंसापूर्त्तिषु द्रु स्रुतौ गतौ।**
**द्रुन् टु द्वोनुपतापे दु गतौ द्यु त्वभिसर्पणे॥**

१४। णु ल् स्तुतौ। (णु, अदा, प) ल—नौति। (तव नौमि सरस्वति पादयुगमिति। शिवविरिञ्चिनुतं शरण्य-मित्यादि)।

१५। तु ल् वृत्तिहिंसापूर्त्तिषु। (तु, अदा, प) (वृत्तिर्जी-विका, पूर्त्तिः पूरणं) ल—तौति तवीति।

१६। द्रु स्रुतौ गतौ। (द्रु, भ्वा, प) द्रवति (नेमस्रुमिति) दुद्रुव। स्रुतिः चरणं। (नदीं तु प्रत्यदुद्रुवदिति भट्टिः। ६। १७। विपूर्व्वकः पलायनार्थस्तथाच—नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवासि विद्रुत इति कुमारसम्भवम्। ४। ६)।

१६। द्रुन् उपतापे। (द्रु, स्वा, प) र—वैदिकः। न—द्रुणोति। (द्रुणोति द्रोणवद्युद्धे शरजालेन यो रिपूनिति हला-युधः २४०।) (१)।

१७। टुद्वोनुपतापे। (दु, स्वा, प) (टु, वो, न् एते अनु-बन्धाः) ट्—दवथुः, वो—दूनः, न—दुनोति। उपताप इह उपतप्तीभाव उपतप्तीकरणञ्च। (आद्येऽकर्म्मकः) मन्मथेन दुनोमीति जयदेवः। (द्वितीये सकर्म्मकः) वर्णप्रकर्षे सति

---

(१) कातन्त्रमते स्वादिगणे तिक तिग षघ ऋच्च क्षवि चिरि जिरि दाश दृ जिघांसायामिति पाठः। तत्र कातन्त्रधातुवृत्तिकृता रमानाथेन, द्रुणोति द्रुः द्रुम इति मैत्रेयभट्टमल्लप्रभृतयः। क्षविवर्ज्जं ऋच्चप्रभृतयश्छान्दसा इत्येके इत्युक्तं। तदस्य छान्दसत्वं न सर्व्वसम्मतमित्यतएव हलायुधेन लौकिकवाक्येऽप्ययं प्रयुक्त इति मन्यामहे।

कर्णिकारं दुनोति निर्गन्धतया स्म चेत इति कालिदासः। (न दुनोति परं बाधेति हलायुधः २५६)।

१७। द्रु गतौ। (द्रु, भ्वा, प) द्रवति।

१८। द्यु अभिसर्पणे (द्यु, अदा, प) अभिसर्पणमाभिमुख्येन गमनं। ल—द्यौति सिंहो मृगानिव।

**धुञ्न कम्पे ज्रि ध्रु श्रि ध्रु स्थैर्य्ये प्रुस्रुङ् च सर्पणे।**
**युल् मिश्रणेऽमिश्रणे युञ् ग बन्धे युङ्क निन्दने॥**

१९। धुञ्न कम्पे (धु, स्वा, उ) ञ, न—धुनोति धुनुते। कम्प इह अन्तस्य रूपं। धुनोत्यशोकं वायुरिति हलायुधः। ८।

२०। ज्रि ध्र श्रि स्थैर्य्ये } (ध्र, तुदा, प) (ध्रु, भ्वा, प)
२०। ध्रु स्थैर्य्ये } (स्थैर्यं स्थिरीभावः) द्वौ रेफोपधौ।

आद्यो दीर्घान्त इति कश्चित् (१)। ज्रि—ध्रुतोऽस्ति। श्रि—ध्रुवति, अध्रुवीत्। (भ्वादित्वात्) ध्रवति शैलः। (ध्रुव औत्तानपादिः स्यादित्यमरोक्त ध्रुवशब्दव्युत्पत्तौ ध्रु स्थैर्य्ये क इति तट्टीकाकारः। तं द्रुमावाद्रिणा कपिरिति भट्टिः। १४। ८१। द्रुमाव मारितवान् अनेकार्थत्वाद्धिंसायामपीति भरतः)।

२१। प्रुङ् सर्पणे } (प्रु, भ्वा, आ) (स्रु, भ्वा, आ)
२२। स्रुङ च सर्पणे } (सर्पणं गमनं) द्वौ क्रमात् रेफान्तःस्थतृतीयोपधौ। ङ—प्रवते। स्रवते। चकारात् ज्रि ध्रु श्रि, ध्रु च (चकारेण ध्रुधातुद्वयमपि गमनार्थकमिति सूचितं, अतएव

(१) कातन्त्रे ध्रुगतिस्थैर्य्ययोरित्यस्य व्याख्याने "ह्रस्वान्तोऽयं ध्रुता इति त्रिलोचन। धातुप्रदीपादौ ध्रुविता इत्युदाहृतं तस्मात् दीर्घान्तोऽयं 'मित्युक्तं रमानाथेन।

प्रु गतिस्थैर्ययो- रित्यन्ये) (समीढुं भर्त्तुरानन्दं मा न प्रोढुं द्रुतं वियदिति भट्टि. ६।७७)।

२३। युल् मिश्रणेऽमिश्रणे (यु, अदा, प) ल—यौति। मिश्रणे यथा—यौति काले कुलस्त्रीभिः चेलसन्तानदृब्धये (१) इति हलायुधः। १६५। अमिश्रणे समवायलक्षणे यथा— अयुतसिद्धाना अपृथक्सिद्धानामित्यर्थः। (यवयारातीरिति श्रुतावपि अरातीः सहजशत्रून् यवय पृथक् कुरु इत्यर्थः)। (२)।

२३। युञ्ग बन्धे (यु, क्र्या, उ) ञ, ग—युनाति युनीते। युनाति यो वयःस्थोऽपि न वेश्याबन्धकीजनैरिति हलायुधः। १६५। (अयावीत् अयौषीत्)।

२३। युङ्क निन्दने (यु, चु, आ) ङ, क—यावयते। (यावयते बाला वृद्धमिति कातन्त्रधातुवृत्तौ)।

**रुल्ध्वनौ रुङ्वधे गत्यां श्रुगतौ श्रुन्गतौ श्रुतो।**

**पुञ्न सन्धालोदपीड्मन्ये पुञ गतौ पु च॥**

२४। रुल्ध्वनौ (रु, अदा, प) ल—रवीति रौति।

२४। रुङ्वधे गत्या (रु, भ्वा, आ) ङ—रवते। (गमनार्थे रविः सूर्यः)।

२५। श्रु गतौ (श्रु, भ्वा, प) श्रवति। रेफरहितोऽप्ययमिति केचित् तेन शवति।

---

(१) अत्र चलसन्तानदृब्धये इत्यपि क्वचित् पाठ।

(२) नेमेकाजादिति सूत्रे यवादिगणे अस्यैव पाठो नतु क्र्यादिकस्य। अतएव उतोऽवृद्धु स्नु नु क्षुव इत्यत्र बहुभिरादादिकै साहचर्यात् यु मिश्रणे इत्यस्य सेट्कत्वं न युनातेरित्यस्य कातन्त्रधातुवृत्तौ।

२५। श्रुगतौ श्रुतौ (श्रु, स्वा, प) श्रुतिराकर्णनम् । न—शृणोति गीतं लोकः। "रक्षासीति पुरापि संशृणुमहे" इति मुरारौ व्यतीहारादात्मनेपदम् । "संशृणुष्व मयाख्यात" मिति गणलतानित्यत्वात्, आख्यातशब्दस्य क्रियाविशेषणत्वेनाकर्मकतया 'समोगम्यृच्छ' इत्यादिना वा म। (*मुग्धबोधे भ्वादावस्य पाठात्* क्वचिद्भ्वादिकात्वमपीति सूचितम् । तेन "श्रवति राक्षसनिस्वन-माहत" इत्यादि सिद्धम् ।)

२६। षुञ्नसन्धा क्लेदपीडमन्थे (षु, स्वा, उ) मज्जन्यादिः। न, ञ—सुनोति सुनुते। सन्धा सन्धानम्। क्लेद इह स्नानं मङ्गलस्नानं वा। तथाच षुञ अभिषवे इति प्राहुः। अभिषवः पीडनं मन्थनं वेति त्रिलोचनादयः। स्नानञ्चेति दुर्गः। सन्धानं मङ्गलस्नानं वेति धातुप्रदीप'। (सोम सुनोति यज्ञेषु परलोक-जिगीषयेति हलायुधः। तत्र सोमं सोमलता सुनोति निष्पीड-यति, यज्ञे सोमलता निष्पीड्य तद्रसं पिवतीत्यर्थः) (मङ्गलस्नानं यथा—राज्ञा सूयते मङ्गलपूर्व्वकं स्नायते यस्मिन् क्रतौ स राज-सूयः क्रतुरिति)।

२६। षु ञगतौ (षु, भ्वा, उ) ञ—सुषाव सुषुवे।

२६। षु च (षु, भ्वा, प) सवति। चकारात् गतौ।

**षुल्चैश्वर्य्यप्रसवयोः ष्णु'ल्प्रस्तुत्यां ष्टुञ्ल्स्तुतौ ।**
**सुव्यर्थे सुञ्गतौ स्नुग् न ञुहृतौ स्हृवत् ञूलि ।**
**ह्नोमेऽदने ज्ञुङ्लु चौर्य्ये त्रयस्त्रिंशदुदन्तकाः ॥**

२६। षुल् च ऐश्वर्य्यप्रसवयोः (षु, अदा, प) ल—सौति। (प्रसौति विजयं धर्म्म इति हलायुधः २६) चकारात् षुक

(भौवादिकस्य षुधातोरपि ऐश्वर्य्यप्रसवावर्थावित्यर्थः । अतएव कातन्त्रधातुवृत्तौ षु प्रसवे इत्यत्र प्रसवति पुत्रं मातेत्युक्तम् । ऐश्वर्य्यमीश्वरीभावः । अस्यायमर्थो न सर्व्वैर्मन्यते । प्रसवो गर्भमोचनम् )।

२७। ष्णुल् प्रस्नुत्यां ( ष्णु, अदा, प ) प्रस्नुतिः क्षरणं । ल— स्नौति दुग्धं स्तनात् ।

२८। ष्टुञल् स्तुतौ ( ष्टु, अदा, उ ) मूर्द्धन्यादिः । (षोपदेशोऽयम् ) ञ, ल—स्तवीति स्तौति स्तुते ।

२९। षुप्वर्थे ( षु, भ्वा, प ) दन्त्यादिः । सवति । प्वर्थे—गत्यैश्वर्य्यप्रसवेषु ( अयं धातुः पूर्व्वोक्तपुधातोरर्थे प्रयुज्यते इत्यर्थः ) ( स च प्रसवति श्रियमिति हलायुधः २६ ) (१) ।

२९। सुञगतौ ( सु, भ्वा, उ ) ञ—सुसाव सुसुवे ।

३०। स्कुगृनञुकृतौ ( स्कु, क्र्या, स्वा, उ ) ग, ञ स्कुनाति स्कुनीते । न, ञ—स्कुनोति स्कुनुते चुस्काव ( अतालतसकारत्वान्न षत्वमिति दर्शितं ) उकृतिरुद्धरणं । आप्लवने इति प्राञ्चः तथाच स्कुनाति च स्कुनीते च स्कुनोत्याप्लवतेऽपि च । स्कन्दते स्कन्दते चापि षड़ाप्लवनवाचिन इति भट्टमल्लः । आवरणे इति पाणिनीयाः । स्कुनाति शत्रुं बाणेन भटः आच्छादयतीत्यर्थ इति

(१) ननु सेकसोकसृपेत्यादिना दन्त्याजन्तसादीनां मूर्द्धन्यादित्वविधानात् कथमयं दन्त्यादिरिति चेन्न, तत्रैव स्वपेर्ग्रहणेन दन्त्याजन्तसादीनाञ्च कचित् दन्त्यादित्वसूचनात् । अन्यथा स्वपेर्दन्त्यान्तसादित्वेनैव सिद्धे तत्र तस्य पृथक्ग्रहणमनर्थकं स्यात् । तेन सान्त्व सामतृक सान्त्वने इत्यादीनामजन्तसादित्वेऽपि दन्त्यादित्वं सिद्धं । न च स्वपेर्वकारस्य कथं दन्त्यत्वमिति वाच्यं उद्गूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः । अन्तःस्थं तं विजानीयात् तदन्यो वर्ग्य उच्यते इति स्वरसादित्युक्तस्तकमप्रतीघाते इति धातुव्याख्यानावसरे दुर्गादासेन ।

रमानाथः। (राममभ्यद्रवज्जिष्णुरस्कुमाद्भिपुरदृष्टिभिरिति भट्टिः। १७। ८२)।

३१। खु द्रुवत् (खु, भ्वा, प) स्रवति। द्रुवत् स्रुतौ गतौ (पूर्व्वोक्तद्रुधातुरिव स्रुतिगतिरूपार्थवाचकः)।

३२। हुलि होमेऽदने (हु, दा, प) होमो देवतासम्प्रदानकवह्न्यधिकरणकवस्तुत्यागः। नि—जुहोति हुतमग्नौ कृष्णाय होता। प्रचेपेऽप्ययं "चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषी"दिति रघुः। "जटाधरः सन् जुहुधीह पावक"मिति किराते प्रीणनार्थोऽपि।

३३। ह्नुङ् लु चौर्य्ये (ह्नु, अदा, आ) ङ, लु—ह्नुते। (स्वपादित्वाददादित्वं सिद्धं, तस्य तदन्तर्गतत्वात्। चौर्य्यमलापनयनं। अतएव ह्नुङ अपनयने इति धातुप्रदीपे कातन्त्रे च पाठः। निजुह्नुवुः समाटतामिति भट्टिः। ५, ६४)।

त्रयस्त्रिंशदुदन्तकाः।

(उकारान्ता धातवस्त्रयस्त्रिंशत्संख्यकाः। संख्यासङ्गतिस्तु पूर्व्ववदिति)।

---

## ऊकारान्तवर्गः।

कूशिडार्त्तस्वरे क्रूञ्ग शब्दे गू ओ शि विट्सृजौ।
णूशिस्तवन ओ दूङ् य खेदे द्रूनुगञ् बधे गतौ॥

१। कूशिडार्त्तस्वरे (कू, तु, आ) शि, ङ—कुवते, अकुविष्ट। (आकूतमभिप्रायः। अयं धातुः कैयटादीना सम्मत इति धातु प्रदीपः)।

२। क्नूञ् शब्दे (क्नू, क्रा, उ) दन्त्यनोपधः। अ, ग—क्नूनाति क्नूनीते। क्नूस्वान्तोऽयमिति जैमिनिः। नकाररहितो क्रूस्वान्त इति रमानाथः। दीर्घान्त इति कौमराः। (दन्त्यनोपधो दीर्घान्तो धातुप्रदीपे पठितः)।

३। गू ओ शि विट्त्सर्गे (गू, तुदा, प) ओ—गूनः। शि—गुवति अगुवीत्। विट्त्सर्जिर्ह्दनं (मलत्याग इत्यर्थः)।

४। णू शि स्तवने (नू, तुदा, प) क्रूस्वान्तोऽयमिति वररुचिः। शि—नुवति, अनुवीत्।

५। ओ टूङ्य खेदे (टू, दि, आ) खेद इह उपतप्तीकरणं उपतप्तीभावश्च। ओ—टूनः। ङ, य—टूयते दैन्यं जनमिति चतुर्भुजः। (दुर्जनोक्त्या न टूयते इति हलायुधः। २५६। तथा कीनं विधातर्मां कथं पश्यन्नटूयसे इति रघुः। १। ७०)

६। द्रूनृगञ्च बधे गतौ (द्रू, स्वा, क्रा, उ) न, ञ—द्रूणोति द्रूणुते। ग, ञ—द्रूणाति द्रूणीते।

**धूशिक् कम्पे धूनृगि धूञश्च् पूङ् शोधे पुङ्य पूञ्गिच।**

७। धूशिक् कम्पे (धू, तुदा, चु, प) कम्प इह अन्तस्य रूपम्। शि—धुवति मारुतो मालतीलताम्। अधुवीत्। क—धावयति। वायुर्विधूनयति केशरपुष्परेणूनिति चुरादौ हलायुधः। ८। प्रीधूञोर्नन् वेत्यत्र धूञग्रहणादस्य कथं नन्निति चेन्न, स्वार्थविहितस्य जेर्णकारेण सम्बन्धस्य वाच्यत्वात् (१)। अन्यथा कम्पप्रेरणे धूनयतीत्यादिप्रयोगा नस्युः। धूनोतीत्यादीना साध्या इति चेत् स्वभावात् कम्पप्रेरणार्थानां तेषा (प्रेरणार्थे) णौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थः स्यात्। किञ्च कम्पनाया धूनय-

(१) कश्चिदिनि नकारागमं मन्यते इत्युक्तं कातन्त्रधातुवृत्तौ।

तौल्यादीनामावश्यकत्वात् तत्सूत्रे अकारः प्राचीनमतानुवादार्थ एव। ( धाधूतवनराजिभिरिति रघुः १। ३८ )।

७। धूनगि अ च } ( धू, स्वा, क्रया, उ ) ( धू, भ्वा, उ )
७। धूञ्च } चकारात् कम्पे। स च इहापि कम्प-प्रेरणम्। न, ञ—धूनोति चम्पकवनानीति हलायुधः। ८। धूनुते। गि, ञ—धुनाति वायुरश्वत्थम्। धुनीते बन्धूकं तिलकुसुमञ्चापि पवन इति। धूनः धूनिः। ञ—धवति चन्दनमञ्जरीश्च इति हलायुधः। ८। धवते।

८। पूङ् शोधे ( पू, भ्वा, आ ) शोध इह शुद्धीकरणम्। ङ—पवते मामिनं गङ्गा।

८। पूङ्य च } ( पू, दि, आ ) ( पू, क्र्या, उ ) आद्यः
८। पूञ्गि च } कैश्चिन्न मन्यते। चकारात् शोधे। ङ, य—पूयते। ञ, गि—जाह्नवी नः पुनातु। पुनीते। पूवर्जनादस्य क्तादित्वाभावात् पूतः पूतिः। क्वचित् श्नाप्रत्यय-स्यापि प्वादित्वात् ह्रस्व इति वररुचिः। तेन—स्मरणात् पुनते पापं धारणात् पूर्व्वसञ्चितम्। दर्शनाल्लभते मोक्षमेतद्योगस्य लक्षणमिति।

ब्रूलञुक्तौ भूकाङ् भूञप्राप्तौ भूक्शुद्धिचिन्तयोः।
मिथ्यणे भू तु सत्तायां भूङवम्वे लुगिञ्क्विदि॥

६। ब्रूलञ् उक्तौ ( ब्रू, अदा, उ ) ल, ञ—ब्रवीति ब्रूते। विब्रूतिः कटके क्तेत्यत्र चरविहितकार्य्यस्यानित्यत्वान्न वचादेशः।

१०। भू काङ् प्राप्तौ } (भू, चु, आ) (भू, भ्वा, उ) क, ङ—
१०। भूञप्राप्तौ } भावयते। ञ—भवति भवते धनं

धीरः। भवत्येव हि सत्तायां प्राप्तिसम्पन्नजन्मस्विति भट्टमल्लः। भवते दुरितक्षयं यथोक्तक्रतुभिर्भावयते च नाकलोकमिति हला-युधः। ५०। केचिदमुं भ्वाद्यात्मनेपदिनं मत्वा प्राप्तौ परस्मैपद सत्तार्थस्यैवानेकार्थत्वात् समादधते।

१०। भूकृप्तुविचिन्त्यग्रोमिश्रणे (भू, चु, प) क—ह्यणवञ्चाव-यति द्विपस्य सर्व्वानिति हलायुधः ५० । तयोऽर्थाः।

१०। भू तु सत्तायां (भू, भ्वा, प) सत्ता इह द्विविधा उत्पत्तिर्विद्यमानता च। भवति मनुष्योऽथवा विष्णु।

११। भू ङ बन्धे (भू, भ्वा, आ) पवर्गपञ्चमादिः। ङ—भवते। (बद्धे सन्दानितं भूतमित्यमरः)।

१२। लूगिञ् छिदि (लू, क्रा, उ) गि, ञ—लुनाति लुनीते। लूनः लूनिः। (लुनीहि नन्दनमिति माघः १। ५१)।

## पूङ् ल षूयोङ सूतौ षूश् क्षेपे ऊतस्त्रयोदश।

१३। पूङ्ल सूतौ ⎫ (षू, अदा, आ) (षू, दि, आ)
१३। षूयो ङ सूतौ ⎭ द्वौ मूर्द्धन्यादी। ङ, ल—सूते। य, ङ—सूयते। ओ—सूनः। सूतिर्गर्भमोचनम्। सूते पुत्रं नारी। अन्यत्रापि—धर्म्ममर्थः प्रसूयते। (यस्य दृष्टौ प्रसूतेऽर्थं धर्म्ममर्थः प्रसूयते इति हलायुधः। २६)।

१३। षूश् क्षेपे (षू, तु, प) मूर्द्धन्यादिः। श—सुवति।

ऊतस्त्रयोदश।

(ऊकारान्ता धातवस्त्रयोदशसंख्यकाः। सख्यासङ्गतिस्तु पूर्व्ववदिति)

---

## ऋकारान्तवर्गः।

**ऋर्न हिंसे ऋलिगत्यान्त्प्रापे च कञन् वधे।**
**कञकतौ कञद्डु च गृ ष्सेके घर्लि भासि च॥**

१। ऋर्न हिंसे (ऋ, स्वा, प) र—वैदिकः। न—ऋणोति। रेफादिस्तृतीयस्वरान्तोऽयमिति केचित्। (केचिदिमं रिधातुं पठन्तीत्यर्थः) (ऋणोति धरणीं ऋरस्त्रामिति हलायुधः। ४५। यस्य कीर्त्तिरिति पूर्व्वेण सम्बन्धः, ऋणोति व्याप्नोतीत्यर्थः)।

१। ऋर्लि गत्यां (ऋ, ह्वा, प) र—वैदिकः। लि—इयर्त्ति। ग्रपी लुक्करणादस्य शतृशानयोरेव ऋच्छादेशः। इयृच्छत्, इयृच्छानः। (यस्य कीर्त्तिरियर्त्ति द्यामिति हलायुधः। ४५)।

१। ऋ प्रापे च (ऋ, भ्वा, प) प्रापः प्राप्तिः। ऋच्छति धनं क्रतौ। चकारात् गत्याञ्च। (दिङ्मुखानि च ऋच्छतीति हलायुधः। ४५)।

२। कञ न वधे (क, स्वा, उ) ञ, न—कृणोति कृणुते। (कृणोति किरणं शत्रोरिति हलायुधः। ४४)।

२। कञ् कृतौ (क, भ्वा, उ) ञ—करति करते। अयं केचिन्न मन्यते।

२। कञ द डु च (कृ, तना, उ) ञ, द—करोति कुरुते। डु—कृत्रिमम्। चकारात् कृतौ। अस्मादगुणिमकारो ऽप्यगुणी वा वक्तव्य इति वररुचिः। तेन "किं करोमि कथं कुर्म्मि क्वानु गच्छामि माधव। दुर्य्योधनविहीनन्तु शून्यं सर्व्वमिदं जग"दिति।

३। ऋ सेके (ऋ, भ्वा, प) गरति तरुं मेघः।

४। घृ सेके (घृ, भ्वा, प) घरति तरुं मेघः।

४। घृ दीप्ति भासि च (घृ, ह्वा, प) चकारात् सेके च। र—वैदिकः। लि—जघर्त्ति घृतं दीप्यते चरति वेत्यर्थः।

## घृक् सेके च्छादने जॄ न्यक्कारे जागृ ऌलु जागरे।

४। घृक् सेके च्छादने (घृ, चु, प) क—घारयति।

५। जॄ न्यक्कारे (जॄ, भ्वा, प) न्यक्कारस्तिरस्कारणं। जरति शत्रुं शूरः।

६। जागृ ऌलु जागरे (जागृ, अदा, प) ल—जागर्ति। लु—जागर्त्ति। "दिवो निरीक्षमाणस्य नास्ति जागरतो भय"-मिति पचादित्वादनि जागर इवाचरतीति क्वौ शत्रन्तम्।

## दृङ् आदरे हृ स्वगने ध्वृ कौटिल्ये धृ शङ् स्थितौ।

७। दृङ् आदरे (दृ, तुदा, आ) आदरः प्रीत्या सम्भ्रमः। ङ, श—द्रियते गुरुं लोकः। आनुबन्धोऽयमित्येके।

८। हृ स्वगने (हृ, भ्वा, प) वकारोपधः। ह्वरति। स्वगनं संवरणम्। वरणे इति प्राञ्चः। वरणं स्वीकारः स्वगनञ्चेति गोविन्द-भट्टः। (ह्वरन्ति चारुरुवति रक्षिणोऽस्मामिति घञि ह्वारं। घञन्तोऽपि क्वचिन्नपुंसकमिति धातुप्रदीप इत्यमरटीकायां भरतः)।

९। ध्वृ कौटिल्ये (ध्वृ, भ्वा, प) वकारोपधः। कौटिल्यमिह कुटिलीकरणं। ध्वरति तृणं वायुः।

१०। धृ शङ् स्थितौ (धृ, तुदा, आ) श, ङ—ध्रियते।

( म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखमिति माघः। २।३५। म्रियते कुसुमप्रसाधनं तव तच्चारुवपुर्न दृश्यते इति कुमारसम्भवम् । ४ । १८ )।

## धृञ् च धृत्यां धृक् च धृ ङवध्वंसे धृ लि पालने।

।१०। धृञ् च धृत्या ( धृ, भू, उ ) ञ्—धरति धरते। चकारात् धृङ् च ( तौदादिको धृधातुरपि धारणार्थे वर्त्तते इत्यर्थः )।

१०। धृक् च (धृ, चु, प) क—धारयति। चकारात् धृत्याम्।

१०। धृङ् अवध्वंसे ( धृ, भू, आ ) अवध्वंसः पतनम्। ङ—धरते पत्रं वृक्षात्। गोविन्दभट्टस्तु अविध्वंसने इति पठित्वा विध्वंसनं स्रंसनं तस्याभावोऽविध्वंसनं स्थापनमिति व्याख्याति।

११। धृलि पालने ( धृ, ह्वा, प ) लि—पिपर्त्ति। ( पिपर्त्ति पृथिवीञ्च य इति हलायुधः। ३७ )।

## धृक् च पूर्त्तौ धृ न प्रीतौ धृङ् व्यायामके स्टलि। टु डु भृञ् भृति पुष्ट्योर्भृङ् भृतौ धृम्न धृञ्भृतौ॥

११। धृक् च पूर्त्तौ ( धृ, चु, प ) पूर्त्तिः पूर्णीकरणम्। क—पारयति पयसा कुम्भं लोकः। चकारात् धृलि च ( पूर्त्त्यर्थक इत्यर्थः ) ( पारयत्यर्थिनामाशामिति हलायुधः। ३७ )।

११। धृ न प्रीतौ ( धृ, स्वा, प ) न—अतिथीन् धृणोतीति हलायुधः। ७।

११। धृ ङ् व्यायामके (धृ, तुदा, आ) व्यायामको व्यापारः। श, ङ—धर्म्मे व्याम्रियते नित्यमिति हलायुध। ३७।

१२। भृलि टु डु ञ् भृतिपुष्योः } (भृ, ह्वा, उ)
१२। भृ ञ भृतिपुष्योः } (भृ, भ्वा, उ)

भृतिर्भरणं, पुष्टिः पोषणं। लि, ञ—बिभर्त्ति यशिनं शम्भुर्बिभृते जनकः सुतम्। टु—भरथुः। डु—भृत्रिमम्। भ्वादिपक्षे भृतिः-पूरणम्। ञ—भरति भरते कुम्भमद्भिर्जनः। (यो भुजाभ्यां भुवो भारं भरते भरतोपमः। बिभर्त्ति च यशोराशिं भूयांसं चम्भूरपीति कविरहस्योदाहरणे भ्वादिपक्षेऽपि धारणार्थत्वमुपलभ्यते। "भरणं पोषणं पूरणं वे"ति कातन्त्रधातुवृत्तौ रमानाथः) (१)।

१३। मृङ् मृतौ (मृ, तुदा, आ) मृतिः प्राणत्यागः। ङ, म्रा—म्रियते प्राणी। ङित्त्वेऽप्यस्य "मृङटीदेश्च"मिति नियमेनान्यत्र परस्मैपदम्। ममार, मर्त्ता, मरिष्यति, अमरिष्यत्। (२)।

१४। वृन ञ वृतौ। } (वृ, क्र्या, स्वा, उ)
१४। वृ ञ वृतौ। } (वृ, भ्वा, उ)

ग, ञ—वृणाति वृणीते। न, ञ—वृणोति वृणुते। ञ—वरति वरते। वकारस्य दन्त्यत्वात् संवृणोतीत्यादौ नानुस्वारस्य मकारः। ओष्ठ्यत्वाच्च वुवूर्षतीत्यादौ "ऋदिरणा"वित्युर्। नच

---

(१) भृलि टु डु भृञ् भृतिपुष्योरिति गणपाठे "न परेषाञ्च मध्यम" इत्युक्तेः लि टु डु एते भौवादिकस्य भृधातोर्नानुबन्धाः किन्तु "परोऽनुबन्धः पूर्वेषामेकवाक्यस्थधातूनामि"ति कथनात् ञकारो ह्वादिभृधातोरप्यनुबन्ध एवमन्यत्रापि द्रष्टव्यमिति।

(२) नच मृधातोः परस्मैपदित्वेन पाठेऽपि 'शदोऽपदिम'मित्यादिवत् "मृङटीदेश्च"मिति नियमाद्विभक्तिविशेषेष्वात्मनेपदसिद्धावपि कथं ङानुबन्धः कृत इति वाच्यं वेदे स्वरभेदार्थकत्वात्। कातन्त्रधातुवृत्तावप्येवमेवाशयो व्यञ्जित इति।

दन्त्यस्य कथमोष्ठकार्य्यमिति वाच्यं यतः स्वभावादोष्ठस्य वकारस्य चोष्ठकार्य्यं स्वाभाविकमेव, क्वचिद्दन्त्यकार्य्यमपीति दन्त्यमध्ये पाठः । नह्येकवर्णस्योभयस्थानं सम्भवति । (वृत्कीर्त्तिश्च वृणातीति, धर्म्मं वृणीतेऽध्वरे इति, वरति ज्ञातीन् यथार्हैर्धनैरिति, निवरते नित्यं प्रियोपद्रवमिति च हलायुधः । ११ ) ।

**वृक् चाय वृङ् ग सम्भक्तौ स्तृ ञ शब्दोपतापयोः ।**

१४ । वृक् च (वृ, चु, प) क—वारयति । चकाराद्वृतौ (युद्धे वारयति द्विष इति हलायुधः, । ११ । अत्र वारणार्थत्वं *धातूनामनेकार्थत्वात्* ) ।

१४ । अथ वृङ् ग सम्भक्तौ (वृ, क्रा, आ) ङ, ग—वृणीते । सम्भक्तिः सेवनम् । "वृणाते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" इति भारविः । २ । ३० ।

१५ । स्तृ ञ शब्दोपतापयोः (स्तृ, भ्वा, प) दन्त्यादिवकारोपधः । ञ—अस्वारीत् पिकः, अस्वार्षीत् खलं राजा ।

**स्तृनञ् स्तृतौ स्तृक् च स्तृलि स्तृगतौ स्तृ स्तृतौ स्तृम ।**
**औत्को स्तृ स्तृन् प्रीतिरक्षाप्राणने ह्व ध्वृ वत् ह्वलिर् ।**
**प्रसह्यकर्य्या ह्वञ् ह्वत्यात्म्दन्तास्त्वेकविंशतिः ॥**

१६ । स्तृनञ् स्तृतौ (स्तृ, स्वा, उ) न, ञ—स्तृणोति स्तृणुते । स्तृतिराच्छादनम् । (तच्छिरोभिः स्तृणोति गाः । स्तृणुते विद्यावासं यः कुन्देन्दुनिभैर्गुणैरिति हलायुधः । ७४ ) ।

१७ । स्तृक् च (स्तृ, चु, प) क—स्तारयति । चकारात् स्तृतौ ।

१७। सर्प्ल गतौ ( स, सा, प ) र—वैदिकः। लि—ससर्प्ल।

१७। सृ गतौ ( स, भ्वा, प ) सरति। "नालानं करिणा सस्रे त्रिपदीच्छेदिनामपी"ति रघौ कर्म्मकर्त्तृत्वादिति रमानाथः, तच्चिन्त्यं कर्त्तृस्थभावधातुना तन्निषेधात् (१)। वस्तुतस्तु गणस्तानित्यत्वादात्मनेपदम्। नालानैरिति वा पाठम्। तत्र कर्म्माविवक्षाया भावे प्रत्ययः।

१८। स्मृ स्मृतौ ( स्मृ, भ्वा, प ) स्मरति। स्मृतिर्ज्ञानविशेषः। तथाच—संविद्भगवती द्वेधा स्मृत्यनुभवभेदिकेति तार्किकाः। तेन णौ ज्ञानार्थत्वात् कर्त्तुः कर्म्मत्वम्। गुरुः शिष्यं शास्त्रं स्मारयति।

१८। स्मृ म औत्कण्ठ्ये ( स्मृ, भ्वा, प ) म—स्मरयति। उत्क उत्कण्ठितः तस्य भाव औत्कण्ठ्यमुत्कण्ठा। आध्याने इति प्राञ्चः, आ समन्तात् ध्यानमाध्यानमिति कश्चित्। उत्कण्ठेति काशिकावृत्तिशेषदेवौ। उत्कण्ठापूर्व्वकं स्मरणमिति वृद्धाः। "सुहृदनुस्मरयन्तमनुक्षपं त्रिपुरदाह"मिति भारविः। ५। १४।

१६। स्तृञ् प्रीतिरक्षाप्राणने (२) } ( स्तृ, स्वा, प )
१८। स्पृञ् प्रीतिरक्षाप्राणने } ( स्पृ, स्वा, प )
द्वौ क्रमाद्दन्त्योष्ठ्यवर्गाद्योपधौ। न—स्तृणोति। तस्तार। न—

(१) उक्तञ्च कर्म्मकर्त्तृप्रकरणटीकायाम्—आतिदेशिकमनित्यमिति न्यायात् कर्त्तृस्थभावधातूनां नस्यादिति बोध्यं तेन स्राव्यते घोदन स्वयमेव, गम्यते ग्राम स्वयमेव इत्यादि न स्यात्। तथाच—कर्म्मस्थ पचतेर्भाव कर्म्मस्थाश्च भिदादय। बुधस्तु भाव कर्त्तृस्थ कर्त्तृस्थाश्च गमादय इति प्राञ्च।

(२) यद्यपि पूर्व्वोक्तस्तृञ् स्तृतावित्यस्मादनन्तरमेवाय पठितुमुचितस्तथापि एकार्थयो स्तृ स्पृ इत्युभयो पृथगर्थकथनगौरवभयादिह व्युत्क्रमेण पठित। उक्तञ्च प्राक् परिभाषाटीकायां "एव स्तृञ् स्तृतावित स्तृ स्पृञ प्रीतिरक्षाप्राणने

स्पृणोति । पस्पार । शेषस्तु चोष्यवर्गपञ्चमोपध इति दुर्गरामौ । स्पृणोति । (१) ।

२० । ह्वृ ध्वृवत् ( ह्वृ, भ्वा, प ) ध्वृवत् कौटिल्ये । ( ध्वृधातुरिव कौटिल्यार्थकः ) ह्वरति लतां वायुः ।

२१ । हृ लि र प्रसह्यकृत्या ( हृ, ह्वा, प ) प्रसह्यकृतिर्बलात्कारः । लि—जहर्त्ति धनं दस्युः । र—वैदिकः ।

२१ । हृञ् हृत्याम् ( हृ, भ्वा, उ ) हृतिर्देशान्तरप्रापणा । ञ—हरति हरते गां वनं गोपः ।

## ऋदन्तास्त्वेकविंशतिः ।

( ऋकारान्ता धातव एकविंशतिसंख्यया संख्येयाः । संख्यासङ्गतिस्तु पूर्व्ववत् ) ।

---

## ॠकारान्तवर्गः ।

ॠगि गत्यां कॄञ्गि हिंसे कॄश्विक्षेपेऽथ कॄक ङ ।
विज्ञाने गॄङ्क विज्ञाये च गॄश् निगरणेऽथ गॄ ।
गिशब्दे जॄगिकि ज्याने जॄ दूर्षत्र्य च भॄष्य च ॥

१ । ॠगि गत्याम् ( ॠ, क्या, प ) गि—ऋणाति, ईर्यां, ईर्णिः । ( ऋणाति फणिना पुरमिति हलायुधः । ४५ । यस्य कीर्त्तिरिति पूर्व्वेण सम्बन्धः ) ।

---

इत्येतयोर्मध्ये ष्वादीनां पाठेऽपि बोध्यमिति । अत पूर्व्वोक्तषोड़शसंख्यकास्तु धातवाध्यादयमपि षोड़शसंख्यया गणित इति बोध्यम् ।

(१) स्तृणोति, सस्मार, चिन्तायामप्येवमित्युक्तं कातन्त्रधातुवृत्तौ रमानाथेन ।

२। कॄञ्गि हिंसे (कॄ, क्र्या, उ) ञ, गि—कृणाति कृणीते, कीर्णः कीर्णिः। (कृणाति तुरगान् रणे इति हलायुधः। ४४)।

२। कॄश् विक्षेपे (कॄ, तुदा, प) श—किरति। अस्यापि निष्ठाया कीर्ण इति। सूत्रात्रोदिदित्यत्र मूर्च्छवर्जनसामर्थ्यात् येन केनापि प्रकारेण रेफान्तान्निष्ठातस्य न इति व्याख्यानात् ऋदिरणाविति इरि उरि च कृते रान्तत्वान्निष्ठातस्य न स्यात्। एवं गॄश निगरणे इत्यादेरपि गीर्ण इत्यादि बोध्यम्। (बाणावलि किरत्याजाविति हलायुधः। ४४)।

२। अथ कॄ कड विज्ञाने (कॄ, चु, आ) क, ङ—कारयते।

३। गॄ ङ् क विज्ञापे च (गॄ, चु, आ) विज्ञापो विज्ञापनं। चकारात् विज्ञाने च। ङ, क—गारयते सूक्ष्ममर्थं सुधीः।

३। गॄ श निगरणे (गॄ, तुदा, प) निगरणं भक्षणं। श—गिरत्यन्नं लोकः। "दैवात्ततो विगलितो गिलितो बकेन" इति तु अस्मात् रलोः कभावे इति भावे कमत्यये ऋदिरणाविति इरि वक्तव्याद्रेफस्य लकारे गिल इति स्थिते लेः लत्याख्याने इति औ कर्माणि क्ते सिद्धम् (१)। (सत्यं सद्भिरिते यत्र इति हलायुधः। २५८)।

३। अथ गॄ गि शब्दे (गॄ, क्र्या, प) शब्द इह व्यक्तवाक्य। गि—गृणाति वाक्यं लोकः। गीर्णः गीर्णिः। (गृणाति शुभगं वच इति हलायुधः। २५८)।

---

(१) कातन्त्रधातुवृत्तावप्येवमुक्तं। तद्यथा—दैवात्ततो विगलितो गिलितो बकेन इत्यत्र अलर्थेक इलयोरैकत्व स्मरणात् गिल इति स्थिते कारितान्ताच्छिरा।

४। जॄ गि कि ज्याने (जॄ, क्रा, चु, भ्वा, प) गि—जृणाति, जीर्णः, जीर्णिः। कि—जारयति जरति। ज्यानं गतवयस्कवयो भावः। (जृणाति न यस्य शक्तिरिति हलायुधः। ८)।

४। जॄ दूर्षश्च च (जॄ, दिवा, प) दूर्—अजरत् अजारीत्। ष—जरा। म—जरयति। य—जीर्य्यति। चकारात् ज्याने। (जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः। धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यतीति हितोपदेशः)।

५। झॄय च (झॄ, दिवा, प) ष—झरा। य—झीर्य्यति। चकारात् ज्याने।

## तॄ तरेऽभिभवे सुत्यां दृगि दम् भियि दॄ यगि।
## विदारे नॄगि नम् नीतौ ञि पॄगि लितु पालने।

६। तॄ तरेऽभिभवे सुत्यां (तॄ, भ्वा, प) तरः प्लवनपूर्व्वक-देशान्तरगमनम्। सुतिर्मज्जनाभावः। (तरे यथा) तरति नदीं भेलया पान्थः। (अभिभवे यथा) तरति सकलदुःखं वामनं भावयेद् यः। (सुतौ यथा) तरति शुष्ककाष्ठं जले न मज्जतीत्यर्थः। (तामवारोहयत् पत्नीं रथादवततार चेति रघुः। १।५४)।

७। दृगि भियि (दॄ, क्रा, प) गि—दृणाति, दीर्णः, दीर्णिः। (न जातहार्द्देन न विद्विषादरः दृति भारविः। १।२२)।

७। दॄम् भियि (दॄ, भ्वा, प) दरति। म—दरयति। (दरन्ति दिग्भोगाश्च यस्य दिग्विजयोद्ये इति हलायुधः। ७३)।

७। दॄ यगि विदारे (दॄ, दिवा, क्रा, प) य—दीर्य्यति। गि—दृणाति, दीर्णः, दीर्णिः। (न विदीर्णे कठिनाः खलु

स्त्रिय इति कुमारसम्भवम् । ४ । ५ । दृणाति च रणे रिपूनिति हलायुधः । ७३ )।

८। नॄ गि नीतौ ( नॄ, क्रा, प ) गि—नृणाति, नीर्णः, नीर्णिः।

८। नॄम् नीतौ ( नॄ, भ्वा, प ) नरति। म—नरयति। नीतिः प्रापणा।

९। ञि पॄगिलि ठ पालने ( पॄ, क्रा, ह्वा, प ) ञि—पूर्त्तोऽस्ति। "ह्लाद्योदिदि"त्यत्र पॄवर्जनान्न निष्ठातस्य नः। गि—पृणाति (१)। लि—पिपर्त्ति। ( अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमानिति भट्टिः। १५। १०० )।

पॄक् च पूर्त्तौ वॄगि हत्यां भत्यां भॄगि भृतौ भृजि।
भर्त्से मॄगि वधे वॄगिञ् हत्यां शॄ स्तॄगि हिंसने॥

९। पॄक् च पूर्त्तौ ( पॄ, चु, प ) क—पारयति। चकारात् ञि पॄ गि लि च ( पूर्त्त्यर्थक इत्यर्थः )।

१०। वॄगि हत्यां भत्यां ( वॄ, क्रा, प ) गि—वृणाति, वूर्णः, वूर्णिः।

११। भॄगि भृतौ भृजि भर्त्से (भॄ, क्रा, प) गि—भृणाति, भूर्णः, भूर्णिः। भृजि भर्जने। ( कर्म्मबीजानि सर्व्वाणि योगाभ्यासाद्भृणाति य इति हलायुधः। ९७। भृणाति दहतीत्यर्थः )।

१२। मॄगि वधे ( मॄ, क्रा, प ) गि—मृणाति, मूर्णः,

(१) क्नौ तु पूर्त्तिरित्येव मनीषादित्वाद्य निरिति पाठान्तरं चिन्त्यं, पॄधातोः क्नौ पूर्त्तिरिति वोपदेवेनोदाहृतत्वात्। "यस्मात् क्तिर्नाभिधीयते इति टीका। क्षीरस्वामिना तु पूर्त्तिमात्युत्पत्तये क्तिरभिधीयते" इति कातन्त्रधातुवृत्तौ।

,स्तृर्णिः। ( युद्धे स्तृणाति शत्रूनामस्त्रानिति हलायुधः। १०५ )।

१३। वृगिञ् वृत्यां ( वृ, क्रा, प ) गि, ञ—वृणाति वृणीते, वूर्णः, वूर्णिः।

१४। शृगि हिंसने } ( शृ, क्रा, प )
१५। स्तृगि हिंसने } ( स्तृ, क्रा, प )

चाद्यस्तालव्यादिः शेषो दन्त्यादिर्वकारोपधः। तद्वित्तोऽपीति केचित्। गि—शृणाति, शीर्णः, शीर्णिः। स्तृणाति, स्तूर्णः, स्तूर्णिः।

**स्तृञगि च्छादने प्रोक्ता ऋकारान्तास्तु षोड़श।**

१६। स्तृञगि च्छादने ( स्तृ, क्रा, उ ) ञ, *गि—स्तृणाति* स्तृणीते। स्तीर्णः, स्तीर्णिः।

**प्रोक्ता ऋकारान्तास्तु षोड़शः।**

( ऋकारान्ता धातवः षोड़शसंख्यया संख्येयाः। संख्यासङ्गतिस्तु पूर्ववत् )।

---

एकारान्तवर्गः।

**देङ् पालनेऽथ धेट् पाने मेङ् प्रतिदान ऐञवे।**
**स्यूतौ व्येञै वृतौ ह्वेञै स्पर्द्धे शब्दे षड़ेपराः॥**

१। देङ् पालने ( दे, भ्वा, आ ) ङ—दयते दीनं दाता।

२। अथ धेट् पाने (धे, भ्वा, प) धयति। ट—स्त्रियामीवर्थः। स्तनन्धयी। (धयागस्य देवराड़ब्रवीत्। मामयं धास्यति(पास्यति)। ततोऽसौ मान्धाता नामतोऽभवदिति विष्णुपुराणम् )।

३। मेङ् प्रतिदाने ( मे, भ्वा, आ ) प्रतिदानं परीवर्त्तः। ङ—मयते धान्येन माषं लोकः।

४। ऐ ञ वे स्यूतौ (वे, भ्वा, उ) स्यूतिस्तन्तुसन्तानः। ऐ—ऊयते। ञ—वयति वयते तन्त्रं तन्त्रवायः।

५। व्येञ् वृतौ ( व्ये, भ्वा, उ ) ञ—व्ययति व्ययते। ऐ—वीयात्। वृतिः संवरणम्।

६। ह्वेञ् स्पर्द्धे शब्दे ( ह्वे, भ्वा, उ ) स्पर्द्धः पराभिभवेच्छेति वोपदेवः। ञ—ह्वयति ह्वयते मल्लो मल्लमभिभवितुमिच्छतीत्यर्थः। ह्वयति जनं लोक आह्वयतीत्यर्थः। ऐ—हूयात्। गोविन्दभट्टस्तु स्पर्द्धाविषये व्यक्तवाक्योऽयमित्याह। ( बन्धुप्रियां बन्धुजनो जुहावेति कुमारसम्भवम् १।२६ )।

## षड् यराः—

( ए एकारः परः परवर्त्ती येषां ते, एकारान्ता धातव इत्यर्थः, षट् षट्संख्यकाः )।

---

# ऐकारान्तवर्गः।

## कै शब्दे क्षै क्षये खै तु स्थैर्य्ये खननहिंसयोः।

१। कै शब्दे ( कै, भ्वा, प ) कायति। एयामादन्तत्वेन दिवादौ पाठेऽपीष्टसिद्धौ भ्वादावैकारान्तत्वेन पाठो गणकृतमनित्यमिति ज्ञापयति। तेन श्यधातोरात्मनेपदानित्यत्वे शपो लुकि च (१) य्वोर्लोप इति यलोपे पराशब्दस्य रेफस्य वक्तव्याल्लकारे

---

(१) लुगङ्गरोऽप इत्यत्र व्यङ्गर इति गणनिर्देशात् गणकृतमनित्यमित्युक्तेः कदाचिददादिभिन्नादपि शपो लुक् स्यादित्याशयेनोक्तं शपो लुकि च इति।

"एष कालः समुत्पन्नो यः पलाति स जीवती"ति सिद्धम्। वेदेयूच्चारणभेदार्थौ भ्वादौ पाठ इति केचित्। (कायति नासत्यवचनमिति नैषधे)।

२। चै क्षये (चै, भ्वा, प) क्षादिः। क्षायति। (चै क्षः क्षामः। क्षायति द्विषतां कुलमिति हलायुधः। ११२)।

३। खै तु स्थैर्य्ये खननहिंसयोः (खै, भ्वा, प) खायति।

**गै गाने ग्लै क्लमेऽथो जै क्षये त्रैङ् पालनेऽथ दैप्।**
**शोधने ध्यै न्यक्करणे द्रै स्वप्ने ध्यै तु चिन्तने॥**

४। गै गाने (गै, भ्वा, प) गीतं गायति गायनः।

५। ग्लै क्लमे (ग्लै, भ्वा, प) अन्तःस्थतृतीयोपधः। क्लमो हर्षक्षयः। ग्लायति लोकः शोकात्। अनुपसर्गस्य ञौ "ग्लस्नले"त्यादिना वा ह्रस्वः। ग्लपयति ग्लापयति। सोपसर्गस्य तु प्रग्लापयति।

६। अथो जै क्षये (जै, भ्वा, प) जायति।

७। त्रैङ् पालने (त्रै, भ्वा, आ) दन्त्यवर्गाद्यादिः। ङ—त्रायते। चक्रिस्त्रादि इति त्रायते त्राः विच् पश्चात् त्रा इवाचरेति क्वौ साध्यम्। कैश्चिद्दादौ त्रा इति पठ्यते इति क्रमदीश्वरः।

८। अथ दैप् शोधने (दै, भ्वा, प) पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि। शोधनमिह शुद्धीकरणम्। दायति ताम्रमम्लेन लोकः। अवपूर्व्वः शुक्लीभावे। छिन्दन्ते खेतते लोधिसुः शुक्लतेऽवदायतीति भट्टमल्लः। (योऽवदायति कीर्त्तिस्सेति हलायुधः। २४। अवदायति विशुद्धां कीर्त्तिमर्ज्जयतीत्यर्थः)।

९। द्यै न्यक्करणे ( द्यै, भ्वा, प ) चन्तःस्याद्युक्तः। द्यायति दुष्टं लोकः। ( न्यक्करणं तिरस्कारः )।

१०। द्रै स्वप्ने ( द्रै, भ्वा, प ) द्रायति।

११। ध्यै तु चिन्तने ( ध्यै, भ्वा, प ) ध्यायति धीरो विष्णुम्।

ध्रै तृप्तौ प्यैङ् वृद्धौ पै शोषे स्त्यै कान्तिसंचये।
रै शब्दे ओ वै शोषे श्रै खेदे श्रैम् पचने मतः।

१२। ध्रै तृप्तौ (ध्रै, भ्वा, प) रेफोपधः। ध्रायति लाभाल्लोकः प्रीतः स्यादित्यर्थः।

१३। प्यैङ् वृद्धौ ( प्यै, भ्वा, आ ) चन्तःस्यादोपधः। ङ—प्यायते।

१४। पै शोषे ( पै, भ्वा, प ) पायति धान्यमातपात्।

१५। स्त्यै कान्तिसंचये ( स्त्यै, भ्वा, प ) स्त्यायति चन्द्रो दिवसे।

१६। रै शब्दे ( रै, भ्वा, प ) रेफादिः। रायति।

१७। ओ वै शोषे (वै, भ्वा, प ) वकारादिः। ओ—वानः। ( वाति वातः पुरे यस्य तावन्मात्रेण भीतवत्। उद्वायति यथा स्त्रीणां खेदार्द्रं सुरते वपुरिति हलायुधः। २१४ )।

१८। श्रै खेदे ( श्रै, भ्वा, प ) रेफोपधः। श्रायति रौद्राल्लोकः।

१९। श्रैम् पचने मतः ( श्रै, भ्वा, प ) रेफोपधः। म—श्रपयति। ( अन्नं श्रायत्यनुपमरसं स्मूल्यसुस्वस्य मांसम्। राष्ट्रे यस्य श्रपयति जनः सुस्थितो हव्यकव्यमिति हलायुधः। १८ )।

श्यैङ् गतौ पैचयेऽथ स्तैवेष्टे ध्यै संहतौ ध्वनौ ।
स्त्यै च स्वै पचि सै चित्यामैदन्ताः पञ्चविंशतिः ॥

१८। श्यैङ् गतौ (श्यै, भ्वा, आ) तालव्यादिरन्तःस्थाद्योपधः। ङ—श्यायते। (१) (पथश्यायानकर्दमानिति शोपार्थे रघुः। ४। २४)।

२०। पै चये (पै, भ्वा, प) मूर्द्धन्यादिः। सायति।

२१। चय स्तै वेष्टे (स्तै, भ्वा, प) प्रकृत्या दन्त्यतवर्गाद्योपधः। स्तायति हर्म्यं लता। अनुपसर्गस्य ञौ "ज्वलह्वले"त्यादिना ह्रस्वो वा। स्नपयति स्नापयति। सोपसर्गस्य तु प्रस्नापयति। (यः स्तायति जगत् सर्व्वं विसतन्तुनिभैर्गुणैरिति हलायुधः। २१८। स्तायति वेष्टते व्याप्नोतीत्यर्थः)।

२२। ध्यै संहतौ ध्वनौ (ध्यै, भ्वा, प) अन्तःस्थाद्ययुक्तदन्त्यवर्गाद्यमध्यः। प्रयोगात्तु, तेन तद्यौ तिध्यासति ताध्यायते। संहतिः समूहः। ध्यायति लोकः, एकत्र समूहायते शब्दायते वेत्यर्थः। दन्त्यविधौ ष्यैष्वष्ठिवा वर्ज्जनान्न दन्त्यः।

२३। स्त्यै च (स्त्यै, भ्वा, प) दन्त्यादिरन्तःस्थाद्ययुक्ततमध्यः। स्त्यायति तिस्त्यासति। चकारात् संहतिध्वन्योः। (स्त्यानावनद्धघनशोणितशोणपाणिरिति वेणीसंहारनाटकम्)।

२४। स्वै पचि (स्वै, भ्वा, प) रेफयुक्तः। स्वायति। पचि पाके।

---

(१) अस्मात् क्ते घनार्थे शीनं घृत, स्पर्शार्थे शीतं जल, अन्यत्र श्यान, प्रतिशीन अभिशीन अभिश्याम अवशीन अवश्याम एतानि पदानि "घनस्पर्शे श्योऽजि" "प्रते" "अभ्यवाद्वा" एतैर्मुग्धबोधसूत्रैः साध्यानि।

२५ । सै क्षित्या ( सै, भ्वा, प ) सायति । क्षिति' क्षय: ।

## ऐदन्ताः पञ्चविंशतिः—

( ऐकारान्ता धातवः पञ्चविंशतिसंख्यकाः । संख्यासङ्गतिस्तु पूर्व्ववत् ) ।

---

## ओकारान्तवर्गः ।

**छोय् लूनौ ज्योङ् नियमव्रतादेशोपनीतिषु ।**
**दोय च्छेदे शोय् निशाने षोय् नाशे पञ्च ओपराः ॥**

१ । छोय्लूनौ ( छो, दिवा, प ) लूनिश्छेद' । छ्यति धान्यं लोकः ।

२ । ज्योङ् नियमव्रतादेशोपनीतिषु ( ज्यो, भ्वा, आ ) व्रतस्यादेशो व्रतादेशः। ङ—ज्यवते याज्ञिको नियमी स्यादित्यर्थः। ज्यवते पण्डितो जनं व्रतमुपदिशतीत्यर्थः । ज्यवते पुत्रं विप्र उपनयते इत्यर्थः ।

३ । दोय च्छेदे ( दो, दिवा, प ) य—शिरोऽवद्यति विद्विषामिति हलायुधः । २४ ।

४ । शोय निशाने ( शो, दिवा, प ) निशानमित्यल्पीकरणम् । य—श्यति शत्रुं शूर । ( पुराणि दुर्गाणि निशातमायुधमिति माघ,। तत्र निशातमिति निपूर्व्वकशोधातो. कर्म्मणि क्तः, पक्षे निशितमपि ) ।

५ । षोय् नाशे ( षो, दिवा, प ) मूर्द्धन्यादिः । नाश इह नष्टीकरणम् । स्यति यमो जन्तून् ।

पञ्च ओपराः—

( ओपरा ओकारान्ता धातवः पञ्च पञ्चसंख्यकाः )। इत्य-जन्ताः ।

---

## कान्तवर्गः ।

**अकिक् लक्ष्मण्यकिङ् गत्यां चाक्म वक्रगतेऽर्कक । तापस्तुत्योः कक्क हासे ककिङिच्छागर्व्वचापले ॥**

१। अकिक्लक्ष्मणि ( अङ्क, चु, प ) लक्ष्म चिह्नयुक्त-करणम् । इ, क—अङ्कयति वस्त्रं रजकः । नोपधपाठेऽपि जेर्नित्यत्वात् "इस्वङ्नोलोपोऽणा"वित्यस्याप्राप्तौ यगादौ अङ्क्यते इत्यादिसिद्धावपि इदित्पाठश्चुरादेर्ञेरनित्यत्वज्ञापनार्थः। तेन अङ्कतीत्यपि स्यात् । तथाच वोपदेवः—"सिद्धे नित्यणिजन्तत्वा-न्नित्यनुमृत्वे कितामिदित् । णिजनित्यत्वबोधार्थं न दृष्टोऽनुम्विधिः क्वचिदि"ति । अस्यार्थः—किता कानुबन्धधातुना नित्यणिजन्त-त्वात् नित्यञन्तत्वात् नित्यनुमृत्वे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचो ञेरनित्यत्वबोधनार्थं, किन्तु अनुम्विधि-र्नकाराभावः क्वचिदपि न दृष्ट इति ।

१ । अकिङ् गत्याञ्च ( अङ्क, भ्वा, आ ) चकाराल्लक्ष्मणि च । इ—अङ्कते । ङ—अङ्कते पुण्यतीर्थेषु इषयुग्मानि शङ्कित इति हलायुधः। १६० । ( अङ्कते दानार्थं चिह्नितानि करो-तीत्यर्थः ) (१)।

---

(१) तलच्छपाणा पृथक्पठितानामप्येकार्थे सध्याहङ्कतिरिति टीकाकार-

१। चक्क वक्रगते (चक्क, भ्वा, प) म—चक्कयति। चक्कति सर्पः।

२। चर्क क तापस्तुत्योः (चर्क, चु, प) एककाकारप्रकृतिकः, पश्चाद्रेफनिमित्तं द्वित्वं विभाषया वक्तव्यम्। तेन क—चर्क्कयति चर्कयति। एवं सर्व्वत्र।

३। कक्क हासे (कक्क, भ्वा, प) कोपधः। कक्कति।

४। कक इच्छागर्व्वचापले (कक, भ्वा, आ) इच्छेह तृष्णा। गर्व्वः कैश्चिन्न मन्यते। चापलं चपलीभावः। ङ—ककते काकः सतृष्णश्चञ्चलो वा स्यादित्यर्थः।

**ककि ङ व्रजने कुक् ङ त्वादाने किष्क कङ् वधे।**
**चक अङ्म प्रतीघाततृप्त्योश्चीककि मर्षने॥**

४। ककि ङ व्रजने (कङ्क, भ्वा, आ) इ—कङ्क्यते। ङ—कङ्कते। (कङ्कः पक्षिविशेषः। ककिलौल्येऽच् इत्यमरटीका)।

५। कुक् ङ त्वादाने (कुक्, भ्वा, आ) ङ—कोकते। (कोको व्याघ्रविशेषः, कोकते मेषादीनादत्ते इत्यमरटीका)।

६। किष्क कङ् वधे (किष्क चु, आ) मूर्द्धन्योपधः। क, ङ—किष्कयते।

७। चक अङ्म प्रतीघाततृप्त्योः (चक, भ्वा, उ, आ) (प्रतीघातो व्याघातः) अ—चकति चकते खलः साधुं (व्याहन्तीत्यर्थः) ङ—चकते जनस्तृप्यतीत्यर्थः। म—चकयति।

८। चीक कि मर्षने (चीक, चु, भ्वा, प) कि—चीकयति चीकति। मर्षनं स्पर्शः। (१)

---

षषनादीटगणधातवोऽभिमतेन गणनीया अन्यथा मूलकारनिरूपितसंख्याव्याघातः स्यादिति बोध्यम्।

(१) तथाच—चन्द्रावतीतरङ्गाद्रागीकयन्ति च यदपुरिति कृत्वायुध. । १८३।

चक्क चिक्क चुक्क कर्त्तौ टकि क् बन्धेऽथ टीक टिक्।
ढौक त्रौक तिक्कङ् गत्यां तिक् नास्कन्दे वधे तकि।
दौस्थे तक् सहने हासे तर्कक् दीप्तौ त्वकिङ् गतौ॥

९। चक्क क् चर्त्तौ (चक्क, चु, प)
१०। चिक्क क् चर्त्तौ (चिक्क, चु, प)
११। चुक्क क् चर्त्तौ (चुक्क, चु, प)

त्रयः कोपधाः क्रमादाद्यतृतीयपञ्चमस्वरमध्याश्च। चर्त्तिः पीड़नम्। क—चक्कयति, चिक्कयति, चुक्कयति शत्रुं शूरः।

१२। टकि क् बन्धे (टङ्क, चु, प) इ, क—टङ्कयति।

१३। अथ टीकङ् गत्यां (टीक, भ्वा, आ)
१४। टिकङ् गत्यां (टिक, भ्वा, आ)
१५। ढौकङ् गत्यां (ढौक, भ्वा, आ)
१६। त्रौकङ् गत्यां (त्रौक, भ्वा, आ)
१७। तिकङ् गत्यां (तिक, भ्वा, आ)

तृतीयचतुर्थौ चतुर्दशस्वरियौ, चतुर्थो रेफमध्यश्च। ङ—अटिटीकत्। अटिटेकत्। अडुढौकत्। अतुत्रौकत्। अतितेकत्। ङ—टीकते। टेकते। ढौकते (यान्तं वने रात्रिचरी डुढौके इति भट्टिः। २।२३) त्रौकते। तेकते।

१७। तिक् नास्कन्दे वधे (तिक्, स्वा, प) न—तिक्नोति।

१८। तकि दौस्थ्ये (तङ्क, भ्वा, प) इ—तङ्कते। दौस्थ्यं दुःखेन जीवनम्। तङ्कति दीनः दुःखेन जीवतीत्यर्थः।

---

यायवः श्यूयन्तीत्यर्थः। भट्टमल्लस्तु मर्षण इति मूर्द्धन्यषकारमध्यं पठित्वा क्षमार्थकाइ इत्यपि पाठ.।

बुक्क कि श्वादिशब्देऽथ मस्क मक्कङ् गतौ मकिङ्।
भूषे रेकृ ङ शङ्कायां रक् लक क् स्वाद आपने।

२७। बुक्क कि श्वादिशब्दे ( बुक्क, चु, भ्वा, प ) पञ्चमस्वरी कोपधश्च। चुरादिपक्षे कथने, भ्वादिपक्षे कुक्कुरादिकर्तृकशब्देऽयमिति रमानाथः। कि—बुक्कयति वचो वक्त लोकः, बुक्कति श्वा।

२८। अथ मस्क ङ् गतौ } ( मस्क, भ्वा, आ )
२९। मक्क ङ् गतौ } ( मक्क, भ्वा, आ )

आद्यो दन्त्यमध्य इति गदसिंहः। क्विपि संयोगादिलोपे मक्। मूर्द्धन्यमध्य इत्येके। क्विपि संयोगान्तलोपे मट्। शेषः कोपधः। ङ—मस्कते, मक्कते।

३०। मकि ङ् भूषे ( मङ्क, श्वा, आ ) ङ्र—मङ्कते। ङ—मङ्कते शरो जनम्। गत्यर्थोऽप्ययमिति रामः।

३१। रेकृ ङ शङ्कायाम् (रेक, भ्वा, आ) शङ्का संशयारोपः। ऋ—अरिरेकत्। ङ—रेकते पुरुषत्व स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः। रिरेके।

३२। रक क् स्वाद आपने } ( रक, चु, प )
३३। लक क् स्वाद आपने } ( लक, चु, प )

स्वादो रसोपादानम् ( आपनं प्राप्तिः ) क—राकयति लाकयति मोदकं बालकः।

लोकृ क् दीप्तौ लोकृ ङीक्षे वस्क वक्कङ् गतौ वकिङ्।
कौटिल्येऽपि च टक् ङ स्वादाने वल्क क भाषणे।

३४। लोकृ क् दीप्तौ ( लोक, चु, प ) ऋ—अलुलोकत्। क—लोकयति।

३४ । लोक ङ दीप्ते (लोक, भ्वा, भ्रा) च—अलुलोकत् । ङ—लोकते । विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्य इत्यादौ विलोकनं विलोकः पश्चात्तं करोतीति णौ साध्यम् ।

३५ । वस्क ङ गतौ } (वस्क, भ्वा, भ्रा)
३६ । वक्क ङ गतौ } (वक्क, भ्वा, भ्रा)

आद्यो दन्त्यमध्य इति गदसिंहः । क्विपि वक् । मूर्द्धन्यमध्य इत्येके । क्विपि वट् । शेषः कोपधः । ङ—वस्कते, वक्कते ।

३७ । वकिङ् कौटिल्येऽपि च (वङ्क, भ्वा, भ्रा) कौटिल्यमिह कुटिलीभावः कुटिलीकरणञ्च । इ—वङ्कते । ङ—वङ्कते काष्ठं कुटिलं स्यादित्यर्थः । वङ्कते काष्ठं जनः कुटिलं करोतीत्यर्थः । अपिशब्दात् गतौ च । चकारः पादपूरणार्थः ।

३८ । वृक् ङ तु आदाने (वृक, भ्वा, भ्रा) ङ—वर्कते । (यङि) वरीवृक्यते । (वृको व्याघ्रविशेषः, वर्कते मेषादीनादत्ते इति कः)

३९ । वल्क क भाषणे (वल्क, चु, प) अन्तःस्थतृतीयोपधः । क—वल्कयति । भाषणं कथनम् ।

शक्यञ्च शक्निरू शक्तौ शकि ङ त्रासशङ्कयोः ।
श्यक् स्तक् ष्वकिङ शुक् सर्पे शीकङ् सेके च शीकिक ।
आमर्षे च श्लोकङ सङ्घाते शुल्क क् च सर्ज्जने ।
वर्ज्जने ष्वल्क क् च भाषे षेक ष्वक्क ङसर्पणे ।

४० । शक ञर शक्तौ } (शक, दि, उ)
४० । शक्निरू शक्तौ } (शक, खा, प)

शक्तिर्दिवादिपक्षे क्षमा, स्वादिपक्षे सामर्थ्यम्। य, ञ—शक्यति शक्यते दुःखं दीनः। न—शक्नोत्यशक्यमप्यार्थौ विजेतुं य इति हलायुधः। ६३। इर—अशकत् अशाकीत् अशकीत्। लिदित्त्वेनाशान्वित्यं ङ इत्यन्ये। ऊ—शकिष्यति शक्ष्यति। पृथक् पाठादाद्यो न स्वादिः। द्वावेवानिमावित्यन्ये। षष्ठस्वरानुबन्धः केषाञ्चिदनुरोधात्। द्वावेव सकर्म्मकौ। तथाच—शक्योऽस्य मन्युर्भवता विनेतुमिति रघौ। रजःपरिणामभेदो न शक्यते प्रत्याख्यातुमिति तत्त्वकौमुद्यां वाचस्पतिमिश्रः। शक्या मखेनापि सुदोऽमराणामिति नैषधम्।

४०। शकि ङ त्रासशङ्कयोः (शङ्क, भ्वा, ष्मा) त्रासो भयं, शङ्का संशयारोपः। इ—शङ्कते व्याघ्राज्जनेन। ङ—शङ्कते पुरुषत्वं स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः।

| | |
|---|---|
| ४१। श्रकिङ् सर्पे | (श्रङ्क, भ्वा, ष्मा) |
| ४२। श्लकिङ् सर्पे | (श्लङ्क, भ्वा, ष्मा) |
| ४३। श्वकिङ् सर्पे | (श्वङ्क, भ्वा, ष्मा) |
| ४४। शुक सर्पे | (शुक, भ्वा, प) |

चत्वारः क्रमाद्रेफान्त:स्थतृतीयवकारपञ्चमस्वरयुक्ताद्याः। इ—श्रङ्कते। श्लङ्कते। श्वङ्कते। ङ—श्रङ्कते। श्लङ्कते। श्वङ्कते। शोकति। सर्पो गतिः।

४५। शीकृ ङ सेके च (शीक, भ्वा, ष्मा) ऋ—अशिशीकत्। ङ—शीकते। चकारात् सर्पे च। (शीकन्ते शीकरैः सर्व्वे वायवो दक्षिणोद्भवैरिति हलायुधः।८३)।

४५। शीक कि आमर्षे च (शीक, चु, भ्वा, प) कि—

शीकयति शीकति। आमर्शः स्पर्शः। तथाच 'चन्द्रावती तरङ्गार्द्राः शीकयन्ति च यद्दपुं'रिति हलायुधः। १८३। वायवः स्पृशन्तीत्यर्थः। भट्टमल्लस्तु आमर्षणा इति मूर्द्धन्यषमध्यं पठित्वा क्षमार्थमाह। चकारात् सेके च।

४६। श्लोक ङ सङ्घाते (श्लोक, भ्वा, आ) सङ्घात इह छन्दोविशिष्टवाक्यरचनम्। (१) अ—अशुश्लोकत्। ङ—श्लोकते कविः।

४७। शुल्कक् च सर्ज्जने वर्जने (शुल्क, चु, प) पञ्चमस्वरी अन्तःस्थतृतीयोपधः। क—शुल्कयति। चकारात् श्लोक ङ च (सर्ज्जनवर्ज्जनार्थं इत्यर्थः) सर्ज्जनमर्ज्जनम्। शुल्क श्लोक इत्येतयोरेतावर्थौ केचिन्न मन्यन्ते।

४८। श्वल्कक् च भाषे (श्वल्क, चु, प) वकारयुक्ततालव्यादिरन्तःस्थतृतीयोपधः। क—श्वल्कयति। चकारात् शुल्कक् च (भाषार्थं इत्यर्थः) भाषः कथनम्।

४९। षेक ङ सर्पणे } (षेक, भ्वा, आ)
५०। ष्वक्क ङ सर्पणे } (ष्वक्क, भ्वा, आ)

द्वौ मूर्द्धन्यादी, शेषो वकारयुक्तादिः कोपधः। आद्यस्य षोपदेशविधौ वर्ज्जनेऽप्यपीह पाठः कस्यचिदनुरोधात्। अ—असिषेकत्। ङ—सेकते। ष्वक्कते। पिष्वक्किषते, पाष्वक्कते। दन्त्यविधावस्य वर्ज्जनान्न दन्त्यः। चान्द्रादयस्तु इमं (वकारशून्यं) पञ्चमस्वरिणं मत्वा षुक्कते, षुषुक्किषते, पोषुक्कते इत्याहुः।

---

(१) आनुपूर्व्येण पदाना ग्रन्थनमिह सङ्घातः। श्लोकते कविः आनुपूर्व्येण पदानि ग्रथ्नातीत्यर्थं इत्युक्तं कातन्त्रधातुवृत्तौ।

**ष्टक स्तक्म प्रतीघाते सीक व्याम्रशि सीकृङ ।**
**सेके स्वकि स्वस्कङ च गत्यां स्रेक सेक मित्यपि ।**

५१ । ष्टक् म प्रतीघाते } ( ष्टक, भ्वा, प )
५२ । स्तक् म प्रतीघाते } ( स्तक, भ्वा, प )

षोपो दन्त्यादिः । ननु सेक सीक स्वपित्यादिना दन्त्याजन्तसादीनां मूर्द्धन्यादित्वविधानात् कथमयं दन्त्यादिरिति चेन्न तत्रैव स्वप-ग्रहणेन दन्त्याजन्तसादीनाञ्च क्वचित् दन्त्यादित्वसूचनात् । अन्यथा स्वपेर्दन्त्यवकारान्तसादित्वेनैव सिद्धे तत्र तस्य पृथक्ग्रहणमनर्थकं स्यात् । तेन सान्त्व सामत्क सान्त्वने इत्यादीनामजन्तसादित्वेऽपि दन्त्यादित्वं सिद्धम् । न च स्वपेर्वकारस्य कथं दन्त्यत्वमिति वाच्यम्, चटूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः । अन्तःस्थं तं विजानीयात् तदन्यो वर्ग्य उच्यते इति स्मरणात् । म—तिष्टकयिषति, तिस्तकयिषति । (१) ।

५३ । सीक कि व्यामृशि (सीक, चु, भ्वा, प) कि—सीकयति, सीकति । व्यामृशि स्पर्शे । प्रमाणान्तु तालव्यादौ दृश्यम् । (२) ।

५३ । सीक ङ सेके ( सीक, भ्वा, आ ) ऋ—असिसीकत् । ङ—सीकते ।

५४ । स्वकि ङ गत्या } ( स्वङ्क, भ्वा, आ )
५५ । स्वस्क ङ च गत्यां } ( स्वस्क, भ्वा, आ )

द्वौ क्रमाद्रेफवकारयुक्तादी, षोपो दन्त्यसोपधः । ङ—स्वङ्कते ।

---

(१) अत्र षोपदेशाभावादकृतसकारतया जिघ्रो खेरितिनियमविषयत्वेऽपि किलादित्यनेन षत्वं न स्यादिति समन्तपदोदाहरणतात्पर्यम् ।

(२) व्यामर्शशब्दः स्पर्शार्थे इति शीक कि व्यामर्शे च इत्यत्र प्रमाणीकृतमित्यर्थः ।

ङ—स्वङ्कते, स्वस्कते। चकारात् सीक ङ च (गत्यामित्यर्थः)।

५६। स्वेक ङ् गत्यां } (स्वेक, भ्वा, आ)
५७। सेक ङ इत्यपि } (सेक, भ्वा, आ)

ऋ—असिस्वेकत्, असिसेकत्। ङ—स्वेकते, सेकते। इतिशब्दः पादपूरणार्थः। अपिशब्दात् गत्याम्।

## हिक्क ञ् कूजेऽथ हिक्क क् ङ हिंसे कान्तोनषष्टिका।

५८। हिक्कञ् कूजे (हिक्क, भ्वा, उ) कोपधः। ञ—हिक्कति हिक्कते। कूजोऽव्यक्तशब्दः। हिक्कायामेवेति भट्टमल्लः। हिक्कति लोकः।

५८। अथ हिक्क कङ हिंसे (हिक्क, चु आ) कोपधः। क, ङ—हिक्कयते।

### कान्तोनषष्टिका।

ऊनषष्टिरेव ऊनषष्टिका। (कान्ता चासौ ऊनषष्टिका चेति विग्रहः। अथवा कान्तानां ऊनषष्टिका) अत्र संख्यायामेको नास्तीति चिन्त्यम्। (१)।

---

## खान्तवर्गः।

## द्रखिखीख्युख्युखगतावोखृ शोषालमर्थयोः।

---

(१) वोपदेवेन कान्ता धातव ऊनषष्टिरित्युक्तम्। परिगणनयात्तु अष्टपञ्चाश-द्भवन्तीति सुधीभिर्भाव्यमिति।

१। उख गतौ (उख, भ्वा, प)
१। उखि गतौ (उङ्ख, भ्वा, प)
२। ऊखि गतौ (ऊङ्ख, भ्वा, प)
३। ऌखि गतौ (ऌङ्ख, भ्वा, प)
३। ऌख गतौ (ऌख, भ्वा, प)

द्वावाद्यौ ह्रस्वादी, तृतीयो दीर्घादिः, शेषौ पञ्चमस्वरादी। पुनः पाठादाद्यो नेदनुबन्धः। (१)। ओखति। उ—उङ्खते। ऊङ्खते (२) ऌङ्खते। अल्खति।

४। शोखृ शोषालमर्थयोः (शोख, भ्वा, प) ङ—मा भवान् शुशोखत्। अत्र द्वित्वात् प्राक्प्राप्तो ह्रस्व ऋदित्त्वान्न स्यात्। शोषः स्नेहरहितीभावः। शोखति पङ्कमातपात्। अलमर्थो भूषणं सामर्थ्यं निवारणञ्च।

कख्ने कक्ख खक्ख हासे णख् गतौ द्राखृ ध्राखृ तु।
शोषार्थे नख् मख मखि रखि रख् रिखि सर्पणे॥

५। कख् ने हासे (कख, भ्वा, प)
६। कक्ख हासे (कक्ख, भ्वा, प)
७। खक्ख हासे (खक्ख, भ्वा, प)

द्वावन्त्यौ कोपधौ। शेषः खादिः। म—कखयति। ए—अकखीत्। कक्खति। खक्खति।

---

(१) मूले उख उखि इति पाठे परोऽनुबन्ध इकारो न कार्यः पूर्वस्येति मन्दाभिरामार्थमिदं वचनम्।

(२) नायमकोप्यन्ये इत्युक्तं कातन्त्रधातुवृत्तौ।

८। गाख् गतौ (गाख, भ्वा, प) प्रगाखति।

९। द्राखृ शोषार्थे ⎫ (द्राख, भ्वा, प)
१०। ध्राखृ च शोषार्थे ⎭ (ध्राख, भ्वा, प)

आद्यो दन्त्यवर्गतृतीयादिः। द्वौ रेफयुक्तौ। ङ—अदद्राखत्, अदध्राखत्। शोषार्थे शोषालमर्थयोरित्यर्थः।

११। नख सर्पणे ⎫ (नख, भ्वा, प)
१२। मख सर्पणे ⎪ (मख, भ्वा, प)
१२। मखि सर्पणे ⎬ (मङ्ख, भ्वा, प)
१३। रखि सर्पणे ⎪ (रङ्ख, भ्वा, प)
१३। रख सर्पणे ⎪ (रख, भ्वा, प)
१४। रिखि सर्पणे ⎭ (रिङ्ख, भ्वा, प)

द्वितीयतृतीयावोष्ठवर्गपञ्चमादी। प्रणखति। मखति। ङ—मङ्खते। ङ—रङ्खते। रखति। ङ—रिङ्खते।

**राख् लाखृ श्रोखृ वञ्लिस् श लेखने लिखि लख् लखि।**
**वखि वख् सृमि शाख् श्लाखृ व्याप्तौ खान्तैकविंशतिः॥**

१५। राखृ शोषवत् ⎫ (राख, भ्वा, प)
१६। लाखृ शोषवत् ⎭ (लाख, भ्वा, प)

ङ—अरराखत्। अललाखत्। शोषवत् शोषालमर्थयोरित्यर्थः।

१७। लिख श लेखने (लिख, तु, प) श—लिखति पुस्तकं लेखकः। अयं विभाषया कुटादिरिति केचित् तेन "लिखितुं विबुधोऽपि शक्तिमानि"ति, लिखितव्यं लेखितव्यं लिखनं लेखनमित्यादि सिद्धम्।

१७। लिखि ऌपि ⎫ (लिङ्ख, भ्वा, प)
१८। लख ऌपि ⎪ (लख, भ्वा, प)
१८। लखि ऌपि ⎬ (लङ्ख, भ्वा, प)
१९। यखि ऌपि ⎪ (यङ्ख, भ्वा, प)
१९। वख ऌपि ⎭ (वख, भ्वा, प)

इ—लिङ्खते। लखति। इ—लङ्खते। इ—वङ्खते। वखति। ऌपि गतौ।

२०। शाखृ व्याप्तौ ⎫ (शाख, भ्वा, प)
२१। श्लाखृ व्याप्तौ ⎭ (श्लाख, भ्वा, प)

द्वौ तालव्यादी। शेषोऽन्तःस्थतृतीययुक्तः। ऋ—अशशाखत्। अशश्लाखत्।

## खान्तैकविंशतिः।

(खान्ताश्चासावेकविंशतिश्चेति विग्रहः)।

---

## गान्तवर्गः।

### अगम वक्रगतेऽगीगि गत्यां कग्मे क्रियासु तु।

१। अगम वक्रगते (अग, भ्वा, प) म—अगयति। अगति सर्पः।

१। अगि गत्याम् ⎫ (अङ्ग, भ्वा, प)
२। इगि गत्याम् ⎭ (इङ्ग, भ्वा, प)

शेषस्तृतीयस्वरादिः। इ—अङ्गते। इ—इङ्गते। इङ्गितम्।

३। कग्मे क्रियासु (कग, भ्वा, प) म—कगयति। ए—अकगीत्। क्रियासु क्रियामात्रे। कगति लोकः गच्छतीत्याद्यर्थः।

**जुगि त्यागे त्वगि गते त्वगि कम्पे गते तगि।**
**स्खलने च तिग्नहिंसास्कन्दयोर्मगि सर्पणे॥**

४। जुगि त्यागे (जुङ्ग, भ्वा, प) इ—जुङ्गति।

५। त्वगि गते (त्वङ्ग, भ्वा, प) इ—त्वङ्गति।

६। त्वगि कम्पे गते (त्वङ्ग, भ्वा, प) वकारमध्यः। इ—त्वङ्गति। कम्पश्चलनम्।

७। तगि स्खलने च (तङ्ग, भ्वा, प) इ—तङ्गति। चकारात् कम्पगत्योश्च।

८। तिग्न हिंसास्कन्दयोः (तिग, स्वा, प) न—तिग्नोति। श्वास्कन्दः कैश्चिन्न मन्यते।

९। मगि सर्पणे (मङ्ग, भ्वा, प)) इ—मङ्गति।

**मार्गक् संस्कारे च मार्गयन्वेषे युगि वर्ज्जने।**

१०। मार्गक् संस्कारे च (मार्ग, चु, प) क—मार्गयति। चकारात् सर्पणे च।

१०। मार्गयन्वेषे (मार्ग, चु, भ्वा, प) अन्वेषोऽनुसन्धानम्। कि—मार्गयति मार्गति शुथं शुथी। मार्गन्ता हे देहभावानित्यात्मनेपदं गणकृतानित्यत्वात्। (वरं वरेण्यो नृपतेरमार्गीदिति भट्टिः। १।१२)।

११। युगि वर्ज्जने (युङ्ग, भ्वा, प) अन्तःस्थाद्यादिः। इ—युङ्गति।

**रग्मे शङ्के रगक् रक्वत् रग्रिग् लिगि गतौ लिगिक्।**
**चिले लगि गतौ खञ्जे लग्मे सङ्गे लगक् रके॥**

१२। रगे शङ्के (रग, भ्वा, प) अ—रगयति। ए—अर-गीत्। शङ्कः शङ्का। रगति रोगी कुपथ्येभ्यः।

१२। रगक् रक्वत् (रग, चु, प) क—रागयति। रक्वत् खादाप्त्योः। (रकधातोर्यथा खादापने अर्थौ तथास्यापीत्यर्थः)।

१२। रगि गतौ (रङ्ग, भ्वा, प)
१३। रिगि गतौ (रिङ्ग, भ्वा, प)
१४। लिगि गतौ (लिङ्ग, भ्वा, प)

इ—रङ्गति। इ—रिङ्गति। इ—लिङ्गति। (लक्ष्मीमालिङ्गति स्नेहात् यः सदा धरणीपतिरिति हलायुधः। २४१)।

१४। लिगिक् चित्रे (लिङ्ग, चु, प) इ, क—लिङ्गयति शब्दं स्त्रीपुंनपुंसकैः शाब्दिकः, चित्रं करोतीत्यर्थः। (आलिङ्गयति रत्नांशुजालैश्च मणिकुट्टिममिति हलायुधः। २४१)।

१५। लगि गतौ खञ्जे (लङ्ग; भ्वा, प) इ—लङ्गति। खञ्जो गतिवैकल्यम्।

१५। लगे सङ्गे (लग, भ्वा, प) अ—लगयति। ए—अलगीत्। लगत्यधर चोष्ठे।

१५। लगक् रके (लग, चु, प) क—लागयति। रके खादाप्त्योः। (रकधातुवत् खादाप्तिरूपार्थद्वयवाचक इत्यर्थः) रके इति रकक् स्वाद आपाने इत्यस्य णेरनित्यत्वे भावेऽलि-रूपम्।

वगि खञ्जे वुगि त्यागे वल्ग श्वगि स्नगि व्रजे।

१६। वगि खञ्जे (वङ्ग, भ्वा, प) इ—वङ्गति।
१७। वुगि त्यागे (वुङ्ग, भ्वा, प) इ—वुङ्गति।

१८। वल्ग व्रजे (वल्ग, भ्वा, प)
१९। अगि व्रजे (अङ्ग, भ्वा, प)
२०। श्लगि व्रजे (श्लङ्ग, भ्वा, प)
आद्योऽन्तःस्थतृतीयोपधः, शेषौ क्रमाद्रेफान्तःस्थतृतीययुक्तताल-
व्यादी। वल्गति। अयं प्लुतगताविति भट्टमल्लः। इ—अङ्गते।
इ—श्लङ्गते।

## पग ष्टग सग स्थग्मे संवृतौ स्वगि सर्पणे।

२१। पग्मे संवृतौ (पग, भ्वा, प)
२२। ष्टग्मे संवृतौ (ष्टग, भ्वा, प)
२३। सग्मे संवृतौ (सग, भ्वा, प)
२४। स्थग्मे संवृतौ (स्थग, भ्वा, प)
द्वावाद्यौ मूर्द्धन्यादी, द्वितीयस्तमध्यः षयोगात्टः, अन्यौ दन्त्यादी,
शेषःथमध्यः। म—सिषगयिषति, तिष्टगयिषति, सिसगयिषति,
तिस्थगयिषति। ए—असगीत्, अस्तगीत्, अस्थगीत्। (असगी-
दिति षोपदेशाषोपदेशयोरुभयोरुदाहरणम्) द्वितीयो दन्त्यवर्ग-
द्वितीयमध्य इति केचित्। (ष्टक इत्यत ठक इति केषाञ्चिन्मत-
मित्यर्थः) तिष्ठगयिषति, अतिष्ठगत्।

२५। स्वगि सर्पणे (स्वङ्ग, भ्वा, प) वकारमध्यः। इ—
स्वङ्गते।

## ह्वग ह्लग्मे संवरणे गान्ताः स्युः सप्तविंशतिः।

२६। ह्वग्मे संवरणे (ह्वग, भ्वा, प)
२७। ह्लग्मे संवरणे (ह्लग, भ्वा, प)

द्वौ कमाद्रेफान्तःस्थतृतीयमध्यौ। म—ऋगयति, ऌगयति। ए—अऋगीत्, अऌगीत्।

गान्ताः स्युः सप्तविंशतिः।

---

## घान्तवर्गः।

**अर्घ मूल्ये ऽघि ङ गतौ निन्दारम्भजवेष्वथ।**
**स्याद् गगध घगध हसने चघ तिघ् दघ घातने।**

१। अर्घ मूल्ये (अर्घ, भ्वा, प) अर्घति गा गोपः। (मूल्यं कथयाम्)।

२। अघिङ् गतौ निन्दारम्भजवेषु (अङ्घ, भ्वा, आ) इ—अङ्घते। ङ—अङ्घते। जवो वेगगतिः। अङ्घते वायुर्वेगेन गच्छतीत्यर्थः। जवे एव कैश्चित् पठ्यते।

३। अथ स्याद् गगध हसने } (गगध, भ्वा, प)
४। घगध हसने } (घगध, भ्वा, प)

अथ शब्द आनन्तर्य्ये। द्वौ कण्ठ्यवर्गतृतीयोपधौ। गगधति। घगधति।

५। चघ घातने } (चघ, स्वा, प)
६। तिघ घातने } (तिघ, स्वा, प)
७। दघ घातने } (दघ, स्वा, प)

न—चघ्नोति, तिघ्नोति, दघ्नोति। दघ घाते इति कौमराः पठन्ति। तदेकवाक्यत्वे कर्त्तव्ये घातनमिति ञ्यन्तस्य पाणिक चुरादित्वेन (१) ञ्यन्तेः स्वार्थत्वो रूपं बोध्यं घननमित्यर्थः। किञ्च

(१) धातवो ञ्निभाषार्था अकितो वा चुरादय इत्युक्तेः।

हिंसन इति पाठेनैवेष्टसिद्धौ घातनपाठो हिंसाप्रेरणार्थः स्यान्न वेति काकदन्तान्वेषणवद्विफलं, तयाणामेव कातन्त्राद्यसम्मतत्वात्।

## दघि त्यागेऽवने द्राघृ ङ श्रमायामशक्तिषु।

८। दघि त्यागेऽवने (दङ्घ, भ्वा, प) इ—दङ्घते। अवनं रक्षणम्।

९। द्राघृ ङ श्रमायामशक्तिषु (द्राघ, भ्वा, आ) श्रमः खेदः, आयामो दीर्घकरणं, शक्तिः सामर्थ्यम्। ऋ—अदद्राघत्। ङ—द्राघते जनः, खिद्यतीत्यर्थः। द्राघते वस्त्रं जनो दीर्घं करोतीत्यर्थः। द्राघते धावितुं वाजी, समर्थः स्यादित्यर्थः। (द्राघते वपुरत्यर्थं वह्नियोगे धर्मोद्दयामिति हलायुधः। १०९) (१)

## ङ्भ्राघृ शक्तौ मघिङ कैतवाप्यर्थयोर्मघि।
## भूषे रघिक् भासि रघिङ् गमने राघृ लाघृङ।
## शक्तौ लघिङ्ङ्भुग्गत्योर्लघि शोषे लघिक् त्विषि।

१०। ङ्भ्राघृ शक्तौ (भ्राघ, भ्वा, आ) ङ—भ्राघते। ऋ—अदभ्राघत्।

११। मघिङ कैतवाप्यर्थयोः (मङ्घ, भ्वा, आ) कैतवमिह कितवक्रिया अक्षक्रीडनादिः। इ—मङ्घते। ङ—मङ्घते अक्षैः कितवः। अप्यर्थौ गतिनिन्दारम्भजवाः। (२) कैतवजवयोरेवायमिति केचित्।

---

(१) कविरहस्ये १०९ श्लोके द्राघतीति परस्मैपदप्रयोगोऽप्यस्ति तत् सुधीभिर्भाव्यम्।

(२) अघिङ गतौ निन्दारम्भजवेष्विति माधुक्तत्वात्।

११। मघि भूषे ( मङ्घ, भ्वा, प ) इ—मङ्घते ।

१२। रघिक् भासि ( रङ्घ, चु, प ) इ, क—रङ्घयति। भासि दीप्तौ ।

१२। रघिङ् गमने ( रङ्घ, भ्वा, आ ) इ—रङ्घते। ङ—रङ्घते। (१)

१३। राघृ ङ शक्तौ } ( राघ, भ्वा, आ )
१४। लाघृ ङ शक्तौ } ( लाघ, भ्वा, आ )

ऋ—अरराघत्। अललाघत्। ङ—राघते। लाघते। शक्ति सामर्थ्यम् ।

१५। लघिङ् अभुग्गत्योः ( लङ्घ, भ्वा, आ ) इ—लङ्घते। ङ—लङ्घते। अभुक् भोजनाभावः। तथाच "ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजन"इति वैद्यकम्। लङ्घने उपवासे इत्यर्थः।

१५। लघि शोषे ( लङ्घ, भ्वा, प ) इ—लङ्घते। शोष इहाल्पीकरणम्। "य व्याधिरलिदीप्ताग्निं कदाचिन्न न लङ्घती"ति हलायुधः। ६७। गतावप्ययं "अन्ये त्वलङ्घिषु शैलानि"ति भट्टौ। १५।२७।

१५। लघिक् त्विषि ( लङ्घ, चु, प ) इ, क—लङ्घयति। त्विषि दीप्तौ ।

वघि ङ्डघ्यर्थके श्रिघ्याघ्राणे स्लाघृ ङ कत्थने ।

---

(१) रङ्घते रेफादिरयं, उपादौ रघुरित्युक्तः कातन्त्रधातुवृत्तौ। मल्लिनाथेन तु अवेक्ष्य धातोर्गमनार्थमर्थविन्नकार नाम्ना रघुमात्मसम्भवमित्यस्टीकायां वघि धातुना निष्पादित ।

१६। वर्षिङ् अध्ययने (वर्ष्, भ्वा, आ) इ—वर्ष्यते। ङ—वर्षते। अध्यर्थको गतिनिन्दारम्भनधाः। (अध्यर्थेना समूढ इति क्वचित् अध्यर्थकः) वर्षे एव कैश्चित् पद्यते। (१)

१७। गिष्ठग्रासे (गिष्ठ्, भ्वा, प) इ—गिष्ठ्यते। (गिरस्तुपगिरिष्ठं च, इन्द्रजितं रावण इति शेषः, इति भट्टि ।१४।५२।)।

१८। श्लाघृ ङ कत्थने (श्लाघ, भ्वा, आ) अन्तःस्थतृतीय-युक्तातालव्यादिः। कत्थनं प्रशंसा। ङ—अशश्लाघत्। ङ—श्लाघते गुणिनं गुणी। (श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिप इति भट्टिः।८।७२)।

*

## ष्टिष्ठ ङास्कन्दि पष सघ हिंसे षान्तास्तु विंशतिः।

१६। ष्टिष्ठ ङास्कन्दि (ष्टिष, भ्वा, आ) आस्कन्द आस्कन्दनम् (आक्रमणम्) अभियोग इति भट्टमल्लः। न, ङ—स्तिघ्नुते (शत्रुं बली)। (२) तिष्टिषे।

२०। पष हिंसे } (पष, भ्वा, प)
२०। सघ हिंसे } (सघ, भ्वा, प)

शेषो दन्त्यादिः। न—सघ्नोति। असीषघत्, असीसघत्।

### षान्तास्तु विंशतिः।

---

(१) वर्षि वर्षि गत्याक्षेपे। गत्याक्षेपो वेगगतिरिति कातन्त्रधातुवृत्तौ।

(२) मूले स्तिघ्नुते नहीं यान्त उदाहृतम्। तदर्थमत्र तिमु विन्तनीयेति।

## चान्तवर्ग ।

**अर्चक् पूजे अर्च चाचि चाचि अच् अु गतेऽञ्चु च।**
**म्लिष्टोक्तौ चाञ्च क व्यक्ता वुचि र्थ्य समवायने ॥**

१। अर्चक् पूजे ( अर्च्च, चु, प ) क—अर्च्चयति । गोवर्द्धनस्त्विममात्मनेपदिनं मत्वा "विभ्राजसे मकरकेतनमर्च्चयन्ती"त्यादि स्खलितमित्याह ।

१। अर्च्च च (अर्च्च, भ्वा, उ) अ—अर्च्चति अर्च्चते । चकारात् पूजे । ( प्राणार्च्चुरच्चर्यां जगदर्च्चनीयमिति भट्टौ ।२।२०। भक्त्यार्च्चयति यो विप्रान् गुरून् देवांस्तथार्च्चति । अर्च्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपा इत्युभयत्र हलायुधः ।११६। ) ।

२। अचि च (अञ्च, भ्वा, प) इ—अञ्चते । चकारात् पूजे । अञ्चु गतिपूजनयोरिति पूजार्थो यः स एवायम् । इदित्पाठः पूजायां न लोपाभावार्थः । उदनुबन्धाभावश्च (१) लुभश्चपूजार्थाश्चेत्यादिना क्तप्रत्ययस्य निष्ठायाश्च नित्येमृविधानात् ।

२। अचि अ् गते } ( अञ्च, भ्वा, उ )
२। अच् अु गते } ( अच्, भ्वा, उ ) इ—अञ्चते ।
अ—अञ्चति अञ्चते । अ—अचति अचते । उ—अचित्वा अक्ता ।
(न्यञ्चते मत्यष्टं मोक्षो यथान्यस्यञ्चन्ति पादय इति हलायुधः ।।२२)।

---

(१) मुग्धबोधे अञ्चुगतिपूजनयोरित्युकारानुबन्धेन गत्यर्थे पूजार्थे च उदनुबन्ध एव पठितः । अत्र तु पूजार्थे उदनुबन्धो नास्तीति तद्विरोधमाशङ्क्याह उदनुबन्धाभावश्चेति । पूजार्थस्यास्य धातो लुभश्चेत्यनेन क्तप्रत्यये नित्येमविधानसामर्थ्यादेवास्य तत्प्रत्यये उदनुबन्धेन गत्यर्थे धातुनैवास्य कर्तव्य अञ्चता अञ्चु गतौ अञ्च पूजे इति गणद्वयपाठमीदृशं ज्ञापयति ।

२। अञ्च च म्लिटोक्तौ च (अञ्च, भ्वा, प) (अञ्चति अव्यक्तम्) ल—अञ्चिला अक्ता। अञ्च चेति चकारात् पूर्वौं च म्लिटोक्तौ। म्लिटोक्तौ चेति चकारादञ्च गते च। म्लिटोक्तिरव्यक्तशब्दः।

३। अञ्च क व्यक्तौ (अञ्च, चु, प) व्यक्तिरिह विशेषणं (विशिष्टीकरणम्) क—अञ्चयति वृद्धिं सुधीः विशिनष्टीत्यर्थः। (अञ्चयन्ति सदा यञ्च गुणाः सर्व्वातिशायिन इति हलायुधः। १२३)।

४। उचिर्य समवायने (उच, दि, प) ऋस्वादिः। इर्—औचत् औचीत्। अयं पुषादिरिति दुर्गः। (समवायनं मेलनम्) उच्यति केशः स्नानात्।

ऋच् श स्तुत्यां कुच ञ्रोधपर्ककौटिल्यलेखने।

५। ऋच् श स्तुत्याम् (ऋच, तुदा, प) श—ऋचति। आनर्च।

६। कुच ज् रोधपर्ककौटिल्यलेखने (कुच, भ्वा, प) ज—कोचः कुचः। रोधः क्रियानिरोधः जडीभाव इत्यर्थः। अस्मिन्नर्थे एव प्रायो वर्त्तते। यस्मिन् समुदिते रात्रि जनः सङ्कोचति चिताविति हलायुधः। १४०। (१) पर्कः सम्पर्कः।

कुच् तारशब्दे कुच शि सङ्कोचे काच् रवे काचि।
काच् ङ बन्धत्विषोः क्रुञ्च गत्यां कुञ्च च वक्रणे।
तौच्छ्ये खच ग् भूतिपूत्योरुत्पत्तौ ग्लुञ्चु दुर्गतौ॥

६। कुच तारशब्दे (कुच, भ्वा, प) तारशब्द उच्चैःशब्दः। कोचति ढक्का। भट्टमल्लस्तु तारे शब्दे च कोचतीति नानार्थे पठति। तन्मते तारस्थिकणता। कोचति काञ्चीं वणिक् चिक्कणयतीत्यर्थः।

(१) समुदिते इत्यत्र प्रमुदिते इति जन इत्यत्र तम इति च क्वचित् पाठः।

११। ग्लुञ्चु दुर्गतौ (ग्लुञ्च, भ्वा, प) अन्तःस्थतृतीययुक्त-पञ्चमस्वरौ। क्त—ग्लुञ्चित्वा ग्लुक्त्वा। लृ—अग्लुचत् अग्लुञ्चीत्।

## ग्रुच ग्लुचिरु चौर्य्ये च चञ्चुतौ चर्च्च केङ्समः।

१२। ग्रुचिरु चौर्य्ये च } (ग्रुच, भ्वा, प)
१३। ग्लुचिरु चौर्य्ये च } (ग्लुच, भ्वा, प)

द्वौ क्रमाद्रेफान्तःस्थतृतीययुक्तपञ्चमस्वरिणौ। लृ—अग्रुचत् अग्रोचीत्। अग्लुचत् अग्लोचीत्। क्त—ग्रोचित्वा ग्रुक्त्वा। ग्लोचित्वा ग्लुक्त्वा। चकारात् गतौ च।

१४। चञ्चुतौ (चञ्च, भ्वा, प) क्त—चञ्चित्वा चक्त्वा। इति गतिः। (चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्येति वेणीसंहारम्)।

१५। चर्च्च केङ्समः (चर्च्च, चु, प) इङ्समः अध्ययने (चर्च्चधातुः अधीङ्ल अध्ययने इतिगणपठितस्य इङ्धातोः समानार्थक इत्यर्थः)।

## चर्च्च जर्च्च झर्च्च युक्तौ भर्त्से तनुचु ध सङ्कुचि।

१५। चर्च्च युक्तौ भर्त्से } (चर्च्च, तु, प)
१६। जर्च्च युक्तौ भर्त्से } (जर्च्च, तु, प)
१७। झर्च्च युक्तौ भर्त्से } (झर्च्च, तु, प)

त्रयो रेफोपधाः। श—चर्च्चती चर्च्चन्ती। जर्च्चती जर्च्चन्ती। झर्च्चती झर्च्चन्ती। गुणस्थानरहितानां तुदादिपाठफलन्तु अवन्तानामादीपोरिति सुणो विभाषा, वेदमूच्चारणभेदश्च। भर्त्सः—सर्ज्जनम्।

१८। तनृचु ध सङ्कचि ( तनृच, रुधा, प ) उ—तञ्चित्वा तक्त्वा । ध—तनच्मि व्योम विस्तृतम् ।

**तनृच् त्वञ्चुतौ त्वच् श्र दृत्यां पिच्चक् छेदे डु औप्पच।**
**पाके पचौ ङ पचि ङ व्यक्तीकारे पचिक् ततौ ।**

१८। तनृचु दूतौ } ( तनृच, भ्वा, प )
१६। त्वनृचु दूतौ } ( त्वनृच, भ्वा, प )

शेषो वकारयुक्तः । उ—तञ्चित्वा तक्त्वा । त्वञ्चित्वा त्वक्त्वा । दूति गतिः ।

२० । त्वच् श्र दृत्याम् ( त्वच, तु, प ) वकारयुक्तो दन्त्यवर्गाद्यादिः । श्र—त्वचन्ती त्वचती । दृतिः संवरणम् । त्वचति कवचेन वीरः । ( त्वचति चाद्दणोतीति त्वक्, त्वचेः क्विप् ) ।

२१ । पिच्चक् छेदे ( पिच्च, चु, प ) चद्वयान्तः । क—पिच्चयति । ( नागसीसकयोगेष्टवप्राणि त्वपुपिच्चटमित्यमरः । पिच्चाते कुट्यते दूति शकटादिभ्योऽटन्निति चीरस्वामी ) ।

२२ । डु औप् पच पाके ( पच, भ्वा, उ ) पाको विक्लित्त्यनुकूलव्यापारः । डु—पक्त्रिमम् । ञ—पचति पचते तण्डुलानोदनं लोकः । औ—पक्ता । ध—पचा ।

२२ । पचौ ङ व्यक्तीकारे } (पच, भ्वा, आ)
२२ । पचि ङ व्यक्तीकारे } (पञ्च,भ्वा, आ) औ—पक्ता ।

ङ—पचते । इ—पञ्चते । ङ—पञ्चते स्वगुणं भिक्षुकः ।
(यो वाग्मी वादिना मध्ये वाचमुच्चै प्रपञ्चते दूति हलायुधः।१४७)।

२२ । पचिक् ततौ ( पञ्च, चु, प ) ततिर्विस्तारः । इ, क—पञ्चयति धीरो ग्रन्थार्थम् । ( प्रपञ्चयन्ति यत्कीर्त्तिं दिङ्मुखेषु महाजना दूति हलायुधः । १४७ ) ।

**पृच् कि संयमने पृच् धी च सम्पर्के पृचील् ङ च ।**

२३ । पृच् कि संयमने (पृच, चु, आ, प) संयमनं बन्धनम् । कि—पर्च्चयति पर्च्चति दुष्टं राजा ।

२३ । पृच् धी च सम्पर्के (पृच, रुधा, प) सम्पर्क इह सम्पृक्तीकरणं सम्पृक्तीभावश्च । ध—पृणक्ति धनुषा शरम् । सम्पृणक्ति न पापिभिरिति हलायुधः । २८ । ई—पृक्तः । पपर्च्च । (वागर्थाविव सम्पृक्ताविति रघुः) चकारात् पृच कि च (चौरादिक-पृच्धातुरपि सम्पर्कार्थक इत्यर्थः । तथाच—सम्पर्च्चयति न क्षुद्रैर्न सम्पर्च्चति वञ्चकैरिति हलायुधः । २८ ) ।

२३ । पृचील् ङ च (पृच, अदा, आ) ई—पृक्तः । ल, ङ—पृक्ते । परीपृच्यते । चकारात् सम्पर्के । सचेह सम्पृक्तीभावः । सम्पृक्ते नाभिशस्तैर्वै इति हलायुधः । २८ । सम्पृङ्क्ते मधुना चूर्णं भिषगिति तु अन्तर्भूतण्यर्थत्वादिति चतुर्भुजः ।

**मचि ङुच्छ्राय पूत्यर्च्चाभाःसु मच् ङ च कल्कने ।**
**दम्भे शाठ्ये मुच् मुचिङ् च मुच् क मोचे मुच्लृश् पञ्जौ ।**
**मोचे म्रुच् म्लुचु दूर्गत्यां म्रुञ्च म्लुञ्च मञ्च् मुञ्च च ॥**

२४ । मचिङुच्छ्रायपूत्यर्च्चाभाःसु (मञ्च, भ्वा, आ) इ—मञ्च्यते । ङ—मञ्चते । उच्छ्राय उच्चीभावः । (पूतिर्धारणं, भादीप्तिः । शयनं मञ्चपर्य्यङ्केत्यमरः) ।

२४ । मच् ङ च कल्कने दम्भे शाठ्ये (मच, भ्वा, आ) कल्कनमिति कल्कं करोतीति ञौ रूपं चूर्णीकरणमित्यर्थः । ङ—मचते तण्डुलं शिला । चकारात् मचि ङ च (मचिधातु-रपि कल्कनदम्भशाठ्येष्वर्थेषु वर्त्तते इत्यर्थः) ।

१५

२५। मुच ङ च (मुच, भ्वा, आ)
२५। मुचि ङ च (मुच, भ्वा, आ) द्वौ पञ्चमस्वरिणौ। ङ—मोचते। इ—मुञ्चते। ङ—मुञ्चते। पुनः पाठात् पूर्व्वौ नेदित्। तथाच "एक एवेत् पाठबलाद्द्वाभ्योऽनेकेषु धातुषु। बाधे लाघवशिष्टं हि स प्रति प्राक्प्रसक्तित इति बोपदेवः। अस्यार्थः—(अनेकेषु) द्वयोर्बहुषु धातुषु वा, पाठबलात्; एकेन निर्व्वाहेऽपि सजातीयस्य पुनः पाठबलात्, एक एव (१) इत् बाध्यः सम्बन्धरहितः कार्य्यः। हि यस्मात् बाधे सम्बन्धाभावे लाघवमिष्टम्। सर्व्वधातुना सम्बन्धे एकेनैवेष्टसिद्धौ पृथक्पाठो गौरवमिति सम्बन्धाभावे लाघवम् (२)। स बाधः प्रति प्राक्प्रसक्तितः (प्राक्प्रसक्तिर्यस्य स तं प्रति भवतीति शेषः) पूर्व्वप्रसक्तस्यानुबन्धस्य पूर्व्वप्रसक्तेन धातुना सम्बन्धो नास्तीति। यत्र तु एकेन (धातुना) निर्व्वाहो न स्यात् तत्र एकोऽपि (अनुबन्धः) न बाध्यते इति बोध्यम्। तेन भ्रमिर्, भम्भय, भ्रमुजण चाले इत्यादौ सर्व्वेऽनुबन्धाः पूर्व्वस्य स्युरेव। चकारात् कल्कन दम्भयाद्येषु।

२५। मुच क मोचे (मुच, चु, प) क—मोचयति। मोचस्त्यागः। (यत्र प्रमोचयति पापचयश्च काये इति हलायुधः। ४८)।

२५। मुच् ल्ट शपञ्जौ मोचे (मुच, तुदा, उ) मोचस्त्यागः। ल्ट—अमुचत्। श, प, ञ—मुञ्चति मुञ्चते धनं दाता। औ—

(१) एवकारेण ङकारोऽत्र पूर्व्वस्य न बाध्य इत्यर्थः।

(२) अत्र मुचि ङ च इत्यस्य इकारेण सह मुच ङ च इत्यस्य यदि सम्बन्धः स्यात्तदा द्वावप्यात्मनेपदिनौ मुञ्चधातू स्यातां। तर्हि पृथक् पाठः पौनरुक्त्यरूप गौरवमावहति। तत्सम्बन्धाभावे तु तथाविधगौरवाभावाल्लाघवमिति तात्पर्य्यं बोध्यम्।

मोक्ता । बन्धनरहितीभावेऽकर्मकोऽयम् । आलानात् मुक्तो गजः, अत्र कर्त्तरि क्तः। एवं पापात् मुक्त इत्यादौ पापबन्धनात् मुक्त इत्यर्थः।

२६ । म्रुचु इर् गत्याम् । (म्रुच, भ्वा, प)

२७ । म्लुचु इर् गत्याम् । (म्लुच, भ्वा, प) द्वौ क्रमाद्रेफान्तःस्थतृतीययुक्तौ । उ—म्रोचित्वा म्रुक्ता, म्लोचित्वा म्लुक्ता । इर्—अम्रुचत् अम्रोचीत् । अम्लुचत् अम्लोचीत् ।

२८ । म्रुञ्च च (म्रुञ्च, भ्वा, प)

२९ । म्लुञ्च च (म्लुञ्च, भ्वा, प)

३० । मञ्च च (मञ्च, भ्वा, प)

३१ । मुञ्च च (मुञ्च, भ्वा, प)

द्वावाद्यौ क्रमाद्रेफान्तःस्थतृतीययुक्तादी । तृतीय आद्यस्वरौ । अन्ये पञ्चमस्वरिणः । सर्वे ओष्ठ्यवर्गशेषाद्या नोपधाः । उ—म्रुञ्चित्वा म्रुक्ता । म्लुञ्चित्वा म्लुक्ता । मञ्चित्वा मक्ता । मुञ्चित्वा मुक्ता । चकारात् गत्याम् । कातन्त्रादौ द्वितीयो न दृश्यते । रेफयुक्ताद्यस्वरौ म्रञ्च इत्यधिकोऽपि दृश्यते ।

## टु डु याचृञ् याचने रिच् कि सम्पर्कवियोगयोः ।

३२ । टुडु याचृञ् याचने (याच, भ्वा, उ) याचनमात्मने दानार्थं प्रेरणम् । ट्—याचथुः । डु—याचित्रिमम् । ऋ—अययाचत् । ञ याचति याचते नृपं भूमिं विप्रः । ग्रहणार्थं प्रेरणेऽपि—याचति वित्तं गुरवे शिष्यः ।

३३ । रिच् कि सम्पर्कवियोगयोः (रिच, चु, भ्वा, प) कि—रेचयति रेचति । रिङ्क्ते रिपुर्यदाक्रान्तो धनैर्मन्त्रैश्च रेचति । रेचयन्ति च यन्नारीनयनान्यश्रुवारिभिरिति हलायुधः । ६८ ।

## रिचिर्ज्ञधौ विरेके रुच् ङ ल्ट प्रीतिप्रकाशयोः ।

३३ । रिचिर्ज्ञधौ विरेके ( रिच, रुधा, ज ) विरेक' पौनः-पुन्येन पुरीषोत्सर्ग इति चतुर्भुजः । इर्—अरिचत् अरैचीत् । ञ, ध—रिणक्ति रिङ्क्ते अतिसारकी । औ—रेक्ता । (हलायुधोदाहरणन्तु प्राक्दर्शितम् ) ।

३४ । रुच् ङ ल्ट प्रीतिप्रकाशयो. ( रुच्, भ्वा, का ) प्रीतिरिहानुरागविशेषः । यत्र यस्यानुरागस्तस्य सम्प्रदानत्वम् । ङ—रोचतेऽन्नं बुभुक्षवे । ल्ट—अरुचत् । ( इयमिष्टगुणाय रोचता रुचिरार्था भवतेऽपि भारतीति भारविः । २।५ ) ।

## लोचृक भासि लोचृ ङीत्त्वे लुञ्चापनयने वचौ ।
## वाचि वच् कच सन्देशे वच्लौ वाचि विचिर्लिंधौञ् ।
## पृथक्त्वे व्यचशि व्याजे सम्बन्धे कङ् वञ्च वञ्चने ॥

३५ । लोचृक् भासि ( लोच, चु, प ) ऋ—अलुलोचत् । क—लोचयति । भासि दीप्तौ । तथाच चुरादौ ( कातन्त्रे इति शेषः ) घट पुट लुट तुजि पिजि लजि भजि लघि त्रसि पिसि कुसि ( १ ) दशि घट घटि दृहि बर्ह वेलृह गुप धूप विच्छ चीव पुथ लोक लोचृ णद कुप तर्क वृधु वृत भासार्था इति प्राञ्च । भासार्था दीप्त्यर्था इति धातुप्रदीपः । स्वमतेऽपि तर्कदीप्ताविल्यादिषु स्फुटनिर्देशादूनविंशदेते दीप्त्यर्था एव । किन्तु पुरुषोत्तमशरणादेवै भाषार्था इति स्फुर्त्यन्यप्रकारं मत्वा एतान् वचनार्थानाहतु ।

---

( १ ) कुशि इत्यपि । क्रसि इत्येके इति कातन्त्रधातुवृत्तौ ।

३५। लोचृ डोचे ( लोच, भ्वा, श्रा ) ईक्षः पर्य्यालोचनं प्रणिधानमिति यावत्। श्ल—श्रलुलोचत्। ङ—लोचते कार्य्यं सुधी। ( श्रालोचते सदा नीतिमिति हलायुध. । २४८ ) ।

३६। लुञ्चापनयने ( लुञ्च, भ्वा, प ) (अपनयनं दूरीकरणम्) सोऽलुञ्चीत् कर्णनासिकमिति भट्टि। १५।५७।

३७। वचौ वाचि ( वच, भ्वा, प ) औ—वक्ता। श्रयं सेमित्येके। वचिता। न वचत्यनृतं वच इति हलायुधः। ८४।

३७। वचक् च सन्देशे (वच, चु, प) सन्देशो वचनविशेषः। वाचयत्यखिला लिपिमिति हलायुधः। ८४। चकारात् वचीच ( सन्देशार्थक इत्यर्थः ) ।

३०। वचौ वाचि ( वच, श्रदा, प ) ल—वक्ति। औ वक्ता। नान्त्यन्त्वोर्वच. प्रयोग इति जौमराः। श्रस्मादन्तिविभक्तिर्न प्रयुज्यते इत्यालङ्कारिकाः।

३८। विचिर्लि धौञ् पृथक्त्वे ( विच, जुहो, उभा, उ ) इर्—अविचत् अवैचीत्। र्लि, ञ—वेवेक्ति वेविक्ते मूर्खात् पण्डित पृथक् स्यादित्यर्थः। विज इति जान्तो यः स एव चान्तोऽपि पठ्यते कस्यचिदनुरोधात्। तेन निजा खेरेणुरित्यस्य वृत्तौ विजग्रहणेनैवास्य ग्रहणात् खेर्गुणः। ध, ञ—विनक्ति विङ्क्ते। विविनच्मि दिवः सुरानिति भट्टिः। ६।३६। पृथक्करोमीत्यर्थः। औ—वेक्ता।

३९। व्यच शि व्याजे सम्बन्धे (१)(व्यच, तुदा, प) व्याज-

---

(१) सम्बन्धे इत्यस्य सम्भवे इति क्वचित् पाठ। पाणिनीये कातन्त्रे च व्यच व्याजीकरणे इत्येक एवार्थ पठित।

स्खलः। णि—विचति सन्तं स्खलन्स्खलयतीत्यर्थः। अविचीत् (अत्र व्यचोजिरञ्जिदृशीति जिः) विव्याच।

४०। कङ वश्च वञ्चने (वञ्च, चु, आ) वञ्चनं विसंवादः। मिथ्याकथनमिति वररुचिः। क, ङ—वञ्चयते साधुं नीचः (यो न वञ्चयते किञ्चित् सदा सत्यपरायणः इति हलायुधः। १७१)।

## वञ्चु गत्यां वर्च्चङ् दीप्तौ व्रश्चूश छेदे ह्वचीध् ह्रतौ।

४०। वञ्चु गत्याम् (वञ्च, भ्वा, प) ञ—वञ्चित्वा वक्त्वा।

४१। वर्च्चङ् दीप्तौ (वर्च्च, भ्वा, आ) ङ—वर्च्चते। (वर्च्चसेजः। (१)।

४२। व्रश्चूश्छेदे (व्रश्च, तुदा, प) दन्त्यसोपधः, चयोगात्तालव्यः। तेन क्विपि व्रश्वाजेति षडि निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात्तालव्यस्य दन्त्यत्वे संयोगादेः सस्य लोपे वृट् इति। तथाच—"न कारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तवर्गजः"इति वोपदेवः। अस्यार्थः—धातुषु मध्ये झलि झसि परे अनुस्वारपञ्चमौ नकारजौ ज्ञेयौ, तालव्यशकारश्च दन्त्यसकारजातः, मूर्द्धन्यषकारात् परटवर्गोऽपि तवर्गजातो ज्ञेय इति। एवं जिघ्रास्थाने इत्यादीनाञ्च थकारादिप्रकृतित्वे तस्थौ इत्यादि बोध्यम्। ऊ—अव्रश्चीत् अव्राक्षीत्। श—वृश्चति। (वृश्चते छिद्यते इति व्रश्चः शकि इच इत्यमरटीकायाम्। ववृश्चुराजुघूर्णुश्चेति भट्टिः। १४।७७। चरिराजसाः परस्परमिति शेषः)।

४३। ह्वचीध् ह्रतौ (ह्वच, रुधा, प) ई—ह्वक्तः। ध—ह्वणक्ति। वरीहचते। वञ्जनार्थीयमित्येके।

(१) वयसोष्यादिरपीति कातन्त्रधातुवृत्तौ।

**ष्वच ष्वच शचिङ् गत्यां शचङ् वाचि शुचिर्य्यञौ।**
**शौचे विशरणे क्लेदे शुच् शोके षच् ङ सेचने॥**

४४। ष्वचङ् गत्याम् (ष्वच, भ्वा, आ)
४५। ष्वचिङ् गत्याम् (ष्वञ्च, भ्वा, आ)
४५। शचिङ् गत्याम् (शञ्च, भ्वा, आ) ष्वावादौ वकारयुक्तादौ। पुनः पाठादाद्योनिदनुबन्धः ङियस्तु सर्व्वे। एक-एवेत् पाठबलादिति नियमात्। किन्त्वत्र मध्यमोऽपीदनुबन्धो भ्रान्तैः पठ्यते तद्धेयम्, अन्यथा आम्रेडितानुबन्धत्वादाद्यस्य ङानु-बन्धानुपपत्तेः। ङ—ष्वचते। इ—ष्वञ्चते। शञ्चते। ङ—ष्वञ्चते। शञ्चते।

४५। शचङ् वाचि (शच, भ्वा, आ) ङ—शचते। (पुलो-मजा शचीन्द्राणीत्यत्र शच व्यक्तायां वाचि अच्, गौरादित्वादी-वित्यमरटीकायाम्)।

४६। शुचिर्य्यञौ शौचे विशरणे क्लेदे (शुच, दिवा, उ) शौचं शुद्धिः। विशरणं भेदः। क्लेद आर्द्रभावः। इर् अशुचत् अशोचीत्। य, ञ—शुच्यति शुच्यते लोकः स्नानात्। शुच्यति गात्र शाद्यः। शुच्यति वस्त्रमम्भसा। ई—शुक्तः। शुचिर् पूतीभावे इति प्राञ्चः। रमानाथस्तु एतदनुरोधादेतानर्थान् व्याख्याति। (१)।

४६। शुच् शोके (शुच, भ्वा, प) तालव्यादिः। शोचति। शोकः पुत्रादेरदर्शनाद्दुःखानुभवः। किं शोचते हाम्युदये वताख्या-

(१) शौचे विशरणे क्लेदे पूतीभावोऽत्र कथ्यते इति वोपदेव इत्युक्तं रमानाथेन।

निति भट्टिः। ३।१२। प्रियतमा मां शोचते इति महानाटके गणकृतानित्यत्वादात्मनेपदम्। (१)।

४७। षच ङ सेचने (षच, भ्वा, आ) मूर्द्धन्यादिः। ङ— सचते जलं मेघः।

षच् सम्बन्धे षञ्जगतौ षिच् षशौञ् क्षरणेष्ट च।
ङ प्रसादे चकारान्ताः पञ्चाशत् समुदीरिताः॥

४७। षच सम्बन्धे (षच, भ्वा, प) सचति। (सक्तुः) (२)।

३८। षञ्ज गतौ (षञ्ज, भ्वा, प) सञ्जति।

४९। षिच षशौ ञ क्षरणे (षिच, तुदा, उ) प, श, ञ— सिञ्चति सिञ्चते। औ—सेक्ता। सिषिचुरवनिमम्बुवाहा इति भारविः।

५०। ष्टच ङ प्रसादे (ष्टच, भ्वा, आ) मूर्द्धन्यादिस्तमध्यः। प्रसादः प्रसन्नीभावः। ङ—स्तोचते जलं शरदि। तोष्टुच्यते। षस्याधोमूर्द्धन्य ण इति केचित् स्नोचते सोष्णुच्यते।

चकारान्ताः पञ्चाशत् समुदीरिताः।

(चकारान्ता धातवः पञ्चाशत्संख्यकाः कथिताः)।

---

(१) व्यतीहारे आत्मनेपदमिति कचित् पाठः।

(२) समवाये च दृश्यते 'भुवि शासिगुणेन च यत् सचते" इत्युक्तं कातन्त्रधातुवृत्तौ। तत्र सम्बन्धार्थे आत्मनेपदित्वेन पाठः सुधीभिर्भाव्यः।

छान्तवर्गः।

आञ्छायामेऽथोञ्छि शुञ्छे उच्छीम् बन्धसमापने।
वर्जनेऽतिक्रमेऽथ ऋच्छीम् मूर्त्तौ गमनमोहयोः॥

१। आञ्छि आयामे (आञ्छ, भ्वा, प) इत्यादौ (गणपाठे छकारस्य) द्वित्वाभाव. प्रकृतिभ्रमनिरासार्थं। इ—आञ्छ्यते। आयामो दीर्घीकरणम्। आञ्छति कटं शिल्पी। (तावदाञ्छति वल्गुणा नभ्यता धूलिपङ्क्तिरिति हलायुध। २१६)।

२। अथोञ्छि शुञ्छे (उञ्छ, तुदा, प) एतदाद्यास्त्रयो ऽकाराद्याः। इ—उञ्छ्यते। श—उञ्छन्ती उञ्छती। उञ्छ उद्धृतशस्यशेषापहरणम्। सुलभ शस्यमुञ्छन्ति यद्देशे व्रतिनो द्विजा इति हलायुध.। (१) उञ्छ स्फोटनमित्येके।

२। उच्छीम् बन्धसमापने वर्जनेऽतिक्रमे (उच्छ, तुदा, प) इ—उष्टः। श—उच्छन्ती उच्छती। चत्वारोऽर्थाः। समापने उच्छति रात्रिः। भरण्या व्युष्टायामुषसि जनयामास तनयमिति। व्युष्टाया समाप्तायामित्यर्थः।

३। अथ ऋच्छीम् मूर्त्तौ गमनमोहयो (ऋच्छ, तुदा, प) श—ऋच्छन्ती ऋच्छती। मूर्त्ति कठिनीभावः, मूर्त्तिः काठिन्यकाययोरित्यमरात्। ऋच्छति घृतं कठिनं स्यादित्यर्थः। ऋच्छति इन्द्रो

(१) उञ्छि उञ्छे। तृतीयस्वरादयमोऽयम्। उञ्छन स्फोटनमित्येके। उद्धृतशस्यशेषापहरणमित्यन्ये। सुलभ शस्यमुञ्छन्ति यद्देशे व्रतिनो द्विजा इति हलायुध इत्येव कातन्त्रधातुवृत्तावपि। राजश्री शौरीन्द्रमोहनठाकुरमुद्रित कविरहस्ये तु उत्तमं यत्र शस्यानि यद्देशे वतिनो द्विजा। मोञ्छन्ति मधुरे-णैवामखेन दीनता प्रजा इत्येव पाठो दृश्यते।

गच्छति मुह्यति चेत्यर्थः। मोहस्थाने इन्द्रियप्रलयं पठन्ति माघः। उच्छति इहस्येन्द्रियं प्रलीयते इत्यर्थ इति रमानाथः।

**जर्छ झर्छश भर्त्सोक्त्योः प्रछौश् ज्ञीप्से ऋचो पिछ। मिछश् बाधे म्लेछ्कि देश्योक्तौ मुर्छा मोह उच्छ्रये॥**

४। जर्छश भर्त्सोक्त्योः } (जर्छ, तुदा, प)

५। झर्छश भर्त्सोक्त्योः } (झर्छ, तुदा, प) श—जर्च्छन्ती जर्च्छती।, झर्च्छन्ती झर्च्छती। भर्त्सस्तर्जनम्।

६। प्रछौश ज्ञीप्से (प्रछ, तुदा, प) ज्ञीप्सा ज्ञातुमिच्छा, ज्ञपधम इत्यस्यैव ज्ञानपक्षे निष्पादनात्। षौ—अप्राक्षीत्। श—पृच्छति वार्त्ता गुरु शिष्यः। (पप्रच्छ कुशलं राज्ञे राज्याश्रममुनिं मुनिरिति रघौ। १। ५८)।

७। ऋचो पिछ श बाधे } (पिछ, तुदा, प)

८। मिछ श बाधे } (मिछ, तुदा, प) श—पिच्छन्ती पिच्छती। मिच्छन्ती मिच्छती। बाधो विहतिः।

९। म्लेछ कि देश्योक्तौ (म्लेछ, चु, भ्वा, प) अन्तःस्थतृतीययुक्तादिः। देश्या ग्राम्या उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थः। कि—म्लेच्छयति म्लेच्छति मूढ़। अन्तर्वेद्यामसौ विद्वान् म्लेच्छति व्रतवतः। न म्लेच्छयति सर्वज्ञो विवादे वादिभिः सहेति हलायुधः। १८७। अनेकार्थत्वादव्यक्तशब्देऽपि। तथाच अथ म्लिष्टमविस्पष्टमित्यमरः। म्लेछ व्यक्तायां वाचीति माघः। तत्र रमानाथस्तु "म्लेच्छति पटुर्व्यक्तं वदतीत्यर्थः। अव्यक्तायामिति पाठे कुत्सितायां वाचीत्यर्थः। तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिता इति भाष्यवचनेन नञोऽप्राशस्त्यार्थता"दित्यन्तमाह।

१०। मुर्च्छ मोह उच्छ्रये (मुर्च्छ, भ्वा, प) पवर्गश्रेषादिर्द्वन्ती। तेन क्विपि राच्छोर्लोप इति छलोपे मूः मुरौ मुरः। घा—मूर्च्छितं मूर्त्तं तेन। प्रमूर्च्छितः प्रमूर्त्तः सः (आत्वादिदे वा) मोहो ध्यानरहितीभावः। उच्छ्रयो वृद्धिः। मूर्च्छति रोगः। मुमूर्च्छ सत्यं रामस्य समानव्यसने इराविति रघुः।

## युच्छ प्रमादे लाच्छि लच्छ लक्षणे विच्छक त्विषि।

११। युच्छ प्रमादे (युच्छ, भ्वा, प) अन्तःस्थप्रथमादिः पञ्चमस्वरी। प्रमादोऽनवधानता। युच्छति पापे साधुः। ओष्ठ्यवर्गाद्यादिरिति रमानाथः। (पुच्छ इत्यर्थः) पचादित्वादनि पुच्छो लाङ्गूलम्। ओष्ठ्यवर्गश्रेषादिरिति त्रिलोचनः। (मुच्छ इत्यर्थः) मुच्छति।

१२। लाच्छि लक्षणे } (लाञ्छ, भ्वा, प)

१३। लच्छ लक्षणे 　(लच्छ, भ्वा, प) पूर्व्वी द्वितीयस्वरी। इ—लाञ्छ्यते। लच्छति दर्पं चक्रेण गोपः (चिह्नयुक्तं करोतीत्यर्थः) (कलङ्काङ्कौ लाञ्छनञ्चेत्यमरः)।

१४। विच्छक् त्विषि (विच्छ, चु, प) क—विच्छयति। त्विषि दीप्तौ।

## विच्छय गतौ वाच्छि कामे म्लुर्च्छ स्फुर्च्छत विस्मृतौ।

१४। विच्छय गतौ (विच्छ, तुदा, प) विच्छायति विच्छायते। आयान्तत्वादुभयपदमिति वोपदेव। (सनः पक्षे धोर्वायात्) पक्षे य—विच्छति, विच्छन्ती, विच्छती। (यत्र विच्छति तद्गृहो यत्र विच्छायति स्वयम्। विच्छायते ततोऽन्यत्र नृपतीना सुखाश्रयः। इति हलायुधः। १२०)। (१)

---

(१) विच्छाययति तत्रासौ नृपतीना सुखाश्रयमिति पाठस्तु चिन्त्य।

१५ । वाछि कामे (वाञ्छ, भ्वा, प) इ—वाञ्छ्यते धनं जनेन ।

१६ । स्वुर्च्छा विस्मृतौ } (स्वुर्च्छ, भ्वा, प)
१७ । स्फुर्च्छा विस्मृतौ } (स्फुर्च्छ, भ्वा, प) द्वौ दन्त्यादी, ऋस्विनौ, क्रमेण वकारौष्ठ्यवर्गद्वितीययुक्तौ च । क्विपि स्वूः स्वुरौ स्वुरः । स्फूः स्फुरौ स्फुरः । भ्वा—स्वूर्च्छितं स्वूर्णं तेन । प्रस्वूर्च्छितः प्रस्वूर्णः सः । स्फूर्च्छितं स्फूर्णं तेन । प्रस्फूर्च्छितः प्रस्फूर्णः सः । (भावादिष्टे वा) स्वूर्च्छति स्फूर्च्छति कथां मद्यपः ।

## ऊर्च्छा कौटिल्यके ह्रीच्छ लज्जे छान्तोनविंशतिः ।

१८ । ऊर्च्छा कौटिल्यके (ऊर्च्छ, भ्वा, प) ऋस्वी । क्विपि ह्वः ह्वरौ ह्वरः । भ्वा—ह्वर्च्छितं ह्वर्णं तेन । प्रह्वर्च्छितः प्रह्वर्णः सः । ह्वर्च्छति खलः कुटिलः स्यादित्यर्थः । ह्वर्च्छति चौरः अपसरतीत्यर्थ इति धातुप्रदीपः ।

१९ । ह्रीछ लज्जे (ह्रीछ, भ्वा, प) रेफयुक्तादिचतुर्थस्वरी । ह्रीच्छति वधूः ।

छान्तोनविंशतिः ।

(संख्यासङ्गतिस्तु पूर्ववदिति) ।

---

## जान्तवर्गः ।

अज क्षेपे गतेऽजिक् तु भास्यर्ज्ज त्वर्ज्जनेऽर्ज्जक ।
संस्कारेऽञ्जू ध जि व्याप्तिगतिम्नचण ईजि तु ॥
ईज् ङ कुत्से गतावुजआर्ज्जवेऽथोर्ज्जक् जीवने ।
चलेऽधार्ज्जङ् गतिस्थैर्य्योर्ज्जनार्ज्जन भर्ज्जिङ् भजि ॥

१। ग्रज चेपे गते (ग्रज, भ्वा, प) ग्रजति। (चेपे ग्रजनम्। गतौ वातमजः)।

१। ग्रजिक् तु भासि (ग्रज्ञ, चु, प) इ, क—ग्रज्ञयति। भासि दीप्तौ। (व्यञ्जयन्ति च गोदानं यद्देशे याज्ञिका द्विजा इति हलायुधः। २२८)।

२। ग्रर्ज्ज तु ग्रर्ज्जने (ग्रर्ज्ज, भ्वा, प) ग्रर्ज्जनमलब्धस्य लाभः। ययथार्ज्जति यः स्थिरमिति हलायुधः। १००।

२। ग्रर्ज्जक संस्कारे (ग्रर्ज्ज, चु, प) क—ग्रर्ज्जयति किमपि लोकः, संस्करोतीत्यर्थः। प्रति यत्ने इति माघः (१)। ग्रर्ज्जयति धनं परिजन इति रमानाथः। (सर्व्वोऽप्यर्ज्जयति द्रव्यमात्मनः प्रीतिहेतवे इति हलायुधः। १००)।

३। ग्रञ्जू घञि व्यक्तिगतिम्रचणे (ग्रञ्ज, रुधा, प) ज—ग्रञ्जिष्यति ग्रङ्क्ष्यति। घ—ग्रनक्ति। ञि—ग्रक्तोऽस्ति। व्यक्तिः स्फुटीकरणम्। शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यतामिति माघः। १।२६। ग्रभ्यनक्ति तैलेन गात्रं जनः।

४। ईजि तु ङ कुत्से गतौ (ईञ्ज, भ्वा, ग्रा)
४। ईज ङ कुत्से गतौ (ईज, भ्वा, ग्रा) इौ दीर्घादी। इ—ईञ्जते। ङ—ईञ्जते, ईजते। कुत्सः कैश्चिन्न मन्यते।

५। उज ग्रार्ज्जवे (उज, तुदा, प) ऋकारादिरोष्ठ्यवकारोपधः। तेन "र्व्वनचतयो"ति दीर्घो न स्यात्। "स्वादौ नवद्र"इति उजिजिषति। ऊर्णूञोर्दीर्घपाठसामर्थ्यात् स्वरादेर्न दीर्घ इति

(१) ग्रर्ज्जी प्रतियत्ने इत्युक्तं वातत्वे।

केचित् ( १ )। दन्त्यवकारवत्त्वात् न्यूजतीत्यत्र दीर्घ इत्यप्येके। य—ऋजन्ती ऋजती। आर्ज्जवमवक्रीभावः। ऋजति साधुरवक्रः स्यादित्यर्थः। ( २ )।

६। अथोर्ज्जक् जीवने बले ( ऊर्ज्ज, चु, प ) दीर्घादिः। क—ऊर्ज्जयति जनो जीवति बली स्यादित्यर्थः। ( ऊर्ज्जस्वल: स्यादूर्ज्जस्वी य ऊर्ज्जातिशयान्वित इत्यमरः। ऊर्ज्जक् जीवने बले सेमक्तात् सरोरित्यः पश्चादाप्, ऊर्ज्जाबलं पराक्रमो वा तदतिशययुक्तस्तव द्वे इति तट्टीकाकारः। ऊर्ज्जयन्ति च दानेन सम्मानेन पदातय इति हलायुधः। २१५ )।

७। अथर्ज्जङ् गतिस्थैर्य्योर्ज्जनार्ज्जने ( ऋज, भ्वा, आ ) ङ—अर्ज्जते। ऊर्ज्जनं जीवनं बलवद्भावश्च। ( ऋजुः, ऋजेः कुरित्यमरटीकायाम् )।

७। ऋजिङ् भ्रजि ( ऋञ्ज, भ्वा, आ ) ऋसादिः। भ्रजि भर्ज्जने। ङ—ऋञ्जते। ङ—ऋञ्जते तण्डुलान् लोकः।

एजृङ् दीप्तावेज कम्पे ओलज्युत्त्क्षेपणे चजिक्।
तङ्क्ते चजि चजप् मङ्दागत्योः चीज् कूज हिक्कने॥

८। एजृङ् दीप्तौ (एज, भ्वा, आ) ऋ—मा भवानेजिजत्। ङ—एजते।

---

(१) ऋजेर्दन्त्ये बलोपधेति अधुनि ( अपि ) वकारलोपे ऋजो बलमिति कातन्त्रधातुवृत्तिः।

(२) र्य्यमच् तयोति सूत्रेण रेफपरे ऋकारस्य दीर्घसम्भवेऽपि ऊर्ण ऊर्ज्ज इत्यनयोर्दीर्घपाठेन वकारे रेफे च परे कुसादीनां धातूनामादिस्वरस्य दीर्घो न स्यादिति सूचितं तेन ऋजधात्वर्हस्वादिरेवेति बोपाह्विदायय इति स्फुटितार्थं।

८। एजृ कम्पे (एज, भ्वा, प) ष्ट—मा भवानेजिजत्। एजति वायुना वृक्षः। (एजते राजचिह्नैर्य एजयत्यखिलं जगदित्युभयत्र हलायुधः। २६१८)।

९। ओलज्युतृक्षेपणे (ओलस्ज, भ्वा, प) अन्तःस्थतृतीयमध्यः। द्र—ओलज्जते धूलिर्वायुना।

१०। लजिक् तर्के (लञ्ज, चु, प) तर्को दुःखेन जीवनम्। द्र, क—लञ्जयति दीनः।

१०। लजिप् म ङ दागत्योः } (लञ्ज, भ्वा, आ)
१०। लजप् म ङ दागत्योः } (लज, भ्वा, आ)

धू—लञ्जते। प—लञ्जा। सेमृक्षात् सरोरित्यनेनैवेट्सिद्धौ धातुबन्धस्वरपर्यन्तघटादेर्ङ् इति प्राचीनमतानुवादार्थः। म—अललञ्जि अलाञ्जि लञ्जं लञ्जं लाञ्जं लाञ्जम्। मानुबन्धबलादनुपधाया अपि दीर्घः। स्मते तु अत्र दीर्घविधिरुपधां नापेक्षते। ङ—लञ्जते। लजते। प—लजा। म—लजयति। दा दानम्।

११। चीज शिक्षने } (चीज, भ्वा, प)
१२। कूज शिक्षने } (कूज, भ्वा, प)

शिक्षनमव्यक्तशब्दः। सखेदस्यैवाव्यक्तशब्दे चीजेः प्रयोग इति रक्षितः। चीजति सखेदो जनः। कूजति कोकिलः।

## कर्ज पीड़े कुज खुजुस्तेये खर्ज व्यथास्त्रजोः।

१३। कर्ज पीड़े (कर्ज, भ्वा, प) कर्जति (दुष्टं राजा)।

१४। कुजु स्तेये } (कुज, भ्वा, प)
१५। खुजु स्तेये } (खुज, भ्वा, प) व—कोजित्वा कुक्त्वा। कुजि अव्यक्तशब्दे इति चान्द्राः। कुञ्जति। कुञ्जः। व—खोजित्वा खुक्त्वा। स्तेयं चौर्यम्।

१६। खर्ज व्यथास्त्रजोः ( खर्ज, भ्वा, प ) खर्जति। खट्-मार्जनम्।

**खज् मन्थे खजि पाङ्गुल्ये गज् मदे गजि च स्वने।**

१७। खज् मन्थे ( खज, भ्वा, प ) मन्थो विलोड़नम्। खजति जलं मत्स्यः। ( दर्व्विः कम्बिः खजाकाचेत्यमरः। खज मन्थे इत्याकच् इति तट्टीकाकारः )।

१७। खजि पाङ्गुल्ये ( खञ्ज, भ्वा, प ) इ—खञ्जते। पङ्गुः खोड़ः, भावप्रधाननिर्द्देशात् पङ्गुत्वमिति यावत्; सोऽस्यास्तीति चूडादित्वाल्लः, पङ्गुलः, तस्य भावः पाङ्गुल्यं, खोटनमित्यर्थः। खञ्जति खाड़ः। भावप्रधाननिर्द्देशो यथा—वमुवर्णे इति कातन्त्र-सूत्रम्। उवर्णे वकारत्वं प्राप्नोतीत्यर्थः। ( १ )।

१८। गज मदे ( गज, भ्वा, प ) गजति। ( गजः )।

१८। गजि च स्वने ( गञ्ज, भ्वा, प ) इ—गञ्जते। चकारात् गज च। ( गजधातुरपि स्वनार्थः )।

**गज गर्जक् च गर्जोर्जौ शब्दे गृजि गृजध्वनौ।**

१८। गजक् च } ( गज, चु, प )
१६। गर्जक् च } ( गर्ज, चु, प ) क—गाजयति। क—गर्जयति। चकारात् स्वने।

(१) द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमिति पाणिनिसूत्रम्। तत्र द्व्येकयोरित्यस्य द्वित्वैकत्वयोरित्यर्थः भावप्रधाननिर्द्देशात्। अन्यथा द्व्येकयोरिति स्थाने द्व्येकेष्विति स्यात्। यद्यपि खजि पङ्गुत्वे इति पाठे नास्ति क्वचित् प्रमाण-स्तथापि तदकरणेऽपि गुणोऽभिभाव्यम्।

१९। गर्जोर्जाशब्दे ( गर्ज, भ्वा, प ) ऊर्जयते अरनित्यत्वे सेमक्रात्स्वरोरित्यप्रत्यये ऊर्जा बलं तत्करणकशब्द ऊर्जाशब्दः। गर्जति सिंहः।

२०। गजि ध्वनौ ( गञ्ज, भ्वा, प )
२०। गज ध्वनौ (गज, भ्वा, प) द्वौ सप्तमस्वरिणौ। इ—गञ्जति। गजति।

गुज अव्यक्ते गुजि गुज कूजने जजि जज् युधि।

२१। गुज अव्यक्ते ( गुज, तुदा, प ) णि—गुजति, अगुजीत्, जुगोज। अव्यक्ते ध्वनौ।

२१। गुजि कूजने ( गुञ्ज, भ्वा, प )
२१। गुज कूजने (गुज, भ्वा, प) द्वौ पञ्चमस्वरिणौ। इ—गुञ्जति। गोजति। कूजनमव्यक्तशब्दः। गुञ्जति भ्रमरः कुञ्जे।

२२। जजि युधि ( जञ्ज, भ्वा, प )
२२। जज् युधि ( जज, भ्वा, प ) इ—जञ्जति। जजति। युधि योधने।

जर्जश् वाग्भर्त्सयोर्णिजृलि द्रूञौ पेपे णिजिल् ङ च।
शुद्धौ तुजिक् भापष्टार्थे तुजि प्राणे बले तुज।
हिंसे ङ् तर्जक् तर्ज भर्त्से त्यजौ हानौ तिजक् शिते॥

२३। जर्जश् वाग्भर्त्सयोः ( जर्ज, तुदा, प ) रेफोपधः। श—जर्जन्ती जर्जती। भर्त्स तर्जनम्। (१)।

---

(१) जर्ज परिभाषणतर्जनयोरिति कातन्त्रे।

२४। णिजृ् लि इर्ञौ पोषे ( णिज्, ह्वा, उ ) लि, अ—नेनेक्ति नेनिक्ते। इर—अनिजत्, अनैक्षीत्। ञौ—नेक्ता। (यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकमिति हलायुधः।१३०)।

२४। णिजि लङ् च शुद्धौ ( णिञ्ज्, अदा, आ ) शुद्धिरिह शुद्धीकरणम्। ङ—निञ्जाते। ल, ङ—निङ्क्ते। प्रणिङ्क्ते दक्षिणीयाना विप्राणां चरणौ च य इति हलायुधः। १३०। चकारात् णिजलि इर्ञौ च ( शुद्ध्यर्थक इत्यर्थः )।

२५। तुजिक् भाषट्टार्थे ( तुञ्ज, चु, प ) पञ्चमस्वरी। इ, क–तुञ्जयति। भा दीप्तिः, पट्टार्थो निकेतनहिंसाबलदानानि। (१)।

२५। तुजि प्राणे बले ( तुञ्ज, भ्वा, प ) पञ्चमस्वरी। इ—तुञ्जति। प्राणो जीवनम्। हिंसायाञ्चायमिति केचित्।

२५। तुज हिंसे ( तुज, भ्वा, प ) तोजति।

२६। ङ तर्जक् भर्त्से ( तर्ज, चु, आ )

२६। तर्ज भर्त्से ( तर्ज, भ्वा, प ) ङ, क—तर्जयते। तर्जति। भर्त्सस्तर्जनम्। तामतर्जयदम्बरे इति रघुप्रयोगस्तु तर्जनं तर्जस्तं करोतीति ञौ साध्यः। ( २ )।

२७। त्यजौ हानौ ( त्यज, भ्वा, प ) ञौ—अत्याक्षीत्। हानिर्वर्जनम्। त्यजति दुष्टलोकं सुधीः।

२८। तिजक् शिते ( तिज, चु, प ) क—तेजयति। शितं तीक्ष्णीकरणम्। ( तेजयन्ति यमाकस्य सर्व्वथा च सतां गिर-

---

( १ ) पट्टक् निकेतने हिंसे बले दाने इति टान्तवर्गे पट्टधात्वर्थो वक्ष्यते। पट्टहिंसादाननिकेतनेष्विति कातन्त्रे। पट्टहिंसायामिति धातुप्रदीपः।

( २ ) तर्जते योऽहि भूपालाद्य तर्जयति सज्जनमिति हलायुधप्रयोगो वैपर्य्यं प्रतिपादयतीति सुधीभिर्भाव्यम्।

मिति हलायुधः । १६ । सतां गिरं श्चाक्रम्य वञ्चद्य यं राजानं तेजयन्ति तीक्ष्णं कुर्व्वन्ति जना इति शेषः )।

तिजङ् क्षान्तौ च तञ्चुध सङ्कोचे धजि धज् ध्रजि ।
ध्रज् ध्वजि ध्वज् ध्रिजगता वोनज् ङी व्रीयि पूजक ।
पूजे पिजिक् भाषणार्थे पिजि लङ् वर्णपूजयोः ॥

२८। तिजङ् क्षान्तौ च ( तिज, भ्वा, श्रा ) क्षान्तिः सहनम् । ङ—तितिक्षते दुःखं धीनः। चकारात् निते च। तत्र तेजते इति वोपदेवः। अत्र तिजादयो न प्रयुज्यन्ते इति रमानाथः। ( तत्तितिक्षितमिदं मया मुनेरिति भारविः। १३।६८ )।

२९। तञ्चु ध सङ्कोचे ( तञ्च, भ्वा, प ) उ—तञ्चित्वा तक्त्वा। ध—तनञ्मि व्योम विस्तृतम्।

३०। धजि गतौ ( धञ्ज, भ्वा, प )
३०। धज गतौ ( धज, भ्वा, प )
३१। ध्रजि गतौ ( ध्रञ्ज, भ्वा, प )
३१। ध्रज गतौ ( ध्रज, भ्वा, प )
३२। ध्वजि गतौ ( ध्वञ्ज, भ्वा, प )
३२। ध्वज गतौ ( ध्वज, भ्वा, प )
३३। ध्रिज गतौ ( ध्रिज, भ्वा, प ) द्वावाद्यौ सप्तमस्वरिणौ। ततो द्वौ रेफयुक्तौ। ततो द्वौ वकारयुक्तौ। शेषो रेफयुक्तस्तृतीयस्वरी। इ—धञ्जते। धजति। इ—ध्रञ्जते। ध्रजति। इ—ध्वञ्जते। ध्वजति। ध्रेजति। ( केतनं ध्वजमस्त्रियामित्यमरः। ध्वजगतावच् इति, ध्वजयति चिह्नयति ज्ञापयति योधविशेषं, अन्तर्भाविण्यर्थं इति च तट्टीकाकारः। )

३४। ओ नज् ङी व्रीडि (नज्, भ्वा, आ) ओ, ई—नग्नः। ङ—नजते। व्रीडि लज्जायाम्।

३५। पूजक् पूजे (पूज, चु, प) षष्ठस्वरी। क—पूजयति गुरुं लोकः।

३६। पिजिक् भाषट्टार्थे (पिञ्ज, चु, प) इ, क—पिञ्जयति। भा दीप्तिः, पट्टार्थो निकेतनहिंसाबलदानादिः।

३६। पिजि लङ् वर्णपूजयोः (पिञ्ज, अदा, आ) इ—पिञ्जते। ल, ङ—पिङ्क्ते। (वर्णः पिङ्गलवर्णीभावः। पिङ्क्ते चक्षुरिति कश्चित्)।

स्यात् पृजिल् ङ च सम्पर्के भज औ भागसेवयोः।

३७। पृजिल् ङ च सम्पर्के (पृञ्ज, अदा, आ) सप्तमस्वरी। इ—पृञ्जते। ल, ङ—पृङ्क्ते। चकारात् पिजि लङ् च। एतौ कश्चिन्न मन्यते।

३८। भज औ भागसेवयोः (भज, भ्वा, उ) अ—विभजति विभजते धनं भ्राता। औ—अभाक्षीत् कृष्णं साधुः।

भजक् पाके भजिक् भासि भ्रेजृङ् च भ्राज णृङ्टुच।

३८। भजक् पाके (भज, चु, प) क—भाजयति। विश्राणने इति प्राञ्चः। विश्राणनं दानम्। (भाजयति भोगं भृत्याय भूपतिः। भाजी पक्वव्यञ्जनविशेषः)।

३८। भजिक् भासि (भञ्ज, चु, प) इ, क—भञ्जयति। भासि दीप्तौ।

३९। भ्रेजृङ् च (भ्रेज, भ्वा, आ) ऋ—अबिभ्रेजत्। ङ—विभ्रेजे। चकारात् भासि।

४०। भ्राज गृङ् टृ च (भ्राज, भ्वा, श्रा) रेफयुक्तः। गा—भ्रेजे बभ्राजे। अनुबन्धबलात् संयोगादित्वेऽप्याकारस्यायेत्वम्। ङ—अबिभ्रजत् अबभ्राजत्। ङ—भ्राजते। टृ—भ्राजथुः। चकारात् भासि।

**भुजोगौ वक्रणे भुज्धौ त्राणे भक्षे भृजी ङ तु।**
**भर्ज्जने भ्रस्ज औश् पाके भञ्जो धौ मोटने मुजि।**
**मुज्मञ्ज्मार्जक्भूजाध्वन्योर्म्लुञ्लुप्शुद्वौ म्लुप्कि तु।**
**भूपे च मस्जो शुद्वौ स्यात् स्नाने युजकि संयमे॥**

४१। भुजोगौ वक्रणे (भुज, तुदा, प) वक्रणमिति वक्रं करोतीति णौ रूपम्। श्रो—भुग्नः। श—भुजति लता वायु.। गौ—भोक्ता।

४१। भुज् धौ त्राणे भक्षे (भुज, रुधा, प) ध—भुनक्ति। श्रौ—अभौक्षीत्। त्राणं पालनम्। भक्ष इहादनमुपभोगश्च। अस्मात् पालने परस्मैपदमन्यत्रात्मनेपदं, भुजोऽवने इति ज्ञापकात्। भुनक्ति पृथिवीं राजा पालयतीत्यर्थः। अन्नं भुङ्क्ते जनः खादतीत्यर्थः। उपभोगे तु—वृद्धो जनो दुःखशतानि भुङ्क्ते इति। दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः। सुखमुपभुङ्क्ते, स्त्रियमुपभुङ्क्ते इत्यादि।

४२। भृजी ङ तु भर्जने (भृज, भ्वा, श्रा) भर्जनं पाकविशेषः। ई—भृक्तः। ङ—भर्जते तण्डुलान् जनः। (तपसा भर्जते पापमिति हलायुधः। ८७)।

४३। भ्रस्ज औश् पाके (भ्रस्ज, तुदा, उ) रेफयुक्तादिर्दन्त्यसोपधः। क्विपि संयोगादिलोपे भृट्। पाक इह भर्ज्जनम्।

अ, प—भ्रज्जति भ्रज्जते तण्डुलान् लोकः। औ—अभ्राक्षीत्। ( तेजसाग्निंर्श भ्रज्जतीति हलायुधः। ८७। बभ्रज्ज निहते तस्मिन् शोको रावणमग्निवदिति भट्टिः। १४।८६।)

४४। भन्जो धौ मोटने ( भनज, रुधा, प ) श्रो—भग्नः। ध—भनक्ति। औ—अभाङ्क्षीत्। मोटनं भञ्जनम्। रामः शम्भु-धनुर्बभञ्ज।

४५। मुजिक स्वजाध्वन्योः ( मुञ्ज, चु, प )
४५। मुजक स्वजाध्वन्योः ( मुज, चु, प )
४६। मन्जक स्वजाध्वन्योः ( मनज, चु, प )
४७। मार्जक स्वजाध्वन्योः ( मार्ज, चु, प )

द्वावाद्यौ पञ्चमस्वरिणौ, चतुर्थौ द्वितीयस्वरौ। इ, क—मुञ्जयति। क—मोजयति। मञ्जयति। मार्जयति। द्वावाद्यौ भ्वादावेव कैश्चित् पठ्येते। मुञ्जति मोजति। तत्रैव द्वितीयः सप्तमस्वरीति केचित्। मर्जति। स्वजा मार्जनम्।

४८। मृज् लूप् शुद्धौ (मृज, अदा, प) शुद्धिरिह शुद्धीभावः शुद्धीकरणञ्च। ल—मार्ष्टि तीर्थोदकैर्नित्यमिति हलायुधः। ५५। ज—अमार्ज्जीद्भ्रूतोमरं। अमार्क्षीच्चासिपत्रादीनिति भट्टिः। घ—मृजा।

४८। मृजूप् कितु मृषे च ( मृज, चु, भ्वा, प ) ऊ—(भ्वादि पक्षे) अमार्ज्जीत् अमार्क्षीत्। ( चुरादि पक्षे तु ऊकारानुबन्धस्य सार्थक्यं नास्ति, अममार्ज्जत् ) घ—मृजा। कि—मार्जयत्यलिपनैर्द्विजानिति, यो मार्जयति साम्राज्यश्रियश्चामल्यतांर्थतामिति च हलायुधः। ५५। चकारात् शुद्धौ च।

४८। मस्जो श ट्टौ स्यात् स्नाने ( मस्ज, तुदा, प ) दन्त्य-

मध्यः। क्विपि संयोगादि लोपे मक्। ञो—मग्नः। श—मज्जन्ती मज्जती। टु—मज्जथुः। औ—अमाङ्क्षीत्। स्नायतेऽनेनेति स्नानमिह जलान्तःप्रवेशः। मज्जति मस्तरो जले।

५०। युज कि संयमे (युज, चु, भ्वा, प) अन्त.स्थादिः। कि—योजयति योजति। संयमो बन्धनम्। (नियोजयति रचकानिति, यो नियोजति सामन्तानिति च हलायुधः। ४२)।

**युजिर्धोञ् च युतौ युज्यौ ङ समाधौ युजक्ङ तु।**
**निन्दे यजै ञौ देवार्चादानसङ्गतौ रुजक्।**
**हिंसे रुजो शौ भङ्गे रिजङ्ज्यर्थे रन्ज्य रन्जमौञ्।**
**रागे रेजृङ राजृञ्ण दीप्तौ लाज् लाजि भर्त्सने।**
**भर्गेऽथ लस्जी ओ लज् ङ व्रीडे लज् लजि भर्त्सने।**

५०। युजिर्धोञ् च युतौ (युज, रुधा, उ) इर—अयुनत् अयौक्षीत्। ध, ञ—युनक्ति युङ्क्ते इतेनान्नं लोकः। औ—योक्ता। चकारात् युज कि च (युतावर्थे प्रयुज्यते इत्यर्थः)। (प्रजासु वृत्तिं यमयुङ्क्त वेदितुमिति भारविः। १। १)।

५०। युज्यौङ समाधौ (युज, दिवा, आ) समाधिर्योग्यभावः। य, ङ—स्वयमात्मनि युज्यते इति हलायुधः। ४२। औ—योक्ता।

५०। युजक्ङतु निन्दे (युज, चु, आ) क, ङ—योजयते।

५१। यजै ञौ देवार्चादानसङ्गतौ (यज, भ्वा, उ) ऐ—इज्यात्। ञ—यजति यजते। औ—यष्टा। देवः क्रीड़ा, दिवङ देवन इत्यनेन निष्पादनात्। यजति जनः क्रीड़तीत्यर्थः। देवस्यार्चा देवार्चेत्येकार्थत्वे कर्म्मणोऽर्थमध्यपाठादकर्म्मकत्वापत्तिः।

यजति विष्णुं सुधीः पूजयतीत्यर्थः । पशुना रुद्रं यजते, पशुं रुद्राय ददातीत्यर्थ इति प्राञ्चः । सङ्गस्य कृतिः सङ्गकृतिः । यजति सन्त साधुः, सता सह सङ्गं करोतीत्यर्थः ।

५२ । रुजक् हिंसे ( रुज, चु, प ) क—रोजयति ।

५२ । रुजोऔ भङ्गे ( रुज, तुदा, प ) ओ—रुग्णः । श—रुजति रोगो देहम् । औ—रोक्ता । ( न रोजयति यः कश्चित् प्राणिना करुणान्वितः । तस्य धर्मरते रोगा न रुजन्ति मनागपीत्युभयत्र हलायुध. । १८६ ) ।

५३ । रिजृङ् ज्यर्थे ( रिज, भ्वा, आ ) ङ—रेजते । ऋज्यर्थे भर्जने ( ऋजिङ्भजि इत्युक्तेः ) ।

५४ । रञ्ज्य ञौञ रागे } ( रञ्ज, दिवा, उ )

५४ । रञ्ज ञौञ रागे } (रञ्ज, भ्वा, उ) य, ञ—रज्यति रज्यते । म—रजयति मृगान् । मृगरमणादन्यत्र रञ्जयति पुत्रं पिता । औ—रङ्क्ता । ञ—रजति रजते । रागो वर्णान्तरोत्पादनमासक्तिश्च । शेषार्थेऽकर्मकः । रजति वस्त्रं कुङ्कुमेन रजकः । रङ्क्षसि किं कथय वैरिणि मौर्यपुत्रे इति मुद्राराक्षसम् ।

५५ । रेजृङ दीप्तौ } ( रेज, भ्वा, आ )

५६ । राजृञ्ञ दीप्तौ } ( राज, भ्वा, उ ) ऋ—अरिरेजत् । ङ—रेजते । रिरेजे । ऋ—अरराजत् । ञ—राजति राजते । ण—रेजतुः रराजतुः ।

५७ । लाज् भर्त्सने भर्गे } ( लाज, भ्वा, प )

५७ । लाजि भर्त्सने भर्गे } (लाञ्ज, भ्वा, प) द्वौ द्वितीयस्वरिणौ । लाजति । इ—लाञ्जते । भर्गो भर्जनम् । भर्गः सैविद्यमन्यते ।

५८। लस्जी ब्रो ङ ब्रीडे } ( लस्ज, भ्वा, चा )
५६। लज ङ ब्रीडे } ( लज, भ्वा, चा ) आद्योऽन्त्यसोपधः। क्विपि संयोगादिलोपे लक्। ईं, ओ—लग्नः। ङ—लज्जते। लजते। शेषस्यापि निष्ठायां लग्न इत्यन्ये। ( लमते तु लज्जितः )।

५६। लज भर्त्सने } ( लज, भ्वा, प )
५६। लजि भर्त्सने } ( लञ्ज, भ्वा, प ) लजति। (लेजिरेऽन्ये पराजिता इति भट्टि। १४। १०५) इ—लञ्जते।

**लज् कान्तहौ लज लुजिक् भापट्टार्थे विजिर्लिञौ।**
**वेके विजीधो विज्ङीश्रो श्रोकम्पेल् ट्वज्ङिट्वज्ङल्ली॥**
**त्यागे ट्वजीकि च ट्वजीध् इतौ च ब्रज्गतौ ब्रजक्।**
**संस्कृतौ च विरेफौ तौ श्रिजिल् किङ्ङस्फुटध्वनौ॥**

५६। लज् कान्तहौ ( लज, चु, प ) चन्तर्द्धिराच्छादनम्। क—लाजयति चन्द्रं मेघः।

५६। लजिक् भापट्टार्थे } ( लञ्ज, चु, प )
६०। लुजिक् भापट्टार्थे } ( लुञ्ज, चु, प ) शेषः पञ्चमस्वरी। इ, क—लञ्जयति। लुञ्जयति। भा दीप्तिः, पट्टार्थो-निकेतनहिंसाबलदानानि।

६१। विजिर्लिञौ वेके ( विज, ह्वा, उ ) वेक इति विचिर्लिर्धौज पृथक्त्वे इत्यस्य घञि रूपम्। इर्—अविजत् अवैचीत्। लि, ञ—वेवेक्ति वेविक्ते मूर्खात् पण्डितं, पृथक् स्यादित्यर्थः। श्रौ—वेक्ता।

६१। विजोधो भीकम्पे } (विज, रुधा, प)
६१। विज ङीओो भीकम्पे } (विज, तुदा, आ) ई, ओ—विग्नः। ध—विनक्ति। ङ, श—विजते। ई, ओ—विग्नः। द्वावर्थौ। (भीतिः कम्पश्चेत्यर्थः)।

६२। लं ष्वज ङि त्यागे } (ष्वन्ज, भ्वा, आ)
६२। ष्वज् ङली त्यागे } (ष्वज्, भ्वा, आ) द्वौ सप्तमस्वरिणौ। ल, ङ—ष्वङ्क्ते। द्—ष्वज्यते। ङ, ल—ष्वक्तो। ई—ष्वक्तः।

६२। ष्वजी क्रि च (ष्वज, चु, भ्वा, प) ई—ष्वक्तः। क्रि—वर्जयति, वर्जति। चकारात् त्यागे च।

६२। ष्वजीध ष्वतौ च (ष्वज, रुधा, प) ई—ष्वक्तः। ध—ष्वणक्ति। वरीष्वज्यते। चकारात् त्यागे च। (ष्वणक्ति ष्वजिनैः सङ्गं ष्वक्तो च ष्वपलैः सह। वर्जत्यनार्जवोपेतैर्यो वर्जयति दुर्जनैरिति सर्व्वत्र हलायुधः। २७)।

६३। व्रज गतौ (व्रज, भ्वा, प) व्रजति।

६३। व्रजक् संस्कृतौ च (व्रज, चु, प) क—व्राजयति। चकारात् गतौ च।

## विरेफौ तौ।

तौ एतौ (भ्वादिचुरादौ व्रजधातू) विरेफौ रेफरहितौ च स्याताम्। (भ्वादिचुरादिगणीयं व्रजधातुद्वयमपि भवतीत्यर्थः)।

६४। वज गतौ (वज, भ्वा, प) वजति।

६४। वजक् संस्कृतौ च (वज, चु, प) अयं मार्गणसंस्कार इति प्राञ्चः। मार्गणस्य शरस्य पत्रादिना संस्कारो मार्गण-

संस्कारः। क—पाजयति प्रवैर्षाणं काण्डकारः। मार्गणसंस्कारयोरित्यपि केचित्। (१)।

६५। शिजिल् ञिङ् अस्फुटध्वनौ (शिञ्ज, सदा, चु, आ, आ) तालव्यादिः। अस्फुटध्वनिरिह भूषणकर्तृक एव, भूषणानान्तु शिञ्जितमित्यमरात्। ऊ—शिञ्जयते। ञ, ङ—शिङ्क्ते। ञि, ङ—शिञ्जयते शिञ्जते मञ्जीरः। तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे, इति यवन्तं गणकृतानित्यत्वात्।

## षन्जौ ञि सङ्गे ष्वन्जौ ञि ङालिङ्गे षस्ज सर्पणे।

६६। षन्जौ ञि सङ्गे (षन्ज, आ, प) मूर्द्धन्यादिः। औ—असाङ्क्षीत्। ञि—सक्तोऽस्ति। सजति वपुषि वासः।

६७। ष्वन्जौ ञि ङालिङ्गे (ष्वन्ज, आ, आ) वकारयुक्तादिः। आलिङ्ग आलिङ्गनम्। औ—स्वङ्क्ता। ञि—स्वक्तोऽस्ति। ङ—स्वजते युवतीं युवा। परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमिति परस्मैपदं गणकृतानित्यत्वात्।

६८। षस्ज सर्पणे (षस्ज, आ, प) दन्त्यसोपधः। क्विपि संयोगादिलोपे सक्। सज्जति। वचोऽपि पल्पाक्षरं न पदेषु संसज्जते इति शाकुन्तले गणकृतानित्यत्वात्।

## पर्ज्ज सर्ज्जाऽर्ज्जने सृज्यौङ् विसर्गेऽथ सृजौ श च।

६९। पर्ज्ज अर्ज्जने } (पर्ज्ज, आ, प)

७०। सर्ज्ज अर्ज्जने } (सर्ज्ज, आ, प) द्वौ क्रमान्मूर्द्धन्यदन्त्यादी। सिपर्ज्जयिषति। सिसर्ज्जयिषति। सर्ज्जति धनं लोकः।

---

(१) अत्र मार्गणं याचञा इति मन्यामहे।

७१ । सृज्यौङ् विसर्गे (सृज, दिवा, आ) य, ङ—सृज्यते । औ—सृष्टा । असृक्षत, सर्गीसृज्यते । विसर्गस्त्यागः । त्य.गे व्यङ्गा पर एव, अन्यत्र करोतीत्यर्थः । यथा—उपासनामेत्य पितुः स्म सृज्यते इति नैषधम् । संपूर्व्वोऽयमकर्म्मकः । यथा—संसृज्यते सरसिजै-ररुणांशुभिन्नैरिति रघुः । निशापरिणामवायुः सरसिजैः सह संसृज्यते ( सम्बद्धो भवति ) इत्यर्थः ।

७१ । अथ सृजौ श च ( सृज्, तुदा, प ) सप्तमस्वरी । औ—असाक्षीत् । श—सृजति । चकाराद्विसर्गे ।

## ट्रो स्फूर्ज्जो वज्रनिर्घोषे जकारान्ता द्विसप्ततिः ।

७२ । ट्रो स्फूर्ज्जो वज्रनिर्घोषे ( स्फूर्ज्ज, भ्वा, प ) ओष्ठ्यवर्ग-द्वितीययुक्तङ्खी । ट्र—स्फूर्ज्जथुः । औ—स्फूर्ज्जनः । आ—स्फूर्ज्जितं स्फूर्ज्जनं तेन । प्रस्फूर्ज्जितः प्रस्फूर्ज्जनः सः । वज्रनिर्घोषो वज्रकर्त्तृक-शब्दः । स्फूर्ज्जति वज्रम् ।

जकारान्ता द्विसप्ततिः ।

( जकारान्ता धातवो द्विसप्ततिसंख्यकाः । संख्यासङ्गतिस्तु पूर्व्ववत् ।

---

## झान्तवर्गः ।

## उद्झश् त्यागे जर्झ झर्झश् भर्त्सीतो झान्तिमास्त्रयः ।

१ । उद्झश् त्यागे ( उद्झ, तुदा, प ) ङ्खादिर्दन्त्यवर्ग-तृतीयोपधः । क्विपि समुत्, समुज्झाम् । स्यादौ नवद्रोये इति उज्जिझिषति औज्जिझत् । जोपध इत्येके । उजिज्झिषति औजिज्झत् । श—उज्झन्ती उज्झती ।

२ । जर्भ्भ भर्त्सने इत्येके । ) ( जर्भ, तुदा, प )
३ । झर्झ भर्त्सने इत्येके । ) ( झर्झ, तुदा, प ) श—जर्झन्ती जर्झती । झर्झन्ती झर्झती । भर्त्सनं तर्जनम् ।

## झान्तिमास्त्रयः ।

( झः अन्तिमो येषां ते, झकारान्ता धातवस्त्रयः ) ।

---

## टान्तवर्गः ।

### अट्टक् तौच्छ्येऽनादरेऽट्टातट्टाट्टटङ्ङतिक्रमे वधे ।

१ । अट्टक् तौच्छ्येऽनादरे ( अट्ट, चु, प ) टद्वयान्तः । अट्टयति । एकटकार इति रामः । तौच्छ्यमल्पीभावः ।

१ । अट्टङ् अतिक्रमे वधे ) ( अट्ट, भ्वा, आ )
२ । अतटङ् अतिक्रमे वधे > ( अतट, भ्वा, आ )
३ । अट्टटङ् अतिक्रमे वधे ) ( अट्टट, भ्वा, आ ) तयः क्रमात् मूर्द्धन्यवर्गाद्यन्तदन्त्यवर्गाद्यतृतीयोपधाः । ङ—अटिट्टिपते, अतिट्टिपते, अट्टिटिपते खलं राजा ।

### अट इट कट कटि कटी गत्यामे कट इतौ इपि ।

४ । अट गत्याम् ) ( अट, भ्वा, प )
५ । इट गत्याम् | ( इट, भ्वा, प )
६ । कट गत्याम् > ( कट, भ्वा, प )
६ । कटि गत्याम् | ( कण्ट, भ्वा, प )
६ । कटी गत्याम् ) ( कट, भ्वा, प ) पृथक्पाठात्

च.स्फोटे वैरिणां करिणां घटा । इति हलायुधः । २०० ।
आस्फोटे यस्य बाहुयन्त्रे, विघाटयति पलाय्य एकत्र संहतो भवतीत्यर्थः ।

१७ । घटिश्चपि द्युतौ ( घण्ट, चु, भ्वा, प ) चु—घण्टयते ।
भि—घण्टयति घण्टति । अपिशब्दात् घटकृच् (द्युत्यर्थकः) द्युतिदीप्तिः । द्युत्यर्थत्वेनैव चुरादित्वे सिद्धे भिकरणमर्थान्तरेऽपि प्राप्तिकचुरादित्वार्थम् । तथाच—क्रियावाचित्वमाख्यातुं प्रसिद्धोऽयः प्रदर्शितः । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः इति वोपदेवः । प्रसिद्धार्थं कथयितुं प्रसिद्धार्थः प्रदर्शितः किन्तु महाकविप्रयोगं दृष्ट्वा अन्येप्यर्था मन्तव्याः, हि यस्मात् धातवोऽनेकार्था भवन्तीत्यर्थः । तेन हिंसास्तुत्योः पठितस्यापि शंसतेः कथनार्थत्वेन "न मे क्रिया शंसति किञ्चिदीप्सितमिति" रघौ कथयतीत्येवार्थः । एवं दीप्तौ पठितस्यापि तर्कयतेर्वितर्कणार्थत्वेन तर्कयत्यन्यगुणं सुधीरित्यादि ।

१७ । घटषुङम चेष्टे ( घट, भ्वा, आ ) ष—घटा । ङ—घटते पठितुं शिष्यः । म—घटयति । घटतीति घटो घेयो नाघटत् घटनामिगादिति तु घटतेः पचादित्वादन्,'ततो घट इवाचरतीति क्वौ साध्यम् ।

१८ । घुटङ्ॡ परीवर्त्ते ( घुट, भ्वा, आ ) परीवर्त्तो गतवतः प्रत्यागमनम्, विनिमयो वा । ङ—घोटते नदी । ॡ—अघुटत् ।

१८ । घुट् शि प्रतिहतौ ( घुट, तुदा, प ) शि—घुटति, अघुटीत् गर्त्तु शूरः । जुघोटः । (यस्य व्याघोटते दण्डो नाकृतार्थः कृतश्च न । व्याघुटन्ति विपक्षाश्च यत्सम्मुखमुपागता इत्युभयत्र हलायुधः । २४६ ) ।

घट्टक् चाले घट्ट ङ च चिट प्रेषे चटक् वधे।

१८। घट्टक् चाले ( घट्ट, चु, प ) टद्वयान्तः। चालश्चलनम्। क—घट्टयति मेघो वायुना।

१९। घट्ट ङच ( घट्ट, भ्वा, आ ) टद्वयान्तः। ङ—घट्टते। चकाराच्चाले। ( उद्घट्टते न कस्यापि मर्म्मं धर्म्मपरायणः। उद्घट्टयति गोष्ठीषु सर्व्वेषामेव यो गुणानित्युभयत्र हलायुधः। १६५

२०। चिट प्रेषे ( चिट, भ्वा, प ) चेटति भृत्यं स्वामी।

२१। चटक् वधे ( चट, चु, प ) क—चाटयति यवं शूरः।

चट्च भेदे चेष्ट ङीहे चुट्टक् चुट_ चुटि तुच्छने।

२१। चट् च भेदे ( चट, भ्वा, प ) चटति। चकारात् चटक् च ( भेदार्थकः )।

२२। चेष्ट ङीहे ( चेष्ट, भ्वा, आ ) ईहा व्यापारः। ङ— चेष्टते पठितुं शिष्यः।

२३। चुट्टक् तुच्छने ) ( चुट्ट, चु, प )
२४। चुट तुच्छने } ( चुट, भ्वा, प )
२४। चुटि तुच्छने ) ( चुण्ट, भ्वा, प ) त्रयः पञ्चमस्वरिणः, आद्यष्टद्वयान्तः, एकटकार इति रामः। तुच्छनमल्पीभावः। ( इयकृपाठात् मूर्ध्नोनेदित् ) क—चुट्टयति; चोटति नदी ग्रीष्मे। इ—चुण्ट्यते।

चुटिक् छेदे चुट छुटक् ग्रिच जट् झट संहतौ।

२४। चुटिक् छेदे ( चुण्ट, चु, प ) पञ्चमस्वरी। इ, क— चुण्टयति।

२४। चुटक् ञिच ⎫ (चुट, चु, तुदा, प)
२५। छुटक् ञिच ⎭ (छुट, चु, तुदा, प) क—चोटयति, छोटयति। ञि—चुटति, अचुटीत्; छुटति, अछुटीत्। चकारात् छेदे।

२६। जट संहतौ ⎫ (जट, भ्वा, प)
२७। झट संहतौ ⎭ (झट, भ्वा, प) जटति, झटति केशः, परस्परं संलग्नः स्यादित्यर्थः।

णट् नृत्यहिंसयोर्णट्म नृतौ तट् काहृतौ तट।
उच्छ्राये तुट ञि कलहे तुट् काङ् तुटय ञि च्छिदि।

२८। णट् नृत्यहिंसयोः (णट, भ्वा, प) प्रणटति। णोपदेशविधौ वर्ज्जनेऽप्यस्य परस्य चेह पाठः केषाञ्चिदनुरोधात्।

२८। णट्म नृतौ (णट, भ्वा, प) म—प्रणटयति। नृताविति नृत्यतेरौणादिकक्विप्प्रत्यये रूपम्। अत्र मिकारानुबन्धेनैवेष्टसिद्धौ पूर्व्वे नृत्यग्रहणमर्थभेदार्थं, तेन पूर्व्वे नृत्यं साभिनयनर्त्तनम्; इह तु नृतिरभिनयरहितनर्त्तनमिति। यथा पूर्व्वस्य—स्फटिककटकभूमिर्नाटयत्येव शैल इति माघः। अस्य तु—नाट्येन केन नटयिष्यति दीर्घमायुरिति मुरारिः।

२८। तट् काहृतौ (तट, चु, प) क—ताटयति। (आहतिराघननम्)।

२८। तट उच्छ्राये (तट, भ्वा, प) उच्छ्राय उच्चीभावः। तटति पुलिनम्।

३०। तुट ञि कलहे (तुट, तुदा, प) ञि—तुटति, अतुटीत् नीचः परस्परं यमशा। तुतोट।

३१। लुट भाष छिदि } (लुट, चु, भा)

३१। लुट्य थि छिदि } (लुट, दिवा, तुदा, प) द्वौ दन्त्यवर्गप्रथमादी। क, ङ—लोटयते। य—लुट्यति, लोटियति। तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिपक्षे कुटादित्वं नास्ति। शि—लुटति, अलुटीत्। शेषस्तु विदीर्णीभावेऽपि, यथा—दृश्य-द्वीमधनुःकठोरनिनद इति महानाटकम्। मयूखनखरलुट-त्तिमिरकुम्भिकुम्भस्थले इत्युद्भटः। क्वचिल्लूनीभावेऽपि, यथा—भाहणुते यदि वचस्तुट्यति श्रमस्तदा जघने इत्युद्भटः। (लुटन्ति सर्व्वसन्देहास्त्रुट्यन्ति ग्रन्थयो हृदीति हलायुधः। ३८)।

नट णाट्वत् नटक्भ्रंशे मटक् च त्विषि मट् गतौ।

३२। नट णाट्वत् (नट, भ्वा, प) णाट्वदिति नट शब्द-हिंसयोः नटमृतौ इति द्विविध इत्यर्थः। प्रनटति। ञ—प्रनटयति।

३२। नटक् भ्रंशे (नट, चु, प) क—नाटयति। भ्रंशोऽधःपतनम्। स्पन्दनार्थोऽयमिति रामः।

३३। मटक् च त्विषि (मट, चु, प) क—माटयति। चकारात् नटक् च। त्विषि दीप्तौ।

३३। मट गतौ (मट, भ्वा, प) मटति।

पुट् शि श्लेषे पुटक् चूर्णे भासि मिट् संहतौ ध्वनौ।

३४। पुटशि श्लेषे (पुट, तुदा, प) शि—पुटति, अपुटीत्, पुपोट। श्लेषः सम्बद्धीभावः।

३४। पुटक् चूर्णे भासि (पुट, चु, प) क—पोटयति। भासि दीप्तौ।

**मुट्शि त्वाक्षेपे च यौटृ सम्बन्धे रौटृ नादरे।**

४३। मुट्शि त्वाक्षेपे च (मुट, तुदा, प) पवर्गशेषादिः। शि—मुटति, अमुटीत्, मुमोट। (आक्षेपस्तिरस्कारः) चकारात् मुदि च। मुटति द्विषतां दर्पं च इति हलायुधः। १०४।

४३। यौटृ सम्बन्धे (यौट, भ्वा, प) चतुर्दृशस्वरी। ऋ—अयुयौटत्। यौटति काष्ठं तक्षा। (सम्बन्धः संयोजनम्, यौटति संयुक्तं करोतीत्यर्थः)। (१)।

४४। रौटृ नादरे (रौट, भ्वा, प) चतुर्दृशस्वरी। ऋ—अरुरौटत्। नादरोऽनादरः। रौटति खलं लोकः।

**रेटृञ् याचे रट्च वाचि रुटि स्तेये रुटक् रुपि।**
**द्युतौ रुट् लुट लङ् दीप्तिप्रतिहत्योर्लुटि ह्रुतौ।**

४५। रेटृञ याचे (रेट, भ्वा, उ) ऋ—अरिरेटत्। ञ—रेटति रेटते। याचो याचनम्।

४६। रट्च वाचि (रट, भ्वा, प) रटति। चकारात् रेटृञ च।

४७। रुटि स्तेये (रुण्ट, भ्वा, प) इ—रुण्ट्यते धनं चौरेण।

४७। रुटक् रुपिद्युतौ (रुट, चु, प) क—रोटयति।

४७। रुट्लङ दीप्तिप्रतिहत्योः } (रुट, भ्वा, आ)
४८। लुटृलङ दीप्तिप्रतिहत्योः } (लुट, भ्वा, आ) ऌ—अरुटत्; अलुटत्। ङ—रोटते; लोटते। प्रतिहतिः शोकादिना पतनम्, पुनर्हननं वा।

---

(१) यौटति मलयं लोकः। यौतकं, टस्य तत्वमिति त्रिलोचन इत्युक्तं कातन्त्रधातुवृत्तौ। कश्चिदिममकर्म्मकं मत्वा यौटति पुत्रः पित्रासहेत्युदाहरति।

५२। लोट् ऋ उन्मादे ( लोट, भ्वा, प ) ऋ—अलुलोटत्। लोटति लोक उन्मादयतीत्यर्थः।

५३। वेष्टङ् वेष्टे } ( वेष्ट, भ्वा, आ )
५४। वट वेष्टे } ( वठ, भ्वा, प ) ङ—वेष्टते। वठति वृक्षं लता।

५४। वटि कि वण्टने ( वण्ट, चु, भ्वा, प ) वण्टनं विभागः। इ—वण्टयते। कि—वण्टयति, वण्टति। वण्टन्ति चाटकं यस्मात् प्राप्य विप्राः परम्परमिति हलायुधः। ७८। अयं चुरादौ कैश्चिन्न पठ्यते इति दुर्गसिंहादयः।

वट् मोक्तौ वुटि क चित्यां विटाक्रोशे स्वने ऋटयौट्।
गर्व्वे शटङ्क श्लाघे शट् सादे शीर्णौ गतौ रुजि।

५४। वट् मोक्तौ ( वट, भ्वा, प ) म—वटयति।

५५। वुटिक चित्यां ( वुण्ट, चु, प ) पञ्चमस्वरी। इ, क—वुण्टयति। चितिर्हिंसा।

५६। विटाक्रोशे स्वने ( विट, भ्वा, प ) वेटति। आक्रोशः कैश्चिन्न मन्यते। स्वनः शब्दः।

५७। ऋ यौट् गर्व्वे ( यौट, भ्वा, प ) चतुर्द्दशस्वरी। ऋ—अयुयौटत्। यौटति वीरः।

५८। शट ङक श्लाघे ( शट, चु, आ ) ङ, क—शाटयते।

५८। शट् सादे शीर्णौ गतौ रुजि ( शट, भ्वा, प ) सादोऽवसादः, शीर्णिर्विभेदः। शटति लोकः, अवसीदति विश्लिष्यति गच्छति रुजति वेत्यर्थः।

शिट् पिटानादरे पुट्टक् तौच्छ्ये च पट अंशके।

५६। ग्रिट नादरे } ( ग्रिट, भ्वा, प )
६०। पिट नादरे } ( पिट, भ्वा, प ) द्वौ क्रमात्तालव्य-मूर्द्धन्यादी। ग्रेटति, पेटति खलं लोकः। ( यः ग्रेटति सभामध्ये तं ग्रेटति निरीक्ष्य य द्रुत्युभयत्र हलायुधः। २७० )।

६१। पुट्टक् तौच्छ्ये च ( पुट्ट, चु, प ) प्रथमस्वरी, टद्वयान्तः। क—पुट्टयति। इन्त्यादिरयमिति भीमः। तौच्छ्यमल्पीभावः। चकारादनादरे च।

६२। पट अंशके ( पट, भ्वा, प ) अंशकेऽवयवे। पटति पटः अवयवी स्यादित्यर्थः। (१)।

पट्टक् निकेतने हिंसे बले दाने स्फुटक् भिदि।

६३। पट्टक् निकेतने हिंसे बले दाने ( पट्ट, चु, प ) मूर्द्ध-न्यादिटद्वयान्तः। क—पट्टयति लोकः, निवसति हन्ति मली स्यात् ददाति वेत्यर्थः।

६४। स्फुटक् भिदि ( स्फुट, चु, प ) दन्त्यादिरयम्। एतदाद्या अष्ट श्रोष्ठ्यवर्गद्वितीययुक्ताः। भिदि भेदने। क—स्फोटयति कण्टकः पदम्।

स्फुटिर्विशरणे स्फुट्ग्नि विकासे स्फुट् ङ च स्फुटिक्।
नर्मण्याङः स्फुटक् हिंसे स्फिट्टक् इत्याञ्च स्फुट्टक।
चानादरे स्फिट्कच स्निट् कच स्नेहे स्फटि स्फट।
श्रीर्णौ हट् त्विषि हेट् वाधे टान्ता द्रूत्येकसप्ततिः।

---

(१) यत्र यत्र द्रव्यनिर्देशस्तत्र तत्र तत्समवेता क्रिया गम्यते इति शैवेय-न्युक्तं कातन्त्रधातुवृत्तौ। केचित् अंशकः अवयवीभावः। पटति योऽसौ अवयवस्तं भवतीत्यर्थं इत्याहुः।

६४। स्फुटिविशरणे (स्फुट, भ्वा, प) इर्—अस्फुटत् अस्फोटीत्। विशरणं भेदनम्। स्फोटति गात्रं वाणः। विसरण इति दन्त्यमध्यपाठे विकसने इत्यर्थः। स्फोटति मल्लीकलिका।

६४। स्फुट ञि विकासे (स्फुट, तुदा, प) विकास इति कास न गताविति दन्त्यान्तस्य घञि रूपम्, विपूर्व्वत्वेनार्थान्तर-वाचितया विकसन इत्यर्थः। ञि—स्फुटति केतकीकोरकः। अस्फुटीत् पुस्फोट।

६४। स्फुटङ च (स्फुट, भ्वा, आ) चकाराद्विकसने। ङ—स्फोटन्ते नवकुड्मलानि कुटजप्रायेषु दन्तेषु चेतिहलायुधः। १३।

६४। स्फुटिक् नर्म्मणि (स्फुण्ट, चु, प) पद्ममस्करी। नर्म्म इह परीहासः। इ, क—स्फुण्टयति सखायं लोकः। अयं केचिन्न मन्यते।

६४। आङः स्फुटक् हिंसे (आङ्पूर्ब्बक स्फुट्, चु, प) आङ् उपसर्गः। क—आस्फोटयति।

६५। स्फिटक् इत्यात्र (स्फिट, चु, प) क—स्फेटयति। इति; केचिन्न मन्यते। चकाराद्धिंसे च।

६६। स्फुट्टक् चानादरे (स्फुट्ट, चु, प) पद्ममस्करी, टद्वयान्तः। क—स्फुट्टयति। चकारात् स्फिटक् च।

६७। स्मिट् कच (स्मिट, चु, प) ओष्ठ्यवर्गीयपयुक्तः। क—स्मेटयति। चकारात् अनादरे।

६८। स्मिट् क च स्नेहे (स्मिट, चु, प) दन्त्यवर्गीयपयुक्तः। क—स्मेटयति। चकारात् स्मिट् क च।

६६। स्फटि शीर्णौ } (स्फण्ट, भ्वा, प)
६६। स्फट शीर्णौ } (स्फट, भ्वा, प) द्वावप्यस्वरिणावोष्ठ-

वर्गद्वितीययुक्तौ। प्रथमस्वरिणाविति भ्रमो हेयः। तथात्वे सजातीयतया स्फुटक् भिदीत्यादीनां सन्निधावेवापठिष्यत्। एवं संख्यापि न सङ्गच्छते, स्फुटिर्विशरणे इत्यनेनैवेष्टसिद्धौ शेषधातोश्च वैयर्थ्यं स्यात्। अतएव रमानाथोऽपि स्फुटिर्विशरणे इत्यत्र उकारशून्यः स्फट इति केचित् पठन्ति। पचादित्वादनि स्फटा फणा इति स्मृतिरित्यन्तमाह। शीर्णिर्भेदनम्। इ— स्फण्टते। स्फटति गात्रं वाणः। पस्फण्ट, पस्फाट, स्फटिकम्।

७०। हट दीप्तौ (हट, भ्वा, प) हटति। दीप्ति दीप्तौ। (हटतीति हाटकं स्वर्णम्)।

७१। हेट बाधे (हेट, भ्वा, प) हेटति। बाधो विहतिः।

## टान्ता इत्येकसप्ततिः।

(टान्ताधातव एकसप्ततिसंख्याः)।

---

## ठान्तवर्गः।

### अठिङ्ङठ गतेऽथोठोपघाते ङ्एठ बाधने।

१। अठिङ् गते (अण्ठ, भ्वा, आ)
१। अठ गते (अठ, भ्वा, प) इ—अण्ठ्यते। ङ—अण्ठते। अठति।

२। अथोठोपघाते (उठ, भ्वा, प) ऋत्वादिः। ओठति खलः साधुम्। (उपघातः पीड़नम्)।

३। ङ्एठ बाधने (एठ, भ्वा, आ) बाधनं विहतिः। (प्रतिबन्धीकरणमित्यर्थः) ङ—एठते मत्सरं लोकः।

कुठि खोटनवैकल्यालस्ये कठ् तङ्कने कठि ।
कि आध्याने कठि ङ च गुठिक् वेष्टे पिठ क्लिशि।
वधे पठ् वाचि वठ् स्थौल्ये मठ् वासमर्द्दयोर्मठि।
ङ स्वाध्याने मुठि ङ तु पलाये रठ भाषणे ।

४। कुठि खोटनवैकल्यालस्ये (कुण्ठ, भ्वा, प) पञ्चमस्वरी। इ—कुण्ठ्यते। वैकल्यं विकलीभावः। आलस्यं मन्दीभावः। कुण्ठति खञ्जः शोकार्त्तो दृद्धो वा।

५। कठ तङ्कने (कठ, भ्वा, प) तङ्कनं दुःखेन जीवनम्। कठति दीनः।

५। कठि कि आध्याने (कण्ठ, चु, भ्वा, प) इ—कण्ठ्यते (इदमुदाहरणं भ्वादिपक्षे बोध्यम्) कि—कण्ठयति, कण्ठति। आध्यानं "स्मृत औत्क्ये" इत्यत्र व्याख्यातम्।

५। कठि ङ च (कण्ठ, भ्वा, आ) इ—कण्ठ्यते। ङ—कण्ठते। चकारादाध्याने। रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते इति। (नोत्कण्ठते परद्रव्ये नोत्कण्ठति परस्त्रियं। यस्योत्कण्ठयति श्लाघ्ये धर्म्म एव मनःसदेत्युभयत्र हलायुधः। ८८)।

६। गुठिक् वेष्टे (गुण्ठ, चु, प) ऊस्वी। इ, क—गुण्ठयति। अजुगुण्ठत्। (अवगुण्ठनम्)।

७। पिठ क्लिशि वधे (पिठ, भ्वा, प) ओष्ठवर्गाद्यादिः। पेठति। पिपेठतुः। क्लिशि दुःखानुभवे।

८। पठ वाचि (पठ, भ्वा, प) पठति श्लोकं धीरः।

९। वठ स्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम्। वठति वीरो योद्धुं समर्थः स्यादित्यर्थः।

प्रतीघाते, लुठोपघाते इत्यर्थः। (क्वचित् कार्य्ये न लोठते इति हलायुधः। ४६। न प्रतिहतो भवतीत्यर्थः)।

**लुठ् शि लोटे लुठक् चौर्य्ये वठि ङ्ङेकचरे वठ।**
**स्थौल्ये शठ कङ श्लाघे शठ् वधक्लेशकैतवे।**

१४। लुठ शि लोटे (लुठ, तुदा, प) शि—लुठति, अलुठीत्। लुलोठ। लोटः स्वस्वीभावः। हारोऽयं हरिणाचीणां लुठति स्तनमण्डले इत्यमरुशतकम्।

१४। लुठक् चौर्य्ये (लुठ, चु, प) क—लोठयति।

१५। वठिङ् एकचरे (वण्ठ, भ्वा, आ) एकचर एककर्तृकाचरणम्। इ—वण्ठते। ङ—वण्ठते चौरश्चोरयितुमेकचरतीत्यर्थः।

१५। वठस्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम्। वठति दाता, दातुं समर्थः स्यादित्यर्थः।

१६। शठ कङ श्लाघे (शठ, चु, आ) क, ङ—शाठयते।

१६। शठ वधक्लेशकैतवे (शठ, भ्वा, प) क्लेशो दुःखानुभवः। कैतवमिह वञ्चनम्। शठति खलः साधुं, वञ्चयते इत्यर्थः।

**शठकालस्ये श्वठ् श्वठिक् च गत्यसंस्कृतसंस्कृते।**

१६। शठकालस्ये (शठ, चु, प) क—शाठयति दक्षः, क्रियासु मन्दः स्यादित्यर्थः।

१७। श्वठक् गत्यसंस्कृतसंस्कृते } (श्वठ, चु, प)
१७। श्वठिक् च गत्यसंस्कृतसंस्कृते } (श्वण्ठ, चु, प)

द्वौ वकारयुतौ। पुनः पाठात् पूर्व्वौ नेदनुबन्धः। तयोरर्थाः।

१०। मठ वासमर्द्दयोः (मठ, भ्वा, प) मठति। वासो निवासः। मर्द्दः कैश्चिन्नमन्यते।

१०। मठि ङ त भाध्याने (मण्ठ, भ्वा, भा) इ—मण्ठ्यते। ङ—मण्ठते। भाध्यानं "स्मृ भौत्कण्ठ्ये" इत्यत्र व्याख्यातम्।

११। मुठि ङ तु पलाये (मुण्ठ, भ्वा, भा) पवर्गीयादिः, पञ्चमस्वरी। इ—मुण्ठ्यते। ङ—मुण्ठते चौरः।

१२। रठ भाषणे (रठ, भ्वा, प) रठति। भाषणं कथनम्।

रुठोपघाते रुठल्ङ् प्रतीघातेऽथ रुठ् लुठि।
गत्यालस्यस्तेयखोटे ल्ट लुठङ् लुठ रादिवत्।

१३। रुठोपघाते (रुठ, भ्वा, प) रोठति खोर्ग शोकः।

१३। रुठ ल्ङ् प्रतीघाते (रुठ, भ्वा, भा) ल्ट—अरुठत्। ङ—रोठते। प्रतीघातः शोकादिना पतनं, पुनर्हननं वा।

१३। अथ रुठि गत्यालस्यस्तेयखोटे } (रुण्ठ, भ्वा, प)

१४। लुठि गत्यालस्यस्तेयखोटे } (लुण्ठ, भ्वा, प)

द्वौ पञ्चमस्वरिणौ। इ—रुण्ठ्यते, लुण्ठ्यते। (यो लुण्ठति गिरिं कश्चिदिति हलायुधः। ४६। मन्तव्यार्थं गिरिशिखरं गच्छतीत्यर्थः)।

१४। ल्ट लुठ ङ रादिवत् } लुठ, भ्वा, भा)

१४। लुठ रादिवत् } (लुठ, भ्वा, प) ल्ट—अलुठत्। ङ—लोठते। लोठति। रादिवत्—(एतौ रुठधातू) रादौ रेफादौ ठान्तौ एतत् सदृशौ यौ धातू (रुठ ल्ङ् प्रतीघाते, रुठोपघाते इत्यभावित्यर्थः) क्रमाणयोरर्थे वर्त्तेते। तथा च ल्टलुठ

प्रतीघाते, लुठोपघाते इत्यर्थः। (क्वचित् कार्य्ये न लोठते इति हलायुधः। ४६। न प्रतिहतो भवतीत्यर्थः)।

लुठ् ञि लोटे लुठक् चौर्य्ये वठि ङ‍ेकचरे वठ।
स्थौल्ये शठ कङ श्लाघे शठ् वधक्लेशकैतवे।

१४। लुठ ञि लोटे (लुठ, तुदा, प) ञि—लुठति, अलुठीत्। लुलोठ। लोटः मस्तहीभावः। शरोऽयं हरिणाचीणां लुठति स्तनमण्डले इत्यमरुशतकम्।

१४। लुठक् चौर्य्ये (लुठ, चु, प) क—लोठयति।

१५। वठिङ् एकचरे (वण्ठ, भ्वा, आ) एकचर एककर्तृकाचरणम्। इ—वण्ठ्यते। ङ—वण्ठते चौरश्चोरयितुमेकचरतीत्यर्थः।

१५। वठस्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम्। वठति दाता, दातुं समर्थः स्यादित्यर्थः।

१६। शठ कङ श्लाघे (शठ, चु, आ) क, ङ—शाठयते।

१६। शठ वधक्लेशकैतवे (शठ, भ्वा, प) क्लेशो दुःखानुभवः। कैतवमिह वञ्चनम्। शठति खलः साधुं, वञ्चयते इत्यर्थः।

शठकालस्ये श्वठ् श्वठिक् च गत्यसंस्कृतसंस्कृते।

१६। शठकालस्ये (शठ, चु, प) क—शाठयति दुष्टः, क्रियासु मन्दः स्यादित्यर्थः।

१७। श्वठक् गत्यसंस्कृतसंस्कृते } (श्वठ, चु, प)
१७। श्वठिक् च गत्यसंस्कृतसंस्कृते } (श्वण्ठ, चु, प)

द्वौ वकारयुक्तौ। पुनः पाठात् पूर्वो नेदनुबन्धः। त्रयोऽर्थाः।

क—शाठयति । दु, क—शण्ठयति जनः, गच्छति, किमपि न संस्करोति, संस्करोति वेत्यर्थः। संस्कारगत्योरिति केचित्। चकारात् शठक् च ( एतदर्थत्रितयवानित्यर्थः ) ।

शुठि शुठ् खोटने शुठ् कालस्ये शुठिकि शोषणे ।

१८। शुठि खोटने } ( शुण्ठ, भ्वा, प )
१८। शुठ खोटने } ( शुठ, भ्वा, प ) द्वौ पञ्चमस्वरिणौ। खोटनमिह गतिव्याघातः। दु—शुण्ठते। शोठति पयः सेतुना।

१८। शुठ्कालस्ये ( शुठ, चु, प ) क—शोठयति दक्षः क्रियासु, मन्दः स्यादित्यर्थः ।

१८। शुठि कि शोषणे ( शुण्ठ, चु, भ्वा, प ) तालव्यादिः पञ्चमस्वरी। शोषणमिह चुरादिपक्षे शुष्कीकरणम्, भ्वादिपक्षे शुष्कीभावः। कि—शुण्ठयति काष्ठमातपः, शुण्ठति फलमातपात्। न च भौवादिकस्यैव प्रेरणञौ शुष्कीकरणवाचित्वात् चुरादावस्यपाठो व्यर्थः स्यादिति वाच्यं, चुरादित्वे परस्मैपदं, प्रेरणञन्तत्वे उभयपदमिति भेदात् ।

सठ स्वठ्क श्वठार्थे हठ् कीलबन्धे बलात्कृतौ ।
प्लुतौ हेठ्य् खचे हेठृङ् बाधे ठाविंशतिस्त्रिभिः ।

१६। सठ क श्वठार्थे } ( सठ, चु, प )
२०। स्वठ क श्वठार्थे } (स्वठ, चु, प) द्वौ कमाद्दन्त्यादी, शेषो वकारयुक्तः। क—साठयति, स्वाठयति। श्वठार्थे गत्यसंस्कृतसंस्कृतेषु।

२१। हठ कीलबन्धे बलात्कृतौ स्रुतौ (हठ, भ्वा, प) कीले बन्धः कीलबन्धः। हठति छागं लोकः कीले बध्नातीत्यर्थः। कातन्त्रादौ बलात्कारमात्रे, हठति परचक्रं बली।

२२। हेठ श्र पचे (हेठ, तुदा, प) श्र—हेठन्ती हेठती। पचो भूतिपूर्त्योरुत्पत्तिः।

२३। हेठृङ् बाधे (हेठ, भ्वा, आ) ऋ—अजीहिठत् अजिहेठत्। ङ—हेठते मत्सरं साधुः। बाधो विहतिः।

## ठाविंशतिस्त्रिभिः।

(ठाः ठान्ताधातवः त्रिभिः सह विंशतिः त्रयोविंशतिसंख्यका इत्यर्थः) अत्र संख्यायामेकोनाशीति चिन्त्यम्।

---

## डान्तवर्गः।

अड्डृ अड्डाभियोगेऽड्डृ व्यापेऽड्डुद्यम ईड् लड।
स्तुतावीडक् चौलडिक्युत्क्षेपे कड् मादने कडि।
अड् च दर्पे कडिक् भेदे रक्षणे लड्विडा डजि।
स्नेहे मोक्षे क्रीडृ खेले कुडशि बाल्येऽदने कुडिङ्।
दाहेऽथ कुडि वैकल्ये कुडिक् रक्षेऽथ कूड् शि तु।
धान्ये भक्षे काड्ड कड्ड कार्कश्ये खोड्ड् खोटने।

१। अड्डृ अभियोगे } (अड्ड, भ्वा, प)
२। अड्डृ अभियोगे } (अड्ड, भ्वा, प) द्वौ क्रमात् दन्त्यमूर्द्धन्यवर्गतृतीयोपधौ। अड्डिडिषति। अडिड्डिषति। क्विपि

अट्, अड्। अभियोगः समाधानम्। अड्डति पदं विद्वान्। अभिसमन्तात् योगोऽभियोग इति गोविन्दभट्टः।

२। अड्डृ व्याप्ते (अड, स्वा, प) र—वैदिकः। न—अड्डोति।

३। अड् उद्यमे (अड, भ्वा, प) अडति लोकः सुखाय।

४। ईड् लड स्तुतौ (ईड, अदा, आ) दीर्घादिः। ल, ङ—ईट्टे।

४। ईड क च (ईड, चु, प) क—ईडयति। चकारात् स्तुतौ। (ईट्टे त्रिपिष्टपस्थाने यद्गुणाचारणाव्रजः। स्वयं पुलकितो हर्षाद्विडौजा ईडयत्यपीत्युभयत्र हलायुधः। १५८)।

५। ओलडि क्षुत्क्षेपे (ओलण्ड, चु, भ्वा, प) अन्तःस्थततीयमध्यः। इ—ओलण्ड्यते। कि—ओलण्डयति ओलण्डति तण्डुलान् लोकः। कर्पूरमोलण्डयतीति दर्शनात्।

६। कड् य मदने (कड, तुदा, प) य—कडन्ती कडती। प्राञ्चस्तु वेदेपूच्चारणभेदार्थं भ्वादावप्येतं पठन्ति। तथाच—कड मद इति धातुः पठ्यते भूतुदाद्योः कडति कडति रूपं तुल्यमेव द्वयोः स्यात्। तदुभयगणपाठे किं फलं नेति वाच्यं स्वरकृत इह भेदः प्रपृथयोरस्ति यस्मादिति। स्वरकृत इति उदात्तानुदात्तस्वरितविशिष्टसंज्ञकचतुर्विधस्वरकृत इत्यर्थः।

६। कडि अह् च दर्पे (कण्ड, भ्वा, उ) दर्प इह हर्ष। इ—कण्ड्यते। अ-कण्डति कण्डते। ङ-कण्डते जनः, हृष्टः स्यादित्यर्थः। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो अकारः। अनेकार्थत्वात् तुषापनयनेऽपि। कण्डते तण्डुलान् लोकः। चकारात् कडयच (हर्षार्थः)।

६। कडिक् भेदे रक्षणे (कण्ड, चु, प) इ, क—कण्डयति।

७। क्ष्व क्ष्विडा ङञि स्नेहे मोचे (क्ष्विड, भ्वा, भा) वकारयुक्तः। क्ष्व—अक्ष्विडत्। भा—क्ष्विडितं क्ष्विण्णं तेन, प्रक्ष्विडितः प्रक्ष्विण्णः सः। ङ—क्ष्वेडते। ञि—क्ष्विण्णोऽस्ति। स्नेहः स्निग्धीभावः। मोचे—क्ष्वेडते तिलस्तैलं, मुञ्चतीत्यर्थः।

८। क्रीड़ खेले (क्रीड, भ्वा, प) ऋ—अचिक्रीडत्। क्रीडति बालः शिशुभिः।

९। कुडणि बाल्येऽदने (कुड, तुदा, प) एतदाद्याश्चत्वारः षष्ठस्वरिणः। बाल्यमिह शिशुव्यापारः। णि—कुडति, अकुडीत् सिकताभिः शिशुः।

९। कुडिङ् दाहे (कुण्ड, भ्वा, भा) इ—कुण्ड्यते। ङ—कुण्डते।

९। अथ कुडि वैकल्ये (कुण्ड, भ्वा, प) इ—कुण्ड्यते। कुण्डति जनं दैवं, विकलं करोतीत्यर्थः।

९। कुडिक् रक्षे (कुण्ड, चु, प) इ, क—कुण्डयति।

१०। अथ कूड्यित् घान्ये भक्षे (कूड, तुदा, प) षष्ठस्वरी। फलाभावेऽप्यस्य कुटादौ पाठः प्राचामनुरोधात्। प्राञ्चोऽपि डान्तप्रस्तावादिमं कुटादौ पठितवन्तः। यि—कूडन्ती कूडती। घान्यं घनीभावः। कूडति दुग्धं वह्नियोगात्। कूडत्यन्नं लोकः।

११। कड्ड कार्कश्ये } (कड्ड, भ्वा, प)
१२। कड्डड कार्कश्ये } (कड्डड, भ्वा, प) द्वौ कमाट्टवर्गतवर्गतृतीयोपधौ। क्विपि कड्, कड्ड। कड्डति पद्मनालं कर्कशं स्यादित्यर्थः।

कार्कश्ये इत्यस्मात् कार्कश्य इत्यस्यानुवृत्त्या कपोलकर्तृककार्कश्येऽयमिति व्याख्याय गण्डति कपोल. पांशुना इत्युदाहृतवान् । केचित्तु गण्ड इति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्वस्यान्यत्र प्रयोग इत्याहुः ।

१६। गड्म सेके (गड, भ्वा, प) म-गडयति। सेकः क्षरणम्। गडति घटात् पानीयम्। डलयोरैकवाक्यस्यैव प्रायः प्रयोग इति रमानाथः। तन्मते लान्तपक्षेऽपि मानुबन्धः। स्वमते तु लान्तोऽपि वक्ष्यमाणः, अनुबन्धशून्य इति विरोधः।

१७। गुडिक् वेष्टे (गुण्ड, चु, प) एतदाद्याः सप्तमस्वरिणः सप्त। इ, क-गुण्डयति। अनेकार्थत्वाच्चूर्णीकरणेऽपि। गुण्डयति चिङ्गलं लोकः।

१७। अथ गुड शि च रक्षे (गुड, तुदा, प) शि—गुडति, अगुडीत्, जुगोड। चकारात् गुडिक् च (रक्षार्थकः)।

१८। शि घुड् च व्याघाते (घुड, तुदा, प) शि-घुडति, अघुडीत्, जुघोड। चकारात् गुडशिच (व्याघातार्थकः)।

१९। चुडि तौच्छ्ये (चुण्ड, भ्वा, प) इ-चुण्डति। तौच्छ्यमल्पीभावः।

१९। चुडिक् छिदि (चुण्ड, चु, प) इ, क-चुण्डयति।

## चुड्ड चुड्ड क्षतौ हावे चडिक् रोपे चडि ङ्डपि।

२०। चुड्ड क्षतौ हावे } (चुड्ड, भ्वा, प)
२१। चुड्ड क्षतौ हावे } चुड्ड, भ्वा, प) द्वौ क्रमाट्टवर्गतवर्गतृतीयोपधौ। क्विपि चुड्, चुद्। कातन्त्रादौ हावकरणमित्येकोऽर्थः। अमी हावाः क्रियाः शृङ्गारभावजा इत्यमरः।

भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते इति साहित्यदर्पणः । चुड्डुति कान्ताथवा कान्तः ।

२२। चडिक् रोषे ( चण्ड, चु, प ) इ, क–चण्डयति ।

२२। चडिङ् अपि ( चण्ड, भ्वा, आ ) इ–चण्डते । ङ–चण्डते । अपिशब्दात् रोषे ।

## जुडृ गतौ जुडॢ बन्धे जुडक् नोदे तडक् त्विषि।

२३। जुडृ गतौ (जुड, तुदा, प) ऋ–जुडति । जोडिता ।

२३। जुडॢ बन्धे (जुड, तुदा, कुटादि, प) ॢ–जुडति, अजुडीत् जुजोड । तानुच्छृङ्खलतापन्नान् शृङ्खलेन जुडत्यसाविति हलायुधः । ११२ ।

२३। जुडक् नोदे ( जुड, चु, प ) क—जोडयति। नोदः प्रेरणम् ।

२४। तडक् त्विषि ( तड, चु, प ) क—ताडयति। त्विषि दीप्तौ ।

## तडिङ्ङ्याहतौ तोडृ नादरे तुड्डु तूडृ च ।

२४। तडिङ् अप्याहतौ ( तण्ड, भ्वा, आ ) इ—तण्डयते । ङ—तण्डते । अपिशब्दात् तडक् च ( आहत्यर्थकः ) ।

२५। तोडृ नादरे ( तोड, भ्वा, प ) ऋ—अतुतोडत् । नादरोऽनादरः ।

२६। तुड्डु च ( तुड्ड, भ्वा, प )
२७। तूडृ च ( तूड, भ्वा, प ) आद्यः पञ्चमस्वरी । उइयान्न । तुड्डति । फलाभावान्न उदनुबन्धः । शेषः षष्ठस्वरी । ऋ—अतुतूडत् । चकारादनादरे ।

## तुड़ तुडिङ् वधे तुड्शि भेदे थुडशि संवृतौ ।

१८ । तुड़ वधे ) ( तुड, भ्वा, प )
२८ । तुडिङ् वधे ) ( तुण्ड, भ्वा, था ) द्वौ पञ्चमस्वरिणौ । पूर्व्वस्य ऋदनुबन्धसाफल्यार्थमिकारः परस्यैव; तत्प्रधानात् ङकारोऽपि तथा । ऋ—अतुतोडत् । ङ—तुण्ड्यते । ङ—तुण्डते । वधः पूर्व्वधातुपक्षे द्विधाकरणमिति गोविन्दभट्टः । तोडति मल्लो मल्लाङ्ग भनक्तीत्यर्थः । शेषधातुपक्षे वधो निपीडनमिति रमानाथ । तुण्डते मान्य पिक ।

२८ । तुड्शि भेदे ( तुड, तुदा, प ) शि—तुडति, अतुडीत्, तुतोड । उपहनने इति कश्चित् ( १ ) ।

२९ । थुडशि संवृतौ ( थुड, तुदा, प ) शि—थुडति, अथुडीत्, तुथोड ।

## ड्रुड् ड्रुड्शि मज्जने द्राड ध्राड्ङ् शीर्णौ शि नुड्वधे ।

३० । ड्रुड् मज्जने ) ( ड्रुड, भ्वा, प )
३० । ड्रुड् शि मज्जने ) ( ड्रुड, तुदा, प ) द्वौ रेफयुक्तौ । मज्जनं जलान्तःप्रवेश । ड्रोडति प्रस्तरो जले । डुड्रोडिषति । डुड्रुडिषति । शि—ड्रुडति, अड्रुडीत्, डुड्रोड । एतौ कश्चिन्न मन्यते । क्रमदीश्वरस्तु कुटादिमेव मन्यते । ( पृथक् पाठात् पूर्व्वो न शानुबन्ध ) ।

३१ । द्राड्ङ् शीर्णौ ) ( द्राड, भ्वा, था ) ।
३२ । ध्राड्ङ् शीर्णौ ) ( ध्राड, भ्वा, था ) द्वौ रेफयुक्तौ ।

---

( १ ) तोडनमुपहनन, तुडति परं परन्तप इति रमानाथ ।

ऋ—अटड्डाडत्, अटड्डाडत् । ङ—ड्राडते, धाडते । शीर्णि-विभेदः ।

३३ । शि तुड् वधे ( तुड, तुदा, प ) शि—तुडति, अतुडीत्, तुतोड ।

नडक् भ्रंशे पडिङ् गत्यां पड् पिडिक् संहतौ पिडिङ् ।
तत पीड्क् बाधगाह्रे पुडि मर्द्दे ष्टडश् स्फुटि ।

३४ । नडक् भ्रंशे (नड, चु, प) क—नाडयति । भ्रंशोऽधः-पतनम् ।

३४ । पडिङ् गत्यां ( पण्ड, भ्वा, आ ) ङ्—पण्डते । ङ—पण्डते ।

३५ । पडिक् संहतौ } ( पण्ड, चु, प )
३६ । पिडिक् संहतौ } ( पिण्ड, चु, प ) ङ्, क—पण्डयति, पिण्डयति । संहतीराशीकरणम् ।

३६ । पिडिङ् तत ( पिण्ड, भ्वा, आ ) ङ्—पिण्डते । ङ—पिण्डते । तत—संहतौ ।

३७ । पीड्क् बाधगाह्रे (पीड, चु, प) बाधो विहतिः, गाह्रो विलोडनम् । ऋ—अपीपिडत्, अपिपीडत् । ( भ्राज भ्रासेति वा ह्रस्वः ) क—पीडयति शत्रुं लोकः । पीडयति स्तन कामी ।

३८ । पुडि मर्द्दे (पुण्ड भ्वा, प) पञ्चमस्वरी । ङ्—पुण्डति । मर्द्दश्चूर्णीकरणम् ।

३९ । ष्टडश् स्फुटि ( ष्टड, तुदा, प ) स्फुटि स्फुटीकरणे । श—ष्टडति दीनं दाता । पडिता ।

शि बुडुत्सर्गसंहत्योर्भडिङ् वाचि भडिक् शिवे ।

४० । शि बुडुत्सर्गसंहृत्योः ( बुड, तुदा, प ) शि—बुडति, अबुडीत्, बुबोड ।

४१ । भडिङ् वाचि ( भण्ड, भ्वा, आ ) परिभाषणे इति गोविन्दभट्टः । परिहासे इति चतुर्भुजः । इ—भण्डते । ङ—भण्डते सिद्धं लोकः ।

४१ । भडिक् शिवे ( भण्ड, चु, प ) शिवं कल्याणक्रिया वेदेष्वेव । प्रतारणे प्रसिद्धोऽयम् । इ, क—भण्डयति प्रतारको लब्धं धनदानाङ्गीकारेण ।

भ्रुड्शि संहृतिसंहत्यो र्भुडि ङ स्यात् भृतौ हृतौ ।

४२ । भ्रुड् शि संहृतिसंहत्योः ( भ्रुड, तुदा, प ) रेफयुक्तः । शि—भ्रुडति, अभ्रुडीत्, बुभ्रोड । अयं कैश्चिन्न मन्यते ।

४३ । भुडि ङ स्यात् भृतौ हृतौ ( भुण्ड, भ्वा, आ ) पञ्चमस्वरी । इ—भुण्डते । ङ—भुण्डते । भृतिरिह भरणम् । हृतिरन्यैर्न मन्यते ।

म्लेड म्रेड् मेड उन्मादे म्रड्श् मोदे मडिक् चकि ।
मडि भूषे मडि ङ विभागे वेष्टे मुडि च्छिदि ।
मर्द्दे मुडि ङ मग्नेऽथ यौड रौड् तु टान्तवत् ।

४४ । म्लेड् उन्मादे } ( म्लेड, भ्वा, प )
४५ । म्रेड् उन्मादे } ( म्रेड, भ्वा, प )
४६ । मेड् उन्मादे } ( मेड, भ्वा, प ) ड्रावाद्यौ क्रमात्तःस्थतृतीयरेफयुक्तौ । ऋ—अमिम्लेडत् अमिम्रेडत्, अमिमेडत् । म्लेडति, म्रेडति, मेडते उन्माद्यतीत्यर्थः ।

४७। म्लड् गश् मोदे (म्रड, क्रा, तुदा, प) मोद इह हृष्टीभावो हृष्टीकरणञ्च। ग—म्रड्नाति सरस्वत्या च यः सदेति हलायुधः। २७१। श—म्रडति दीनं दाता। अम्रडित्वा सहस्राक्षमिति भट्टिः। ७। ६६। म्रडिता।

४८। मडिक् च (मण्ड, चु, प) इ, क—मण्डयति। चकारान्मोदे।

४८। कि मडि भूषे (मण्ड, चु, भ्वा, प) कि—मण्डयति मण्डति हारो जनम्। इ—मण्ड्यते।

४८। मडि ङ विभागे वेष्टे (मण्ड, भ्वा, आ) इ—मण्ड्यते। ङ—मण्डते।

४६। मुडि छिदि मर्द्दे (मुण्ड, भ्वा, प) पञ्चमस्वरी। इ—मुण्ड्यते। छेद इह लोमच्छेद एव। मुण्डति मुण्डं नापितः लोमरहितं करोतीत्यर्थः।

४६। मुडि ङ मग्ने (मुण्ड, भ्वा, आ) पवर्गशेषादिः, पञ्चमस्वरी। मग्नमिति मस्जधातोर्भावक्तं रूपं मज्जनमित्यर्थः। इ—मुण्ड्यते। ङ—मुण्डते प्रसरो जले। चतुर्भुजस्तु मार्ज्जने इति पठित्वा मार्ज्जनं शुद्धिरिति व्याख्याय मुण्डते जलेन गात्रं लोक इत्युदाहृतवान्।

५०। यौड़ टान्तवत् } (यौड, भ्वा, प)
५१। रौड़ टान्तवत् } (रौड, भ्वा, प,) द्वौ चतुर्द्दशस्वरिणौ। ऋ—अयुयौडत्, अरुरौडत्। टान्तवदिति यौड़ सम्बन्धे, रौड़ नादरे इत्यर्थः।

रोड़ रौड़त् लड् विलासे लड्मोन्मन्थनजिह्वयोः।

५२। रोड़ रौड़त् ( रोड, भ्वा, प ) त्वर्योदग्रसरी। क्त—अरुरोडत्। रौड़त् चनादरे इत्यर्थः।

५३। लड् विलासे ( लड, भ्वा, प ) लडति बाला।

५३। लड् मोन्मन्यनजिह्वयोः ( लड, भ्वा, घटादिः, प ) म—लडयति। उन्मन्यनं पीड़िताभाव उत्क्षिप्तीभावश्च। लडति लता वायुना, पीड़िता उत्क्षिप्ता वा स्यादित्यर्थः। जिह्वा जिह्वाविषयकक्रिया। लडति जिह्वा स्पन्दते इत्यर्थः। च्चलयति त्वचमुल्ललयत्यसूनिति श्रीहर्ष, पीडयतीत्यर्थः। ४। १०६। कवाटमीभिन्दुः किरणलहरीमुल्ललयतीति मुरारिः। उत्क्षिपतीत्यर्थः। उभयत्र डलयोरेकत्वाल्लत्वम्। केचित्तु जिह्वोन्मन्यने इति पठित्वा जिह्वाया उन्मन्यनमुत्क्षेपणमिति व्याख्याय लडयति जिह्वा सर्प इत्येवोदाहरन्ति। (तावत् खरःप्रखरमुल्ललयाञ्चकार इति माघः। ५। ७)।

## लड् कोपसेवे लड कड् वीप्से लडि कि भापणे।

५३। लड् कोपसेवे ( लड, चु, प ) उपसेव इहात्यन्तपालनम्। क—लालयेत् पञ्च वर्षाणि, पुत्त्रमितिशेषः। अत्र डलयोरेकत्वाल्लत्वम्। कम्पनायामस्य प्रायःप्रयोग इति रमानाथः। लाडयति लतां वायुः।

५३। लड कड् वीप्से ( लड, चु, आ ) क, ङ—लाडयते। लान्त एवायमिति केचित्। विशेषेणाप्तुमिच्छा वीप्सा।

५३। लडि कि भापणे (लण्ड, चु, भ्वा, प ) इ—लण्डाते। कि—लण्डयति, लण्डति। भाषणं कथनम्। अयं कैश्चिन्न मन्यते।

श्रो लडि क्षुत्क्षेपणे लुड् मन्थे लुडशि संहतौ ।
क्षेपे लोड् लोड् उन्मादे लुण्डक् चौर्य्ये विडाक्रुशि ।

५३ । श्रो लडि क्षुत्क्षेपणे ( लण्ड, चु, भ्वा, प ) श्रो—लडिइन: । अनुबन्धवलादिमव्यवधानेऽपि निष्ठातस्य नः । अन्यान्निष्ठाया इन् नास्तीत्येके ; लण्ड्न इति । इ—लण्डने । कि—लण्डयति लण्डति तण्डुलान् लोकः ।

५४ । लुड् मन्थे (लुड, भ्वा, प) लोडति मन्थौ विलोडनम् ।

५४ । लुड शि संहतौ क्षेपे ( लुड, तुदा, प ) शि—लुडति, अलुडीत्, लुलोड ।

५५ । लोड् उन्मादे } ( लोड, भ्वा, प )
५६ । लौड् उन्मादे } (लौड, भ्वा, प) शेषचतुर्द्दशस्वरी । ऋ—अलुलोडत् । अलुलौडत् ।

५७ । लुण्डक् चौर्य्ये ( लुण्ड, चु, प ) पञ्चमस्वरी । क—लुण्डयति ।

५८ । विडाक्रुशि ( विड, भ्वा, प ) आक्रुशि आक्रोशने । वेडति शठं वली ।

वडिक् विभागे वडिङ वेष्टे च श्रीड् यशि त्विपि ।
लज्जे वाडङ आप्लावे ब्रुडशि मज्जार्थसञ्चयोः ।

५९ । वडिक् विभागे ( वण्ड, चु, प ) इ, क—वण्डयति । अयं कैश्चिन्न मन्यते ।

५९ । वडिङ वेष्टे च (वण्ड, भ्वा, आ) इ—वण्ड्यते । ङ—वण्डते । चकारात् विभागे च ।

६० । व्रीड् यजि क्षिपि लज्जे (व्रीड, दिवा, प) रेफयुक्तः । य—व्रीड्यति बाणं वीरः । व्रीड्यति वधूः । ञि—व्रीडितोऽसि ।

६१ । वाड़ृङ आप्लावे (वाड, भ्वा, आ) ऋ—अववाडत् । ङ—वाडते लोकः । आप्लावः स्नानम् । उन्मज्जनमित्येके ।

६२ । व्रुड शि भ्रुडार्थमज्जयोः (व्रुड, तुदा, प) रेफयुक्तः । शि—व्रुडति, अव्रुडीत्, वुव्रोड । भ्रुडार्थः (भ्रुडधातोरर्थः) संहति-संहती, मज्जो मज्जनम् ।

**शाड़ृङ् श्लाघे शौड़ृ गर्वे शडिङ् सङ्घरुजोः स्फुड ।**
**स्फुड़्शि हत्यां स्फुडिङ् फुल्ले स्फुडिक् नर्मणि क्रुड्शितु ।**
**मग्ने क्रुडिङ् च सङ्गे क्रुड् हुड हूड हुड़ृङ् गतौ ।**

६३ । शाड़ृङ् श्लाघे (शाड, भ्वा, आ) ऋ—अशशाडत् । ङ—शाडते गुणिनं गुणी ।

६४ । शौड़ृ गर्वे (शौड, भ्वा, प) चतुर्दशस्वरी । ऋ—अशुशौडत् ।

६५ । शडिङ् सङ्घरुजोः (शण्ड, भ्वा, आ) तालव्यादिः । इ—शण्ड्यते । ङ—शण्डते काण्डो वीरं, रुजतीत्यर्थः ।

६६ । स्फुड शि हत्याम् } (स्फुड, तुदा, प)
६७ । स्फुड़ शि हत्याम् } (स्फुड, तुदा, प) शि—स्फुडति, अस्फुडीत्, पुस्फोड । स्फुडति, अस्फुडीत्, पुस्फोड । हत्यां संवरणे ।

६८ । स्फुडिङ फुल्ले (स्फुण्ड, भ्वा, आ) फुल्लं विकसनम् । इ—स्फुण्ड्यते । ङ—स्फुण्डते कुन्दकोरकः । पुस्फुण्डे ।

६७। स्फुडिक् नर्मणि (स्फुण्ड, चु, प) पञ्चमस्वरी। नर्म्म परिहासः। ष्ण, क—स्फुण्डयति सखायं लोकः। पुस्फुण्डयिषति। अयमाद्यस्वरीति कातन्त्राद्याः। पञ्चमस्वरोऽनार्ष इति गोविन्दभट्टः।

६८। त्रुड् शि त मग्ने (त्रुड, तुदा, प) शि—त्रुडति अत्रुडीत् तुत्रोड। मग्नं मज्जनम्।

६८। त्रुतिङ् च सङ्गे (त्रुण्ड, भ्वा, आ) पञ्चमस्वरी। ष्ण—त्रुण्ड्यते। ङ—त्रुण्डते धनं लोकः, राशीकरोतीत्यर्थः। चकारात् त्रुडशि च (सङ्गार्थकः)।

६८। त्रुडृङ् गतौ (त्रुड, भ्वा, आ)
६६। ह्रुडृङ् गतौ (ह्रुड, भ्वा, आ)
७०। क्रूडृङ् गतौ (क्रूड, भ्वा, आ)
७१। क्रुडृङ् गतौ (क्रुड, भ्वा, आ) मध्यमौ षष्ठस्वरिणौ, शेषौ द्वौ रेफयुक्तौ। ऋ—अजुत्रोडत्, अजुह्रुडत्, अजुक्रूडत्, अजुक्रोडत्। ङ—त्रोडते, ह्रुडते, क्रूडते, क्रोडते।

**हौड ह्रौडृङ् च हिडिङ होडृङ्ङपिङ हेडृ च।**
**अनादरे हेडृ वेष्टे डान्ताः षट्सप्ततिर्मताः।**

७२। हौडृङ् च (हौड, भ्वा, आ)
७३। ह्रौडृङ् च (ह्रौड, भ्वा, आ) द्वौ चतुर्दशस्वरिणौ, शेषो रेफयुक्तः। ऋ—अजुहौडत्। अजुह्रौडत्। ङ—हौडते। ह्रौडते। चकारात् गतौ।

७४। हिडिङपि (हिण्ड, भ्वा, आ)
७५। होडृङपि (होड, भ्वा, आ) ष्ण—हिण्ड्यते।

ङ—डिण्डते। लङ—अजुडोडत्। ङ—डोडते, जुडोडे। अपि-शब्दात् गतौ। डिण्डन्ते च यथा रात्राविति हलायुधः। (१११)।

७३। ङ हेड़ च अनादरे (हेड, भ्वा, आ) ङ—हेडते, जिहेडे। लङ—अजिहेडत्। चकारात् डिडिङ् डोड़ङ् च (अनादर इत्यर्थः)। (१)। हेडते शीलसम्पन्नो बान्धवानपि तानसाविति हलायुधः। (१११)।

७६। हेड्म वेष्टे (हेड, भ्वा, प) हेडति। ण—हिडयति (२)। अहिडि अहीडि। हिड हिड, हीड हीड। एकारस्य ह्रस्वविधाने कण्ठ्यत्वेन समानोऽप्यकारो न स्यात्, एचोयुत् स्वमिति नियमादिकार एव स्यात्। इकारस्य दीर्घविधौत ईकार एव, एकारस्यांशिककण्ठ्यत्वेन विरुद्धत्वात्। केचित्तु दीर्घपक्षे गुणं विधाय (गुणविधानेनैव दीर्घपक्षावस्थानादित्यर्थः) अहिड़ि अहेड़ीत्यादि मन्यन्ते।

डान्ताः षट्सप्ततिर्मताः।

(डकारान्ता धातवः षट्सप्ततिसंख्यका ज्ञाताः)

---

## ढान्तवर्गः।

ढुण्ढान्वेषण इत्येको ढकारान्तः प्रकीर्त्तितः।

१। ढुण्ढान्वेषणे (ढुण्ढ, भ्वा, प) ढान्तः पञ्चमस्वरी

(१) हेडते त्यजतीत्यर्थ इति धातुप्रदीपः। अनादरे तु भट्टमल्लः पठतीत्युक्तं कातन्त्रधातुवृत्तौ।

(२) इह पाठसामर्थ्यात् ह्रस्वत्वे सत्यपि नोपधालघयो गुण इत्युक्तं रमानाथेन।

दन्त्यनोपधं, ढयोगान्मूर्द्धन्यसेन ढुण्यत इत्यादि । ढुण्ढति धनं लोकः ।

## इत्येको ढकारान्तः प्रकीर्त्तितः ।

---

## णान्तवर्गः ।

### अण् रवेऽण् यङ् प्राण ऋण् दुञ् गतावोणृ अपसारणे ।

१ । अण् रवे ( अण, भ्वा, प ) अणति । रवः शब्दः ।

१ । अण् यङ् प्राणे ( अण, दिवा, आ, ) य, ङ—अण्यते जनो जीवतीत्यर्थः ।

२ । ऋण् दुञ् गतौ ( ऋण, तना, उ ) द, ञ—ऋणोति अर्णोति ; ऋणुते अर्णुते । उ—अर्णित्वा ऋत्वा । ( इमृपक्षे सेमृत्तुधकुषक्लिशेति कित्त्वनिषेधे गुणः, इमोऽभावपक्षे वनतनेति अमृलोपः) ।

३ । ओणृ अपसारणे ( ओण, भ्वा, प ) ऋ—मा भवान् ओणिणत् । ज्ञापकज्ञापिता विधयो लक्षणमनुसरन्तीति न्याया-दस्य ऋदनुबन्धो ज्ञापयति, अण्डि परे धातूनामादौ ह्रस्वः पश्चा-द्द्वित्वमिति । आदौ द्वित्वे दीर्घोपधाया असम्भवादेव ह्रस्वाभावे ऋदनुबन्धो व्यर्थःस्यात् । (१) अटगतावित्यादीनान्तु मा भवान् अटिटदित्यादि बोध्यम् । अपसारणमपनयनम् । ओणति धनं चौरः ।

### कणृ आर्त्तस्वरे कणृम गतौ काणृक निमीलने ।

---

(१) यत्र गुणकरणं न सम्भवति तत्रादावेव द्वित्वमित्याह अटगताविति ।

४। कणृ आर्त्तस्वरे (कण, भ्वा, प) ङ—अचीकणत् अचकाणत्। (भ्राजभासभाषेति वा ह्रस्वः)। कणति भीतः।

४। कणम गतौ (कण, भ्वा, प) म—कणयति।

४। काणक निमीलने (काण, चु, प) निमीलनं पक्ष्माभिश्चक्षुष आवरणम्। क—काणयति चक्षुः, पक्ष्माभिराहतं स्यादित्यर्थः।

## कुण शोषकरणे क्वण च शब्दे कूण कङ सङ्कुचि।

५। कुण शोषकरणे (कुण, तुदा, प) उपकरणं दानादिना पोषणम्। श—कुणति दीनं दयालुः। कोणिता।

६। क्वण च शब्दे (क्वण, भ्वा, प) चकारयुक्तः। क्वणति वीणा। चकारात् कुणश्च (शब्दार्थकः) (चक्राणिपुच्छतोत्-साहाः। यातुधाना इति शेष इति भट्टिः। ८। ११)।

७। कूण कङ सङ्कुचि (कूण, चु, आ) षट्स्वरी,। क, ङ—कूणयते चक्षुः, सङ्कुचितं स्यादित्यर्थः। सप्तमस्वरीत्येके।

## क्षणच्छिण दुञ वधे घण घृण दुञ दीप्तौ घृण विण घुणिङ्। ग्रहणे घुणङ घुणश घूर्णञ्श भ्रमणे चण। शब्दे चणसि गतौ हिंसे चणम दाने शि चुण छिदि।

८। क्षण दुञ वधे } (क्षण, तना, उ)

९। क्षिण दुञ वधे } (क्षिण, तना, उ) द, ञ—क्षणोति क्षणुते। क्षिणोति क्षिणुते। उ—क्षणित्वा क्षत्वा। क्षेणित्वा क्षित्वा।

१०। घण दुञ दीप्तौ } (घण, तना, उ)

११। घृण दुञ दीप्तौ } (घृण, तना, उ) द, ञ—घणोति

घर्णुते। घृणोति घर्णोति, घृणुते घर्णुते ( नोप्युङोगुणर्वोत्वृत इत्यनेन वैकल्पिकगुणनिषेधः )। उ—घणित्वा घत्वा। घर्णित्वा घृत्वा।

११। घृणिङ ग्रहणे ( घृण, भ्वा, आ )
१२। घिणिङ ग्रहणे ( घिण, भ्वा, आ )
१३। घुणिङ ग्रहणे ( घुण, भ्वा, आ ) त्रयः क्रमात् सप्तमतृतीयपञ्चमस्वरिणः। इ—घृण्यते, घिण्यते, घुण्यते। ङ—घृणते, घिणते, घुणते। जरीघृण्यते, जेघिण्यते, जोघुण्यते।

१३। घुणङ भ्रमणे ( घुण, भ्वा, आ )
१३। घुणश भ्रमणे ( घुण, तुदा, प )
१४। घूर्णञ श भ्रमणे ( घूर्ण, तुदा, उ ) ङ—घोणते। श—घुणति, घोणिता। ञ—घूर्णति घूर्णते। जुघूर्ण चक्रम्। श—घूर्णन्ती घूर्णती। अत्र भ्रान्तेर्मध्यमः कुटादौ पठ्यते, तद्वैयमन्येषामसम्मतत्वात्; तथात्वे परस्थितानुबन्धस्य पूर्व्वेण सम्बन्धापत्तेश्च। (१)

१५। चण शब्दे ( चण, भ्वा, प ) चणति।

१५। चणमि गतौ हिंसे ( चण, भ्वा, प ) मि—चणयति चाणयति। ( २ )

---

(१) यद्ययं मध्यमो धातुः कुटादिः स्यात्तदा घुणघि इत्येवं पाठ्य। तथा सति णकारानुबन्धस्याम्रेडितत्वाभावात् परवर्त्तिनो घूर्णधातो ञोनुबन्धस्य मध्यमेन घुणधातुनापि सह सम्बन्धो दुर्निवार एव स्यात्। तदादिपाठे तु णकारानुबन्धस्य पुनरुक्तत्वान्न तथेति तात्पर्य्यम्।

(२) यद्यपि स्वमते सामान्यतोमिकारानुबन्धधातूनां वैकल्पिकह्रस्वविधायकं सूत्रं नास्ति, तथापि केषाञ्चिद्धातूनां विकल्पेन घटादित्वं भवतीति मतमङ्गीकृत्य तएव धातवो मिकारानुबन्धतया दर्शिता आचार्य्येण। ते च धातवः दकारान्तवर्गेषु चिक्षिमि च इत्यस्य व्याख्यानावसरे उद्धृत्य दर्शितपूर्व्वा मयेति।

१५। चणम दाने (चण, भ्वा, प) म—चणयति।

१६। ञि चुण् छिदि (चुण, तुदा, प) ञि—चुणति, अचुणीत्, चुचोण।

चूर्णक् प्रेपे चूण तूणक् सङ्कोचेक् तूण्ङ् पूरणे।

१७। चूर्णक् पेषे। (चूर्ण, चु, प) एतदाद्यास्त्रयः पञ्चस्वरिणः। पेषश्चूर्णीकरणम्। क—चूर्णयति तण्डुलान् शिला।

१८। चूणक् सङ्कोचे } (चूण, चु, प)
१९। तूणक् सङ्कोचे } (तूण, चु, प) द्वौ क्रमात्तालव्यदन्त्यवर्गाद्यादी। क—चूणयति, तूणयति चक्षुः, सङ्कुचितं स्यादित्यर्थः।

१९। क तूणङ पूरणे (तूण, चु, आ) क, ङ—तूणयते।

तृण् तुञ् भक्षे तुण् ञ जैह्म्ये दुण् ञ जैह्म्ये वधे गतौ।

२०। तृण् तुञ् भक्षे (तृण, तना, उ) द, ञ—तृणोति, तर्णोति, तृणुते, तर्णुते। उ—तर्णित्वा तृत्वा।

२१। तुण्ञ जैह्म्ये (तुण, तुदा, प) जैह्म्यमिह कुटिलीकरणम्। ञ—तुणति तृणं वायुः। तोणिता।

२२। दुण्ञ जैह्म्ये वधे गतौ (दुण, तुदा, प) दन्त्यवर्ग तृतीयादिः। ञ—दुणति। दुद्रोणिषति। जैह्म्यं कुटिलीकरणम्। (द्रुणति प्रकृतो यस्य दिक्षु खेषु रिपुव्रज इति हलायुधः। २४०। द्रुणति गच्छति पलायते इत्यर्थः)।

घण ध्वण भ्रण ध्वाने पणङ् व्यवहृतौ स्तुतौ।

२३। धण ध्वाने ) ( धण, भ्वा, प )
२४। ध्वण ध्वाने } ( ध्वण, भ्वा, प )
२५। ध्रण ध्वाने ) ( ध्रण, भ्वा, प ) शेषौ वकाररेफयुक्तौ क्रमात्। धणति, ध्वणति, ध्रणति मृदङ्गः।

२६। पणङ् व्यवहृतौ स्तुतौ ( पण, भ्वा, घा ) व्यवहारे, ङ—पणते पणायति पणायते। आयान्तत्वादुभयपदमिति वोपदेवः। प्राणानामपणिष्टासाविति भट्टिः। ८। १२१। अत्र कर्मणि षष्ठी (पणेर्व्यवहारे इति षष्ठ्यर्थं परसूत्रम्। तत्र व्यवहारे क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति तट्टीकायां भरतः) स्तुतौ तु पणायति पणायते विधत्तुं धीरः। अरे तु द्वयोरर्थयोरेव आयस्याप्राप्तिपक्षे आत्मनेपदमेव। अपणिष्ट, पेणे, पणिता, पणिषीष्ट पणिष्यते, अपणिष्यत। (न चोपलेभे वणिजां पणाया इति भट्टिः। ३। २७)।

## पेणृ पेषे गतौ क्षेपे पुणश् धर्म्मे श्रणश् त्वपि।

२७। पेणृ पेषे गतौ क्षेपे ( पेण, भ्वा, प ) ऋ—अपिपेणत्। पिपेणतुः। पेषचूर्णीकरणम्।

२८। पुणश् धर्म्मे ( पुण, तुदा, प ) शुभक्रियायामित्यन्ये। श—पुणति शुभं लोकः। पोणिता। (१)।

२९। श्रण श् त्वपि ( श्रण, तुदा, प ) त्वपि त्वग्नीकरणे। श—वह्निं श्रणति यो द्विजः। श्रणिता।

## मूणक् सङ्घाते फण ण निस्नेहे फण् मिण गतौ।

---

(१) धर्म्मोऽत्र धार्म्मिकोभाव इति केचित्। तन्मते पुणति इह इत्युदाहरणम्। शुभक्रियायामर्थे धात्वर्थेनोपसंग्रहादकर्म्मकत्वात् पुणति शुभं लोक इति सकर्म्मकोदाहरणं कथं सङ्गच्छते तत् सुधीभिर्भाव्यम्।

३०। पूणक् सङ्घाते (पूण, चु, प) पठस्वरी। क—पूणयति धान्यं लोकः, राशीकरोतीत्यर्थः। अयं केचिन्न मन्यते।

३१। फण गा निस्नेहे (फण, भ्वा, प) गा—फेणतुः पफणतुः। निस्नेहोऽनायासेनोत्पत्तिः। फणति वाञ्छितं श्रीमताम्, अनायासेनोत्पद्यते इत्यर्थः। अस्यैव अन्तस्य निष्ठाया फाण्टं। अनायासकृतं फाण्टमित्यमरः।

३१। फण मिण गतौ (फण, भ्वा, प) मि—फणयति फाणयति। गा—फेणतुः पफणतुः।

## व्रण् वण् भ्रण् शब्दे र्ऋ भण् च भ्रूण् कङ् आशाविशङ्कयोः।

३२। व्रण शब्दे (व्रण, भ्वा, प)

३३। वण शब्दे (वण, भ्वा, प)

३४। भ्रण शब्दे (भ्रण, भ्वा, प) आद्यन्तौ रेफयुक्तौ। व्रणति, वणति, भ्रणति।

३५। र्ऋ भण च (भण, भ्वा, प) र्ऋ—अबीभणत् अबभाणत्। चकारात् शब्दे। स चेह व्यक्तवाक्यम्। श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम्।

३६। भ्रूण् कङ् आशाविशङ्कयोः (भ्रूण, चु, आ) रेफयुक्तः पठस्वरी। क, ङ—भ्रूणयते भर्तृं लोकः, प्रत्याशाविषयं करोतीत्यर्थः। (भ्रूणः, भ्रूण आशंसाया चुरादेर्वञ् इत्यमरटीका) (भ्रूणयते स्त्री वा पुमान् वेत्याशङ्कतेऽऽशास्ते इत्यर्थो वा)।

## मण् कूजे घ्र् सुण् प्रतिघाने स्तणश् हिंसे रणम् गतौ।

३७। मण कूजे (मण, भ्वा, प) मणति। कूजे अव्यक्तशब्दे।

३८। श मुण्—प्रतिज्ञाने (मुण, तुदा, प) श—मुणति व्रतं लोकः, प्रतिजानीते इत्यर्थः। मोणिता।

३९। म्रणम् हिंसे (म्रण, तुदा, प) पवर्गशेषादिः। श—म्रणति। मर्णिता। युद्धे—म्रणति वारणानिति हलायुधः। (१०५)।

४०। रणम् गतौ (रण, भ्वा, प) म—रणयति

रण् व्रण् कृत्यृ वण् च हृण् डुञ् भक्ते वेणृञ् निशामने
वादित्रादान-गमन-ज्ञान-चिन्तासु वर्णक।
वर्णे श्रोणृ गतेऽस्मिन् श्रण् श्यण्म दाने श्यणक् तथा।

४०। रण् इति } (रण, भ्वा, प)
४१। व्रण् इति } (व्रण, भ्वा, प) पूर्व्वो रेफादिः शेषो रेफयुक्तवकारादिः। रणति। व्रणति। इति शब्दे।

४२। कृ वण् च (वण, भ्वा, प) कृ—अवीवणात् अववाणात्। चकारात् इति।

४३। हृण् डुञ् भक्ते (हृण, तना, उ) द, ञ—हृणोति वर्णोति हृणुते वर्णुते। उ—वर्णित्वा हृत्वा।

४४। वेणृञ् निशामने वादित्रादानगमनज्ञानचिन्तासु (वेण, भ्वा, उ) ऋ—अविवेणात्। ञ—वेणति वेणते। विवेणे। निशामनं चाक्षुषज्ञानम्। वादित्रं मुरजादि, तस्यादानं ग्रहणं वादित्रादानम्। केचित्तु वादित्रं वादित्रविषया क्रिया इत्येकोऽर्थ इत्याहुः। (१)।

---

(१) आदानमित्यपरोऽर्थः। तथाच वेणवः कीचकास्ते स्युरित्यस्य टीकायां "वेणति गृह्णाति शोभादिकं, वेणञ् निशामने वादित्रादान-गमन-ज्ञान-चिन्तासु च, नाम्नीति उरिति भरत"।

४५। वर्णक वर्णे ( वर्ण, चु, प ) वर्णयति। अयं कैश्चिन्न मन्यते ( वर्णात्क इत्यदन्तचुरादिनैव सिद्धेः )।

४६। शोणृ गतेऽस्मिन् ( शोण, भ्वा, प ) चङ—अशुशोणत्। अस्मिन् वर्णे। वर्णोऽत्र रक्तवर्णीभावः। शोणति सूर्य्यः सन्ध्यायाम्।

४७। श्रणम दाने } ( श्रण, भ्वा, प )

४८। अणम दाने } ( अण, भ्वा, प ) शेषो रेफयुक्तः। म—श्रणयति, अणयति। ( विश्रणन्ति च तेऽस्मै सत्यवाचः सदाग्निप इति हलायुधः। १७० )।

४८। अणक् तथा ( अण, चु, प ) रेफयुक्तः। क—आणयति। तथा दाने। स्पमतेऽस्य आङि ह्रस्वविकल्पोऽप्यदन्तस्वरातुबन्धाभावः केषाञ्चिदनुरोधात्। ( विश्राणयति यः श्रीमान् विप्रेभ्यो विपुलंवसिति हलायुधः। १७० )।

श्रोण स्रोणृतु सङ्घाते णान्ताः पञ्चाशदीरिताः।

४९। श्रोणृ सङ्घाते } ( श्रोण, भ्वा, प )

५०। स्रोणृ सङ्घाते } ( स्रोण, भ्वा, प ) द्वौ तालव्यादी, क्रमाद्रेफान्तःस्थतृतीययुक्तौ च। चङ—अशुश्रोणत् असुस्रोणत्। सङ्घातो राशीकरणम्। (१)।

णान्ताः पञ्चाशदीरिताः।

( पञ्चाशत्संख्यका णकारान्ता धातवः कथिताः )।

---

(१) अमरोक्तपङ्गुवाचकश्रोणशब्दस्य टीकायां "श्रोणति जङ्घयो' संहतो भवति श्रोणः, श्रोणृ सङ्घाते पचादित्वादचि"ति भरतः।

## तान्तवर्गः ।

अत् सातत्यगतेऽतीति वन्धे ऋत् स्पर्द्धनैश्वर्ययोः ।
घृणागत्योः कृतीध् वेष्टे कृती शप च्छिदि कृतक् ।
संशब्दे कित् संशयेच्छावासारोग्ये लि कित् मतौ ।

१। अत् सातत्यगते (अत, भ्वा, प) सातत्यगतं नैरन्तर्येण भ्रमणं प्रापणञ्च । अतति वायुः । अतति सूर्यो गगनं, सततं प्राप्नोतीत्यर्थः ।

१। अति वन्धे } (अन्त, भ्वा, प)
२। इति वन्धे } (इन्त, भ्वा, प) शेषो दीर्घादिः । इ— अन्त्यते । इन्त्यते ।

३। ऋत् स्पर्द्धनैश्वर्ययोः घृणागत्योः (ऋत, भ्वा, प) घृणा दया। ऋतीयते जनः, स्पर्द्धते, ईश्वरो भवति, कश्चिद्दयते, गच्छति वेत्यर्थः। अरे तु ईयङोऽप्राप्तिपक्षे परस्मैपदमेव। आर्त्तीत् आनर्त्त इत्यादि ।

४। कृतीध् वेष्टे (कृत, रुधा, प) ई—कृत्तः। ध—कृणत्ति। चकर्त्त ।

४। कृती श प च्छिदि (कृत, तुदा, प) ई—कृत्तः। श, प—कृन्तति। चकर्त्त। कृतकृत्चृदित्यादिना येमत्वादेव निष्ठाया अनिमत्वे सिद्धे अस्य पूर्व्वस्य च ईदनुबन्धो नेम् ङोश्शीत्यस्य व्यभिचारसूचनार्थः। तेन धातुज नये श्मीत्यादीनां "धाविताः पान्यमार्गा" इत्यादि सिद्धमिति रमानाथः। मनितं यतितमित्यादि सिद्धमिति क्रमदीश्वरः। केचित्तु धावनं धावः सोऽस्य जातो

धार्वित इत्यादि समाधाय ईदित्करणमाभ्यां यङ्लुकि निष्ठाया इण्निषेधार्थं, तेन चरीकृत्तमित्याहुः । विरचितनिकृन्तनकुन्तसुधा-कृतिकेतकिदन्तुरिताशे इति जयदेवोक्तं निकृन्तनं करोतीति णन्तात् णौ नन्द्यादित्वादनप्रत्यये साध्यम् । ( यं कृणत्ति गुणा-ग्रामः कृन्तत्यरिश्रियोऽसि य इत्युभयत्र हलायुधः । १२२ ) ।

५ । कृतक संशब्दे ( कृत, चु, प ) दीर्घी । क—कीर्त्तयन्ति च गोष्ठीषु यद्गुणानमरोगणा इति हलायुध । १२३ । कीर्त्ता-देशस्य नित्यत्वेऽपि कृतपाठः कीर्त्तादेशस्य क्वचित् व्यभिचार-सूचनार्थं, तेन अचीकृतदित्यादि सिद्धम् । ( अचिकीर्त्तदित्यपि, तेन "अपप्रथद्‌गुणान् भ्रातुरचिकीर्त्तच्च विक्रममिति भट्टि. । १५ । ७२ ) ।

६ । कित् संशयेच्छावासारोग्ये ( कित्, भ्वा, प ) विचिकित्-सति मन', संशेते इत्यर्थः । आरोग्ये—चिकित्सत्यातुरं वैद्यः । इच्छानिवासयोस्तु केततीति वोपदेव. । तत्र तिबादयो न प्रयु-ज्यन्ते इति रमानाथः । " इति न वनिता भेता हन्तुं मनो विचिकित्सते" इति तु अन्तर्भूतणार्थतया कर्मकर्त्तरि सन-न्यन्यग्रन्थेत्यादिना यको निषेधे सिद्धम् ।

६ । लिकित् मतौ ( कित्, ह्वा, प ) र—वैदिकः । ह्वि—चिकेत्ति ।

## चतेञ् याचे चिती ज्ञाने चितकङ् च चितिक् स्मृतौ ।

७ । चतेञ् याचे ( चत, भ्वा, उ ) ए—अचतीत् । अ—चतति चतते ।

८ । चिती ज्ञाने ( चित, भ्वा, प ) ई—चित्तः । ज्ञानमिह

जागरणं ज्ञानञ्च। अविद्यानिद्रयाक्रान्ते जगत्येकः स चेततीति हलायुधः। १२६। चिचेत रामस्तत्कृच्छ्रमिति भट्टिः। १४। ६२। (कृच्छ्र नागपाशबन्धनरूपं, चिचेत ज्ञातवान्)।

८। चितक ङ् च (चित, चु, आ) क, ङ—चेतयते। चकारात् ध्याने। नवोपयायिका यावद्रामस्यचेतयन्ति नेति भट्टौ (८। १२३) गणकृतानित्यत्वादात्मनेपदम्। चेतनं चेतसं करोतीति णौ वा साध्यम्। (कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयमिति कादम्बर्या उत्तरखण्डप्रारम्भे ग्रन्थकृदुक्तिः)।

८। चितिक् स्मृतौ (चिन्त, भ्वा, प) इ, क—चिन्तयति विष्णुं सुधीः।

चृत् कि सन्दीपने चृत् श हिंसे ग्रन्थे चुत च्युतिर्।
क्षरणे जुत् ज्युटङ् द्युत्यां ज्यतिश्चापि द्युत् ऌ ङ् ङपि।

९। चृत् कि सन्दीपने (चृत, चु, भ्वा, प) कि—चर्त्तयति, चर्त्तति।

९। चृत् श हिंसे ग्रन्थे (चृत्, तुदा, प) श—चृतति। चर्त्तिता। ग्रन्थो ग्रन्थनम्।

१०। चुतिर् क्षरणे } (चुत, भ्वा, प)
११। च्युतिर् क्षरणे } (च्युत, भ्वा, प) इरितोऽङ्वाच्यादि-सूत्रे। इर्—अचुतत् अचोतीत्। अच्युतत् अच्योतीत्। धर ६४ धातुविकल्पम्। चोतति च्योतति इत्यनयोर्द्रवा।

१२। जुतङ् द्युत्याम् } (जुत, भ्वा, आ)
१३। ज्युतङ् द्युत्याम् } (ज्युत, भ्वा, आ) ङित्वादात्मने-

न्ताःस्यादि युक्ताः । ऌ—अजजोतत् अजुज्योतत् । ङ—जोतते ज्योतते चन्द्रः ।

१३ । ज्युतिर्च ( ज्युत, भ्वा, प ) इर्—अज्युतत् अज्योतीत् । चकारात् द्युत्याम् ।

१४ । अथ द्युत् ऌ ङ्डपि ( द्युत, भ्वा, आ ) ऌ—अद्युतत् । ङ—द्योतते । दिद्युते । अपि शब्दात् द्युत्याम् ।

नृतय नर्त्ते पतय ऊैश्ये पत्लृज गत्याञ्च पुस्तक ।
बन्धे बुस्तक च नादृत्यादृत्योर्मुस्त क संहतौ ।

१५ । नृतय नर्त्ते ( नृत, दिवा, प ) य—नृत्यति नर्त्तकः ।

१६ । पतय ऊैश्ये ( पत, दिवा, आ ) य, ङ—पत्यते । ऐश्वर्यमीश्वरीभावः ।

१६ । पत् लृज गत्याञ्च ( पत, भ्वा, प ) लृ—अपतत् । ज—पातः पतः ( दुनीभूज्वलाद्येति विभाषया णप्रत्ययः । ) गतिरिह पतनम् । पतति पत्रं वृक्षात् । चकारादैश्ये च ।

१७ । पुस्तक बन्धे ( पुस्त, चु, प ) एतदाद्यास्त्रयः पञ्चमस्वरिणो दन्त्यसोपधाः । क—पुस्तयति ।

१८ । बुस्तक च नादृत्यादृत्योः ( बुस्त, चु, प ) नादृतिरनादरः । क—बुस्तयति खल लोकः । बुस्तयति धीरं सुधीः । चकारात् पुस्तक च ( नादृत्यादृत्यर्थकः ) ।

१९ । मुस्त क संहतौ ( मुस्त, चु, प ) मवर्गयेयादिः । क—मुस्तयति ।

यत् क खेदोपस्कारयोर्निरः प्रत्यर्पणे यतीङ् ।
यते युटङ दीप्तौ इत् कच इत् ङुवृल्ह वर्त्तने ।

२०। यत्न खेदोपस्करयोः (यत, चु, प) खेद इह ताडनम्। क—यातयति पुत्रं पिता, ताडयतीत्यर्थः। यातयति गृहं गृहिणी, उपस्करोतीत्यर्थः।

निरः प्रत्यर्पणे।

(निरुपसर्गात् यातिधातुः प्रत्यर्पणेऽर्थे प्रयुज्यते इत्यर्थः)। प्रत्यर्पणं परिवर्त्तः। निर्यातयति धान्येन माषं लोकः, धान्यं गृहीत्वा माषं ददातीत्यर्थः।

२०। यतीङ यत्ने (यत, भ्वा, आ) ई—यत्तः। ङ—यतते पठितुं शिष्यः।

२१। द्युतङ दीप्तौ (द्युत, भ्वा, आ) ऋ—अद्युतत्। ङ—द्योतते।

२२। वृतक च (वृत, चु, प) क—वर्त्तयति। चकारात् दीप्तौ।

२२। वृत ङुवल्ल वर्त्तने (वृत, भ्वा, आ) ङ—वर्त्तते। उ—वर्त्तित्वा वृत्त्वा। व—वर्त्स्यति, विवृत्सति। (वृद्भ्योऽनेम् पे स्यसनोर्वात्मने इत्युक्तेः। मे—वर्त्तिष्यते। मादन्यत्र विवर्त्तिषा विवृत्सा)। ऌ—अवृतत्।

## वृत् वावृत्युङ सम्भक्तौ वरणे वस्तकङ् वधे।

२२। वृत् युङ सम्भक्तौ } (वृत्, दिवा, आ)
२३। वावृत् युङ सम्भक्तौ } (वावृत्, दिवा, आ) य, ङ—वृत्यते, वावृत्यते। उ—वर्त्तित्वा वृत्त्वा, वावर्त्तित्वा वावृत्त्वा। सम्भक्तिः सेवनम्।

२४। वस्त कङ् वधे (वस्त, चु, आ) दन्त्यसोपधः। क, ङ—वस्तयते। गतिहिंसायाचनेष्विति केचित्।

ऌश्विताङ् शौक्ल्ये श्च्युतश्च्युतिर् स्यात् क्षरे श्मस्तपस्तिलुर्।
स्वप्ने प्वर्त्तस्वर्त्तक् गत्यां तङ्क् तान्त्रिंशदेकतः ।

२५। ऌश्विताङ् शौक्ल्ये (श्वित, भ्वा, आ) वकारयुक्तः। ऌ—अश्वितत्। आ—श्वितितं श्वित्तं तेन, प्रश्वितितः प्रश्वित्तः सः। ङ—श्वेतते प्रासादः। (अजस्रमंशुभिः यत्रूश्लोणा धौतमिधाधिकं। यद्ययः श्वेतते दिव इति हलायुध'। २३६)।

२६। च्युतिर् स्यात् क्षरे } (च्युत, भ्वा, प)

२७। श्च्युतिर् स्यात् क्षरे } (श्च्युत, भ्वा, प) द्वौ तालव्यवर्गाद्ययुक्ततालव्यादी, शेषोऽन्तःस्थादियुक्तश्च। नकारजावनुस्वारपञ्चमावित्यादिनियमेऽप्यनयोस्तालव्यादित्वं, तद्वचनस्य व्यभिचारसूचनार्थम्। तेन चुलुम्पलोपे इत्यादीनामोष्ठ्यवर्गशेषोपधत्वं सङ्गच्छते। तेन क्विपि संयोगान्तलोपे चुलुम् इत्यादि सिद्धम्। किन्तु द्वौ दन्त्यादी इति धातुप्रदीपकमदीश्वरौ। तन्मते घृतं श्च्योततीति घृतश्च्युत्, तमाचष्टे इति णौ ओमंश्चेति डित्त्वाट्टिलोपे हसाल्लोप इति यलोपे घृतश्चयतीति पुनः क्विपि णेर्लोपे घृतस्क् इति स्थिते संयोगादेः सस्य लोपे घृतक् इति। (१)। इर—अश्चुतत् अश्चोतीत्, अश्च्युतत् अश्च्योतीत्। धार इङ् आसेचनं चरणाश्च। रक्तमश्च्योतिषुः क्षुण्णा इति भट्टिः। १५। ५१। (कपयः क्षुण्णाः खण्डिताः सन्तो रक्तं क्षरन्ति स्म इत्यर्थः)। इद कवचमश्च्योतीदिति। निश्च्योतन्ते सुतनु कबरीबिन्दवो यावदेते इति मालत्यां गणकृतानित्यत्वात्।

---

(१) स्वमतेऽपि सान्तसारादिति चस्य लुपि सन्निपातकृतात् सन्निलुप्येव न सन्निरिति नियमात् झष्भषोरित्यनेन घस्य ककारे सत्यतो विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायादाद्यविधिनिषेधस्य बाधे घृडिति जस्य गकारे झष्भषोरित्यनेन पुनर्गकारस्य ककारादित्यधिक पाठ ।

२८। शसि लुर स्तम्भे ) शनुस्त, अदा, प )
२९। षसि लुर स्तम्भे } ( षनुस्त, अदा, प ) द्वौ क्रमात्तालव्यमूर्द्धन्यादी, इत्संज्ञोपधौ च। इ—शंस्यते, संस्यते। नसभ्यपाठेऽपि नस्योपान्त्यत्वाभावादेव लोपासम्भवे इदनुबन्धो वेदेपूच्चारणभेदार्थः। लु—शंसि संसि। र—वैदिकः।
३०। ष्वर्क्क गत्या तर्क्के } ( ष्वर्त्त, चु, प )
३१। स्वर्क्क गत्यां तर्क्के } ( स्वर्त्त, चु, प ) द्वौ क्रमात् षकारयुक्तमूर्द्धन्यदन्त्यादी। तर्क्को दुःखेन जीवनम्। क—स्वर्त्तयति जनो, गच्छति, दुःखेन जीवति वेत्यर्थः। सिष्वर्त्तयिषति, सिस्वर्त्तयिषति। (१)।

तास्त्रिंशदेकतः।

एकत एकेन सहेत्यर्थः।

( तान्तकारान्ता धातव एकत्रिंशत्संख्यका इत्यर्थः )।

---

थान्तवर्गः।

क्वथेञ् निष्पचने क्नथ्क प्रतिहर्षेऽथ कि क्नथ।
क्रथ लाथ क्रथ्म वधे क्नथि क्लेशे च कुथ्य त।
पूतित्वे काथ्ङ स्राथे कुन्थ क्रुन्थग् श्लिषि क्लिशि।

१। क्वथेञ् निष्पचने ( क्वथ, ष्वा, प ) वकारयुक्तः। ए—अक्वथीत्। ञ—क्वाथः क्वथः। क्वथयति वैद्य औषधं, निष्पचतीत्यर्थः।

---

(१) ष्वर्त्त स्वर्त्तेति षोपदेशाषोपदेशधातुद्वयपाठात् प्रथमस्य कृतसकारतया जिस्तो षेरिति नियमात् किलादित्यनेन षत्व मन्यस्य तु नेति बोध्यम्।

२। कथक प्रतिहर्षे (कथ, चु, प) रेफयुक्तः। प्रतिहर्षः पुनः पुनः हृष्टीकरणम्। क—काथयति श्रियं लोकः, पुनः पुनः हर्षयतीत्यर्थः।

२। श्रथ क्नि कथ वधे (श्नथ, चु, भ्वा, प)
२। क्नथम वधे (क्नथ, भ्वा, प)
३। क्लथम वधे (क्लथ, भ्वा, प)
४। क्रथम वधे (क्रथ, भ्वा, प) द्वावाद्यौ रेफयुक्तौ। पुनः पाठात् पूर्व्वौ न मित्। शेषौ क्रमादन्तःस्थतृतीयदन्त्यवर्गशेषयुक्तौ। क्नि—काथयति क्नथयति। म—क्नथयति, क्लथयति, क्रथयति।

५। कुथि क्लेशे च (कुन्थ, भ्वा, प) पञ्चमस्वरी। इ—कुन्थते। क्लेशो दुःखानुभवः। शीतार्त्तश्च न कुन्थतीति हलायुधः। १२४। (यस्य राष्ट्रे जन इति शेषः)। चकारात् वधे।

५। कुथय तु पूतित्वे (कुथ, दिवा, प) पूतित्वं दुर्गन्धीभावः। य—कुथ्यति मीनो दुर्गन्धःस्यादित्यर्थः। चुकोथ। (यस्य राष्ट्रे धनाढ्यो वा स्वतः कोऽपि न कुथ्यतीति हलायुधः। १२४। न कुथ्यति न पूतिगन्धमावहतीत्यर्थः)।

६। कत्थङ श्लाघे (कत्थ, भ्वा, आ) दन्त्यवर्गाद्योपधः। श्लाघः प्रशंसा। ङ—कत्थते गुणिगणं गुणी।

७। कुन्थग् क्लिषि क्लिशि (कुन्थ, क्रा, प)
८। कुन्थग् क्लिषि क्लिशि (कुन्थ, क्रा, प) द्वौ पञ्चमस्वरिणौ, शेषो रेफयुक्तः। क्लिशि दुःखानुभवे। ग—कुथ्नाति न बुभुक्षार्त्त इति हलायुधः। १२४। कुथ्नाति।

ग्रथिङ् जैह्म्ये ग् कि ग्रन्थ् दर्भे णाथ नाथृङ्ङ् द्वाशिषोः।
ऐश्वर्यने पुथ्य हिंसे पुथि क्वन्ये पुथक् त्विषि ।

९। ग्रथिङ् जैह्म्ये ( ग्रन्थ, भ्वा, आ ) रेफयुक्तः। जैह्म्यमिह कुटिलीभावः कुटिलीकरणञ्च । ङ्—ग्रन्थते । ङ—ग्रन्थते काष्ठं, कुटिलं स्यादित्यर्थः । ग्रन्थते लता वायुः, कुटिलीकरोतीत्यर्थः ।

१०। गकि ग्रन्थ दर्भे (ग्रन्थ, क्र्या, चु, भ्वा, प) रेफयुक्तः। दर्भो ग्रन्थनम् । ग—ग्रथ्नाति मालां मालिकः । कि—ग्रन्थयति ग्रन्थति । ग्रन्थिसुदृग्ग्रथयितुं हृदयेशे इति (१०।६३) माघप्रयोगश्चिन्त्यः। (१)

११। णाथृङ् द्वाशिषोरैश्वर्यने } ( णाथ, भ्वा, आ )
१२। नाथृङ् द्वाशिषोरैश्वर्यने } ( नाथ, भ्वा, आ )

वोपदेवविधौ वर्जनेऽप्याद्यस्य पाठः केषाञ्चिदनुरोधात् । शेषो दन्त्यादिः । ऋ—अननाथत् । ङ—प्रणाथते, प्रनाथते । द्व उपताप, आशीरिष्टार्थाशंसनम् । ङित्त्वेऽप्यस्य आपथाशीर्गत्यनुकारे इति नियमादाशिषोऽन्यत्र परस्मैपदम्, नाथति शत्रुं बली उपतापयतीत्यर्थः । नाथते श्रियं लोका आशंसते इत्यर्थः। नाथति धनी ईश्वरः स्यादित्यर्थः । नाथति भूमिं नृपं विप्रः, याचते इत्यर्थः । मार्गयोरस्य तव प्रयोजनं नाथसे किमु न मूश्नतः पति

(१) कातन्त्रधातुवृत्तौ रमानाथेन श्रथ बन्धने चेति गणव्याख्यानावसरे मोदाहरणं श्रथधातु व्याख्याय 'तालव्यथकारादिरयमिति वोपदेव । अनर्घ-राघवे—यन्मात्यश्रथनाश्रयैषविकलैरिति । सुभूतिर्धातुप्रदीपे चोक्तोल्य निरवोधत श्रथितमिति दर्शनात् कवर्गतृतीयादिश्चाय' मित्युक्तं । एतेन श्रथ बन्धने चेतिवत् श्रथ बन्धने चेत्यपि भवतीति फलितार्थ । अन्यत्रापि श्रथि श्रकि कौटिल्ये इत्यनयोर्व्याख्याने "चन्द्रगोमिनात्र श्रथ श्रथि कौटिल्ये इति पठित्वा श्रथते श्रन्थते इत्युक्त' मित्याह रमानाथ ।

मिति भारवी ( १३। ५८ ) याचनमप्याग्रंमाविशेष:। चागिधि नित्यमात्मनेपदमन्यत्र विभाषयेति केचित्।

१३। पुथ्य् हिंसे ( पुथ, दिवा, प ) य—पुथ्यति। पुपोथ।

१३। पुथि कुन्थे (पुन्थ, भ्वा, प) पद्यमञ्जरी। इ—पुन्थते। अन्तःस्थमध्यमादिरयमित्येके। पुन्थति। कुन्थो वधक्लेशौ।

१३। पुथक् लिपि (पुथ, चु, प) क—पोथयति। लिपि दीप्तौ।

पथेन् गत्यां पथिक च प्रोथृञ् पर्य्यापणे पृथक्।
क्षेपे प्रथक् च प्रथमप् ङ च ख्यातौ मिथृञ् वधे।
मेधायां मेथृञ् सङ्गे च मन्थ क्लन्थे ग मन्थ च।
गाहिञ् मथे च मथ माध् लुथि कुन्थे व्यथषङ्।
दुःखे चाले भये वेथ विथृङ् याचे व्यथम् वधे।

१४। पथेञ् गत्याम् ( पथ, भ्वा, प ) ए—अपथीत्। अ—पाथः पथः।

१४। पथिक च ( पन्थ, चु, प ) इ, क—पन्थयति। पकाराक्रत्याम्। ( कुमारस्तं पन्थयतीति हलायुधः। २३० )।

१५। प्रोथृञ् पर्य्यापणे ( प्रोथ, भ्वा, उ ) रेफयुक्तः। ऋ—अपप्रोथत्। ञ—प्रोथति प्रोथते। पर्य्यापणं सामर्थ्यम्। पुप्रोथाश्वे न कशनेति भट्टिः। १४। ८४। पर्य्यापणं परिपूर्णतेति गोविन्दभट्टः।

१६। पृथक् क्षेपे ( पृथ, चु, प ) क—पर्थयति गुडभौषधे जनः।

१७। प्रथक् च ( प्रथ, चु, प ) रेफयुक्तः। क—प्राथयति। चकारात् क्षेपे।

१७। प्रथमपृ ङ च ख्यातौ (प्रथ, भ्वा, आ) रेफयुक्तः। म—प्रथयति। प—प्रथा। ङ—प्रथते गुणी, प्रसिद्धः स्यादित्यर्थः। चकारात् प्रथक् च।

१८। मिथृञ् वधे मेधायाम् ( मिथ, भ्वा, उ ) ऋ—अमिमेथत्। ञ—मेथति मेथते शास्त्रार्थं शिष्यः, धारयतीत्यर्थः। मिमिथतुः।

१९। मेथृञ् सङ्गे च ( मेथ, भ्वा, उ ) ञ—मेथति मेथते धीरो गुणिना, संगच्छते इत्यर्थः। ऋ—अमिमेथत्। मिमेथतुः। चकारात् वधमेधयोश्च।

२०। मन्थ कुन्थे( गाहे ) ( मन्थ, भ्वा, प ) कुन्थः क्लेशश्च मन्थते। मन्थति।

२०। ग मन्थ च गाहे ( मन्थ, क्र्या, प ) गाहो विलोड़नम्। ग—मथ्नाति दधि वल्लवी। ( सौमित्रिरमथ्नात्तुरोश्वानिति भट्टिः। १७। ४१। मथ्नामि कौरवशतं समरे न कोपादिति वेणी। इत्युभयत्र विनाशार्थः )। चकारात् मन्थ च ( भ्वादिगणीयमन्थधातुरपि गाहार्थकः )।

२१। ऊ मथे च ( मथ, भ्वा, प ) ऊ—माथः मथः। ए—अमथीत्। चकारात् गाहे। ( सम्मार्ग मकरध्वजेन मथनं स्वस्मो मदर्थं पुरेति रत्नावल्यां विनाशो गाहनेत्युभयार्थत्वम् )।

२१। मथि कुन्थे ( मन्थ, भ्वा, प )
२२। माथि कुन्थे ( मान्थ, भ्वा, प )
२३। लुथि कुन्थे ( लुन्थ, भ्वा, प ) मध्यमो द्वितीयस्तरो,

गोपः पशुमसरी। ङ—मन्यते, मान्यते, लुन्यते। कुन्यो वधक्लेषौ।

२४। व्यथष्ङ दुःखे चाले भये (व्यथ, भ्वा, आ) दुःखं दुःखानुभवः, चालः कम्पः। घ—व्यथा। म—व्यथयति। ङ—व्यथते लोकः, दुःखमनुभवति, कम्पते, बिभेति वेत्यर्थः। केचित्तु दुःखभयचालनयोरिति पठित्वा भयेन चालनं भयचालनमित्याहुः। दुःखभयचालने इति पठित्वा दुःखभययोश्चालनमुत्पादनमिति गोविन्दभट्टः।

२५। वेथृङ् याचे } (वेथ, भ्वा, आ)

२६। विथृङ् याचे } (विथ, भ्वा, आ) ऋ—अविवेथत्। ङ—वेथते, विवेथे, विविथे।

२७। श्रथम् वधे (श्रथ, भ्वा, आ) एतदाद्याः सर्व्वे थान्ता रेफयुक्ततालव्याद्याः। म—श्रथयति।

**श्रन्थ् कि दर्भे वधे श्रन्थग् मोचे प्रतिहृषि श्रथक्।**
**यत्ने प्रतिहृषि श्रथ् कि बन्धे मोचे वधे श्रथिङ्।**
**शैथिल्येऽमी थकारान्ता अष्टाविंशतिरीरिताः।**

२८। श्रन्थ कि दर्भे वधे (श्रन्थ, चु, भ्वा, प) कि—श्रन्थयति श्रन्थति। दर्भो ग्रन्थनम्।

२८। श्रन्थग् मोचे प्रतिहृषि (श्रन्थ, क्या, प) ग—श्रथ्नाति वत्सं गोपः, मुञ्चतीत्यर्थः। श्रथ्नाति विप्रं लोकः, पुनः पुनर्हर्षयतीत्यर्थः।

२७ क। श्रथक् यत्ने प्रतिहृषि (श्रथ, चु, प) क—श्राथयति

पठितुं शिष्यः, यतते इत्यर्थः। श्राथयति शिशुं लोकः, पुनः पुनर्हर्षयतीत्यर्थः।

२७ ख। श्रथ कि बन्धे मोक्षे वधे (श्रथ, चु, भ्वा, प) कि— श्राथयति श्रथति। श्लाघ्यं श्राथयति स्फुटार्थमधुरं गद्यञ्च पद्यं सदा। भावालङ्कृतिपेशलं श्रथयति स्पष्टाक्षरं नाटकं, श्रथ्नाति प्रथितावदातचरितः शास्त्रं विचित्रञ्च यः॥ इति हलायुधोक्तं श्रथयतीति श्रथत्क दौर्बल्ये इत्यदन्तस्य रूपम्। अनेकार्थत्वाद्वघ्नातीत्यर्थः। (१)

२७ ग। श्रथिङ् शैथिल्ये (श्रन्थ, भ्वा, श्रा) शैथिल्यमिह शिथिलीभावस्तत्करणञ्च। इ—श्रन्थते। ङ—श्रन्थते वस्त्रं, शिथिलं स्यादित्यर्थः। श्रन्थते वस्त्रं लोकः, शिथिलं करोतीत्यर्थः।

## श्रमी थकारान्ता श्रष्टाविंशतिरीरिताः। (२)।

सुगमम्।

---

(१) राज-श्रीशौरीन्द्रमोहन ठाकुर मुद्रित-कविरहस्ये श्रथधातूदाहरणं नास्ति। श्रथधातूदाहरणार्थेन योऽयं हलायुधश्लोको दुर्गादासेनोद्धृत एतेनैव श्लोकेन तत्र श्रथधातूदाहरणानि दर्शितानि। श्राथयति श्रथयति श्रथ्नातीत्यत्र तु क्रमेण श्राययति श्रथयति श्रथ्नातीति पदानि सन्ति।

(२) श्रथम् वधे इत्यस्मात् परं श्रन्थधातुव्यवधानेन पुनः श्रथधातुपाठादिह गणनैवं वैपरीत्यमागता। तन्मया श्रथम् वधे इत्यस्य २७ संख्ययैव श्रुतक्रमेण अपरेऽपि त्रयः श्रथधातवो निर्दिष्टाः। अष्टाविंशतिसंख्या तु क्रमानुरोधात् श्रन्थधातावेव पूर्वं दर्शिता। किञ्चात्र श्रथम् वधे इत्यनन्तरं—श्रथक् यत्ने प्रतिहर्षे श्रथकि बन्धनमोक्षयोः। वधे श्रथिङ् शैथिल्ये श्रन्थ कि हर्षधात्वोः। श्रन्थ मोक्षे प्रतिहर्षे च अष्टाविंशतिर्मताः। इत्येवं मूलपाठे नैतादृगाच्छन्नावैपरीत्यं भवतीत्यवधेयमस्माद्वचनेनेति।

## टान्तवर्गः ।

**अट्टलौ भच्चेऽदि बन्धेऽर्हं यातनागतियाचने ।**

१ । अट्टलौ भच्चे (अट, अदा, प) ल—अट्टि । औ—अत्ता । गणकृतमनित्यमिति न्यायात् अपःस्थितौ अटतीत्यपीति वररुचिः ।

१ । अदि बन्धे ( अन्द, भ्वा, प ) ट्ट—अन्द्यते । अन्दति ।

२ । अर्ह यातनागतियाचने ( अर्ह, भ्वा, प ) यातना ताड़नम् । अर्हति पिता पुत्रम् । अरहनं नार्हति चातकोऽपीति रघुः । १७ । न याचतीत्यर्थः ।

**अर्हन्ज् वधेऽर्हक् च दृदि परमैश्वर्य्ये उन्द धी ।**
**क्लेद उर्ह्ह्मिति क्रीड़ाखादे क्लादि तु रोदने ।**
**आह्वानेऽथ क्लाट पमङ् च वैक्लव्यविकलत्वयोः ।**

२ । अर्हन्ज् वधे ( अर्ह, भ्वा, उ ) ञ—अर्हति अर्हते । रघुः-मचखाणि चतुर्दर्शार्हीदिति । अयमात्मनेपदीत्यन्ये ।

२ । अर्हक् च ( अर्ह, चु, प ) क—अर्हयति । चकारात् वधे । अयमात्मनेपदीत्येके ।

३ । दृदि परमैश्वर्य्ये ( दृन्द, भ्वा, प ) ऋलादिः । ट्ट—दृन्द्यते । दृन्दति दृन्द्रः ।

४ । उन्द धी क्लेदे ( उन्द, रुधा, प ) ऋलादिः । क्लेद आर्द्रीभावः । ध—उनत्ति वस्त्रं पयसा । ई—उन्नः उत्तः ( क्षीप्रालोन्द-नुदविन्दोवेति विभाषया क्तस्य नः ) उन्दिदिपति ।

५ । उर्ह्ह्मिति क्रीड़ाखादे ( उर्ह, भ्वा, आ ) ऋसी, रेफ-

मध्यः । दीर्घस्य नित्यत्वात् ( व्यंनचतर्यीको धोर्घ इति नियमादिति भावः ) दीर्घादिरिति कश्चित् । मितिः परिमाणम् । ङ—अर्हते कनकं वणिक् ।

६ । क्रदि तु रोदने चाह्वाने ( क्रन्द, भ्वा, प ) ङ—क्रन्द्यते ।

६ । अथ क्रदघ्म ङ च वैक्लव्यविकलत्वयोः ( क्रद, भ्वा, आ ) वैक्लव्यं विह्वलीभावः । प—क्रदा । म—क्रदयति । ङ—क्रदते रोगार्त्तः । चकारात् क्रदि च ( एतद्द्व्यार्थकः )

विलौ लरौ ता, वाक्रन्दक् शब्दसातत्य ल्ट च्लिदा ।
ङ ञि मोचे स्नेह दृच्छिँद्र याचा ञि च्लिद् कूजने ।

विलौ लरौ तौ ।

तौ क्रदिक्रदघ्मङौ ( विलौ विगतो लो लकारो ययो स्तयोतौ ) अन्तःस्थतृतीयरचितौ च स्याताम् । ( तेन क्रन्द क्रद इतिवत् कन्द कद इत्यपि ) ।

७ । कदि तु रोदने चाह्वाने ( कन्द, भ्वा, प ) ङ—कन्द्यते ।

७ । अथ कद घ्म ङ च वैक्लव्यविकलत्वयोः ( कद, भ्वा, आ ) प—कदा । म—कदयति । ङ—कदते । चकारात् कदि च । ( एतदुभयार्थकः ) ।

. तौ द्वौ ( क्रदिक्रदघ्मङौ ) लरौ च स्याताम् । लस्थाने रेफो ययो स्तौ लरौ । ( तेन क्रन्द क्रद इतिवत् क्रन्द क्रद इत्यपि ) ।

८ । क्रदि तु रोदने चाह्वाने ( क्रन्द, भ्वा, प ) ङ—क्रन्द्यते । ततोऽक्रन्दीदृद्ग्रीवः । क्रन्दन्ति भर्त्तारमिवाभिपन्नम् ।

८ । अथ क्रद घ्मङ च वैक्लव्यविकलत्वयोः (क्रद, भ्वा, आ) प—क्रदा । म—क्रदयति । ङ—क्रदते । चकारात् क्रदि च ( एतदुभ-

यार्थकः)। एवं कदि क्रदि वैक्लव्ये इति मुद्रावात्मनेपदिनौ मानुबन्धौ दुर्गसिंहादिभिः पठ्येते। कन्दते, क्रन्दते, अकन्दि अकान्दि, अक्रन्दि अक्रान्दि। एतौ बहुवाद्यसम्मतत्वादनेनोपेक्षितौ।

६। आक्रन्दक् शब्दसातत्ये (आक्रन्द, चु, प) आ उपसर्गः। रेफयुक्तोऽयम्। क—आक्रन्दयति। शब्दसातत्यं निरन्तरशब्दक्रिया। (आक्रन्दयति यन्त्रम्)।

१०। ऌ ष्विदाङ् ञि मोचे स्नेहे (ष्विद, भ्वा, आ) एतदाद्यास्रयो वकारयुक्तधाद्याः। ऌ—अष्विदत्। आ—ष्वेदितं ष्विन्नं तेन, प्रष्वेदितः प्रष्विन्नः सः। ङ—ष्वेदते तिलस्नेहं, मुञ्चतीत्यर्थः। ञि—ष्विण्णोऽस्ति। स्नेहः स्निग्धीभावः।

१०। इर् ष्विदू या च् (ष्विद, दिवा, प) इर्—अष्विदत् अष्वेदीत्। अयान्नित्यं ङ इति दुर्गसिंहः। य—ष्विद्यति। आ—ष्वेदितं ष्विन्नं तेन, प्रष्विन्नः प्रष्वेदितः सः। चकारात् मोचे स्नेहे।

१०। आञि ष्विद कूजने (ष्विद, भ्वा, प) आ—ष्वेदितं ष्विन्नं तेन, प्रष्वेदितः प्रष्विन्नः सः। ञि—ष्विण्णोऽस्ति। मूर्द्धन्यवर्गतृतीयान्तोऽयमित्येके (ष्विड इत्यर्थः)

## क्लदृ क्लिदि ञ् ङ रुदि क्लिद्यूइर्लेदे ञ्यौ क्षुदिर्चुदि।

६क। क्लदि ञ ङ रुदि } (क्लन्द, भ्वा, उ)

११। क्लिदि ञ ङ रुदि } (क्लिन्द, भ्वा, उ) द्वावन्तःस्थतृतीययुक्तौ। इ—क्लन्द्यते, क्लिन्द्यते। ञ—क्लन्दति क्लन्दते, क्लिन्दति क्लिन्दते। ङ—क्लन्दते क्लिन्दते। (१) रुदि रोदने।

---

(१) ञिता सिद्धे ङितोः पाठोऽकर्त्रर्थक्रियाभिप्रायार्थ इति कामधेनुः। अफलवत्कर्त्तर्यपि आत्मनेपदार्थ इत्यर्थ।

१८। खुर्द्द ङ क्रीडायाम् } ( खुर्द्द, भ्वा, आ )

१९। खूर्द्द ङ क्रीडायाम् } ( खूर्द्द, भ्वा, आ ) द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ। दीर्घिण: पृथक्पाठात् पूर्व्वस्य व्यंनच्छतयीति न दीर्घ.। ङ—खुर्द्दते खूर्द्दते।

२०। खर्द्द दशने ( खर्द्द, भ्वा, प ) दशनं दन्तकरणकक्रिया। खर्द्दति मूलक लोक.। केचित्तु दन्दशूके इति पठित्वा दन्दशूको दन्दशूककर्तृकक्रियेत्याहुः।

२१। खिदङ् ध्यौ दैन्यके ( खिद, कधा, दिवा, आ ) दैन्यकसुपतप्तीभाव:। ङ, ध—खिन्नो तेष्वेव यैर्क्रूव्यं दीयमानं न गृह्यते इति हलायुधः। ६८। ङ, य—सस्खसिरभिलाप: खिद्यसे लोकहेतोरिति शाकुन्तले। औ—खेत्ता।

२१। श खिदौ प परिघाते ( खिद, तुदा, प ) श, प—खिन्दति दुष्ट राजा। औ—खेत्ता।

२२। गर्द्द कि तु रवे ( गर्द्द, चु, भ्वा, प ) कि—गर्द्दयति गर्द्दति। रव: शब्दः।

२३। गुर्द्दक् निकेतने ( गुर्द्द, चु, प ) दीर्घिणो वक्ष्यमाणत्वादस्य न दीर्घः। क—गुर्द्दयति। निकेतनं निवासः।

## गुर्द्दङ् च कूर्द्दौ, तौ दीर्घौ, गद्द भाषे गुदृङः खेलने।

२३। गुर्द्दङ् च कूर्द्द, ( गुर्द्द, भ्वा, आ ) दीर्घिणो वक्ष्यमाणत्वादस्यापि न दीर्घः। ङ—गुर्द्दते। कूर्द्द: क्रीडा। चकारात् गुर्द्दक् च ( क्रीडार्थकः )।

तौ दीर्घौ।

तौ गुर्द्दक्गुर्द्दङौ ( धातू ) दीर्घौ दीर्घवन्तौ।

२४। गूर्द्दक् निकेतने ( गूर्द्द, चु, प ) क—गूर्द्दयति।

२४। गूर्द्दङ् च कूर्द्दे ( गूर्द्द, भ्वा, आ ) ङ—गूर्द्दते। चकारात् गूर्द्दक् च ( कूर्द्दार्थकः )।

२५। गद्द भाषे ( गद, भ्वा, प ) गदति। भाषः कथनम्। सारङ्गं कतिचिन्न सञ्जगदिरे इति गणकृतानित्यत्वादात्मनेपदम्।

२६। गुदृङ खेलने ( गुद, भ्वा, आ ) ङ—गोदते।

**चदेञ् याचे चदि ह्लादे दीप्तौ चुद्दक नुदि छिदिर्। धौञ् छेदे छृद्द कि सन्दीपे छृदुञ् धिदेवने त्विषि।**

२७। चदेञ् याचे ( चद, भ्वा, उ ) ए—अचदीत्। ञ—चदति चदते।

२७। चदि ह्लादे दीप्तौ ( चन्द, भ्वा, प ) इ—चन्द्यते। ह्लादो हर्षः। (१)।

२८। चुदक् नुदि ( चुद, चु, प ) नुदि प्रेरणे। चोदयति वाणं वीरः।

२९। छिदिर् धौञ छेदे ( छिद, रुधा, उ ) छेदो द्विधाकरणम्। इर्—अच्छिदत् अच्छैत्सीत्। ञ, ञ—छिनत्ति छिन्ते दात्रेण लोकः। औ—छेत्ता।

३०। छृद्द कि सन्दीपे ( छृद्द, चु, भ्वा, प ) सन्दीपो दीप्तीकरणम्। कि—छर्द्दयति छर्द्दति दीपं लोकः।

३०। छृदुञ् धिदेवने त्विषि ( छृद्द, रुधा, ञ ) उ—छर्द्दित्वा

(१) कश्चिदिमं ह्लादनार्थकं मत्वा सकर्मकं, ह्लादार्थे चाकर्म्मकमाह। तत्र चन्द्र शब्दव्युत्पादनाय चन्दयतीति औणादिकोरक् इत्यमरटीकायां, यथा प्रह्लादना चन्द्र इति रघुश्लोकस्य व्याख्याने चन्दयत्याह्लादयतीत्यत्र च अेरनर्थकत्वापत्ते।

छृत्ता। अ, ध—छृणत्ति छृन्ते। द्र—अच्छृदत् अच्छर्दीत्। देवनं जिगीषेच्छाव्यवहारस्तुतिद्युतिकान्तिगतय इति केचित्। समते तु देव्ड देवने इत्यस्य निष्पादनाद्देवनं क्रीडनमेव। अन्यथा विपोग्रहणमनर्थकं स्यात्। विपि दीप्तौ।

छर्द्दक् च वमने छद्द किञ् संवृतौ स मितूर्ज्जने।

३१। छर्द्दक् च वमने (छर्द्द, चु, प) वमनं वान्तिः। क—छर्द्दयत्यन्नं लोकः। चकारात् छृदञधिर् च।

३२। छद्द किञ् संवृतौ (छद, चु, भ्वा, उ) कि, ञ—छादयति छादयते, छदति छदते दिवं मेघः, आच्छादयतीत्यर्थः।

स मितूर्ज्जने।

स 'छद किञ्' ऊर्ज्जने जीवनबलयोर्मित् स्यात् (मानुबन्धो भवेदित्यर्थः)। म—छदयति पुत्रं पिता, जीवयति बलवन्तं करोति वेत्यर्थः।

णर्द्द शब्दे णद्द क्लिष्टोक्तौ णट्क भासि ञौ णुद्‌ञ्।
प्रेरणे णेट् णिट्ञ् सन्निधौ णिदि च कुत्सने।

३३। णर्द्द शब्दे (णर्द्द, भ्वा, प) णोपदेशविधौ वर्ज्जनेऽप्यस्य इह पाठः केषाञ्चिदनुरोधात्। प्रणर्द्दति।

३४। णद क्लिष्टोक्तौ (णद, भ्वा, प) क्लिष्टोक्तिरस्पष्टशब्दः। नदति घण्टा।

३४। णट क भासि (णट, चु, प) क—नाटयति। भासि दीप्तौ।

३५। ञौ णुदञ् प्रेरणे (णुद, तुदा, उ) ञ, ञ—नुदति नुदते शरं योधः। ञौ—नोत्ता।

३६ । णेदृञ् सन्निधौ } ( णेद, भ्वा, उ )
३७ । णिदृञ् सन्निधौ } ( णिद, भ्वा, उ ) सन्निधिः सन्निकर्षः । ङ—अनिनेदत् । अ—नेदति नेदते दयालुं दीनः । (१) निनेदुः निनिदुः ।

३७ । णिदि च कुत्सने ( निन्द, भ्वा, प ) निसनिन्दनिक्षा णोपदेशफलं चिन्त्य, षत्वविकल्पने स्वरूपग्रहणात् । (२) केचित्तु क्षति विकल्पमिच्छन्ति, त्यादौ तूपसर्गादसमासे उपसर्गात् समासे नित्यमित्यर्थः । (३) यथा प्रणिन्दकः प्रनिन्दकः । (४) प्रणिन्दति । भट्टौ तु त्यादावपि विकल्पो दृश्यते । द्र—निन्द्यते । निन्दति दुष्टं लोकः । चकारात् णेदृणिदृञ् च ( कुत्सार्थकः ) ।

**तर्द् हिंसे ह्रदुञ् धिर्नोटरे च तुद औश् व्यथे ।**

३८ । तर्द् हिंसे ( तर्द, भ्वा, प ) तर्दति ।

---

(१) अत्र निकटसंयोगानुकूलव्यापारोऽर्थः । तत्र निकटसंयोगरूपधात्वर्थतावच्छेदकफलशालित्वाद्दयालोः कर्मत्वम् । दयालुसमीपं गच्छतीत्यर्थः ।

(२) षत्वविकल्पने विभाषया षत्वविधानहेतुरित्यर्थः । स्वरूपग्रहणात् सहपाठां निसनिन्दनिक्षां ग्रहणात् । निसनिन्दनिक्षान् नामतो निर्दिश्य तेषां विकल्पेन षत्वविधानादित्यर्थः ।

(३) अत्र त्याद्यन्तपदस्य उपसर्गयोगे समासाभावात् उपसर्गादसमासे उपसर्गेण सह धातोः समासाभाव इत्यर्थः । अत्र तु मतेन उपसर्गेण धातोः समासे यथा क्विबादिर्विधीयते तत्र उपसर्गात् समासे । तत्र त्याद्यन्तानां निसनिन्दनिक्षां प्रति षत्वविधौ उभयथापि नित्यत्वस्य प्राप्त्यभावात् तयोर्विकल्पेनेति केषाञ्चिदाशयः ।

(४) अत्रापि भट्टमोदाहरणे मतो निषणं प्रणिन्दापकम् इत्यत्र षत्वं न स्यात् । अतएव यदा धातुपूर्वं णादेशो भवदेव स्यात् अत्र तु णादेशस्य नहि प्रतीयुक्तम् ।

३८ । तृहुम् हिंसार्थे च ( तृद, रुधा, उ ) उ—तर्दित्वा तृत्त्वा । श, श्न—तृणत्ति तृन्ते । इर्—अतृदत् अतर्दीत् । चकाराद्धिंसे च ।

४० । तुद श्रौम् व्यथे ( तुद, तुदा, उ ) श, श्र—तुदति तुदते । श्रौ—तोत्ता । व्यथ इह आन्तस्य रूपम् । तुतोद गदया चारिमिति भट्टिः । १४ । ८१ । विधुन्तुदः ।

## नदि चेष्टे ददङ् दाने ष्टतौ टु नदि संहृषि ।

४१ । नदि चेष्टे ( नन्द, भ्वा, प ) तवर्गाद्यादिः । इ—नन्द्यते । ननन्द । तुदि चेति दामोदरः । (दामोदरमते तुन्दधातु-रपि ) तुन्दं जठरम् ।

४२ । ददङ् दाने ( दद, भ्वा, आ ) ङ—ददते ।

४३ । टु नदि संहृषि ( नन्द, भ्वा, प ) टु—नन्दथुः । इ—नन्द्यते । संहृषि आनन्दयुक्तभावे । ननन्द पारिप्लवनेत्रया नृप इति रघुः । ३ । ११ । नन्दते च कुलं पुंसामिति तु गणस्याता-नित्यत्वात् ।

## नर्द शब्दे पर्दङ् पानोत्सर्गे पद यङौ गतौ ।

४४ । नर्द शब्दे ( नर्द, भ्वा, प ) नर्दति ।

४५ । पर्दङ् अपानोत्सर्गे ( पर्द, भ्वा, आ ) ङ—पर्दते दद्रुः ।

४६ । पद यङौ गतौ ( पद, दिवा, आ ) य, ङ—पद्यते । औ—पत्ता ।

## पद बद स्थैर्ये बिदि रवंशे बुद बुन्दिरौ निशामने ।

४६ । पद स्थैर्ये } ( पद, भ्वा, प )
४७ । बद स्थैर्ये } ( बद, भ्वा, प ) पदति, बदति पर्वतः ।

अवादीत् अवदीत् । वसादेः सेम इत्यादिना वा वृद्धिः, व्रज-वदेत्यत्र वन्त्यादिवदोग्रहणात् ।

४८ । विदि तु अंशे (विन्द, भ्वा, प) इ—विन्द्यते । अंशे अवयवे । विन्दुरिति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्व-स्यान्यत्र प्रयोग इति धातुपारायणम् ।

४६ । बुदिर्ङु निशामने } (बुद, भ्वा, उ)

५० । बुन्दिर्ङु निशामने } (बुन्द, भ्वा, उ) द्वौ पञ्चम-स्वरियौ । इर्—अबुदत् अबोदीत्, अबुन्दत् अबुन्दीत् । ञ—बोदति बोदते, बुन्दति बुन्दते । उ—बोदित्वा बुत्त्वा, बुन्दित्वा बुत्त्वा । निशामनमालोचनम्, प्रणिधानमिति केचित् । सखंवे शरबन्धेन दिव्येनेति बुबुन्द स इति भट्टिः । १४ । ७२ । शेषसा-लव्यवर्गीयादिरित्येके । (चुन्द इत्यर्थः) ।

भदिक् शुभे भदिङ् मोदप्रीत्योश्च ञ् धौ भिदिर्भिदि ।

५१ । भदिक् शुभे (भन्द, चु, प) इ, क—भन्दयति । शुभं शुभक्रिया ।

५१ । भदिङ् मोदप्रीत्योश्च (भन्द, भ्वा, आ) मोदो हर्षः । प्रीतिः प्रीतीकरणम् । चकारात् शुभेच । इ—भन्द्यते । ङ—भन्दते पण्डितः सदा ।

५२ । ञ धौ भिदिर्भिदि (भिद, रुधा, उ) भित् किंयदवयव-विदारणम् । ञ, ध—भिनत्ति भिन्ते कूलं नदी । धौ—भेत्ता । इर्—अभिदत् अभैत्सीत् ।

मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गतौ ।

५३ । (मन्द, भ्वा, आ) इ—मन्द्यते । ङ—मन्दते जनः,

स्वपिति, जृम्भते, माद्यति, मोदते, भाति, गच्छति चेत्यर्थः ।

मदीभिर्यञि हर्षे स मिद्गर्वे ग्लेपने मदक् ।
ङ तृप्तियोगे म्रदमपङ चोदे मिदि मिदक् स्निहि ।

५२ । मदीभिर्यञि हर्षे ( मद, दिवा, प ) ई, ञि—मत्तो-ऽस्ति । भ, य—माद्यति । इर्—अमदत् अमादीत् अमदीत् । अमाव्रित्यं ङ इति दुर्गसिंहः ।

स मिद्गर्वे ग्लेपने ।

( स पूर्वोक्तो मदधातुर्गर्वे ग्लेपने चार्थे मित्, घटादिर्भवती-त्यर्थः) । गर्वोऽहङ्कारः, ग्लेपनं दैन्यम् । म—मदयति गर्वं शूरः ।

५३ । मदक् ङ तृप्तियोगे ( मद, चु, आ ) क, ङ—मनो मादयते यस्य शास्त्राभ्यासरसायनादिति हलायुधः । २३ ।

५४ । म्रद मपङ चोदे ( म्रद, भ्वा, आ ) रेफयुक्तः । चोद-चूर्णीकरणम् । म—म्रदयति । प—म्रदा । ङ—म्रदते काननं दन्ती ।

५५ । मिदिक् स्निहि } ( मिन्द, चु, प )
५५ । मिदक् स्निहि } ( मिद, चु, प ) स्निहि स्निग्धी-भावे । इ, क—मिन्दयति मेदयति वर्त्तिका तैलेन ।

इर्मिद्र या ल्ट मिदा ञिङ् च मिदृ मेदङ् वधमेधयोः ।

५५ । इर्मिद्र या च } ( मिद, दिवा, प )
५५ । ल्ट मिदा ञिङ् च } ( मिद, भ्वा, आ ) अत्र न परे-णाख मध्यम इति नियमेऽपि पूर्वस्य इरिद्विधानात् लकारः पर-स्यैव । पूर्वादपि नित्यं ङ इति दुर्गः । इर्—अमिदत् अमेदीत् ।

य—मेद्यति । श्रा—मेदितं भिन्नं तेन, प्रभिन्नः प्रमेदितः सः । इतिथ्यायामशीलोऽसौ महाकायो न मेद्यतीति हलायुधः । १३६ । (न मेद्यति न स्वेदजलार्द्रीभवतीत्यर्थः) ङ—अमिदत् । श्रा पूर्व्ववत् । (आकारानुबन्धफलं पूर्व्ववर्त्तिधातुवदित्यर्थः) जि—मिन्नोऽस्ति । ङ—मेदते । चकारात् स्विदि । किञ्चित् किल न मेदते इति हलायुधः । १३६ ।

५५ । मिदृञ् वधमेधयोः (मिद, श्वा, उ)

५६ । मेदृ ञ् वधमेधयोः (मेद, श्वा, उ) ऋ—अमिमेदत् । ञ—मेदति मेदते शास्त्रार्थं, धारयतीत्यर्थः । मिमिदुः । मिमेदुः ।

## मुदक् संसर्गे ञि मुदङ् हर्षे म्रदृग चुदि लविर् । रुद् रोदे रद उत्खाते वदिङ् नुत्यभिवादयोः ।

५७ । मुदक् संसर्गे (मुद, चु, प) क—मोदयति घृतेनान्नं लोकः ।

५७ । ञि मुदङ् हर्षे (मुद, भ्वा, श्रा) हर्षश्चित्तोत्साहः । ञि—मुदितोऽस्ति । ङ—मोदते धनी ।

५८ । म्रदृग चुदि (म्रद, क्रा, प) ग—म्रद्नाति । ममर्द । चुदि चूर्णीकरणे ।

५९ । लविर् रुद् रोदे (रुद, श्वदा, प) रोदोऽश्रुविमोचनम् । ल, घ—रोदिति लोकः शोकात् । इर्—अरुदत् अरोदीत् । (अरोदीद्राक्षसानीकमरुदन्भुजापतिरिति भट्टिः । १७ । ४८) रोदिम्यनाथमात्मानमिति भट्टौ आह्वानविशिष्टरोदनक्रियाव्याप्यत्वात् सकर्मकत्वमिति जयमङ्गला ।

६०। रद उत्खाते (रद, भ्वा, प) रेफादिः। उत्खातमुत्खननमिति गोविन्दभट्ट। रदति भूमिं सूकरः।

६१। वदिङ् तुल्यभिवादयोः (वन्द, भ्वा, आ) अभिवादो नमस्कारः। इ—वन्द्यते। ङ—वन्दते गुरुं लोकः, स्तौति नमस्करोति वेत्यर्थः।

## वदै वाचि वदक् वाचि सन्देशे च वदञ् ङपि।

६१। वदै वाचि (वद, भ्वा, प) ऐ—उद्यात्। वदति।

६१। वदक् वाचि सन्देशे च (वद, चु, प) क—वादयति। सन्देशो वचनविशेषः। अयमात्मनेपदीत्येके।

६१। वद ञ्ङपि (वद, भ्वा, उ) ञ्—वदति वदते। ङ—वदते। अयमात्मनेपदीत्यन्ये। अपिशब्दात् वाक्सन्देशयोः।

## विद् ङ्कञ् चेतनाख्यानवासवादे विद्ऌ लृश् पञौ। लाभे औ विदृ ङ मीमांसे विदृयौङ् भावे विदल् मतौ।

६२। विदङ् कञ चेतनाख्यानवासवादे (विद, चु, उ) चेतना ज्ञानम्, वादः स्थैर्यम्। ङ—वेदयते शास्त्रं धीरः, जानातीत्यर्थः। वेदयते स्वार्थं लोकः, आख्यातीत्यर्थः। वेदयते तीर्थे साधुर्वसतीत्यर्थः। वेदयते दृढः, स्थिरःस्यादित्यर्थः। ञ—वेदयति वेदयते। केचित्तु वाद न पठन्ति, चेतनास्थाने च वेदनेति पठित्वा वेदयते विद्ध, व्यथते इत्यर्थं इत्युदाहरन्ति। अस्मात्तु परस्मैपदममन्यमाना "जितां सपत्नेन निवेदयिष्यत" इत्यत्र निवेदनं करोतीति णौ समादधते।

६२। विदृ ऌ शपञौ लाभे (विद, तुदा, उ) ऌ—अविदत्। श, प, ञ—विन्दति विन्दते। औ—वेत्ता।

६२। धौ विद ङ मीमांसे ( विद, रुधा, आ ) मीमांसो विचारणम्। ध, ङ—विन्ते शास्त्रं धीरः। औ—वेत्ता।

६२। विदौ ङ भावे ( विद, दिवा, आ ) भावः सत्ता, सा चेह विद्यमानतैव। य, ङ—विद्यते विष्णुः। औ—वेत्ता।

६२। विदल् मतौ ( विद, अदा, प ) ल—वेत्ति।

शब्दक् शब्दकृतौ सोपसर्गस्त्वाविष्कृतौ मतः।

६३। शब्दक् शब्दकृतौ ( शब्द, चु, प ) क—शब्दयति।

सोपसर्गस्त्वाविष्कृतौ मतः।

(उपसर्गसहितः शब्दधातुराविष्कारार्थक इत्यर्थः) प्रशब्दयति गभीरमर्थं शिष्यः, स्फुटं करोतीत्यर्थः।

श्विदिङ् शौक्ल्येऽथ शद्लृजौ शाते आङः शदौ गतौ।

६४। श्विदिङ् शौक्ल्ये ( श्विन्द, भ्वा, आ ) वकारयुक्तः। इ—श्विन्द्यते। ङ—श्विन्दते पुण्डरीकम्।

६५। अथ शद्लृजौ शाते ( शद, भ्वा, प ) लृ—अशदत्। ज—शादः शद्रः। औ—शत्स्यति। शातः पतनं पातनञ्च। शीयते पत्रं दृचात्, शीयते पत्रं दृचात् वायुः। "शदोऽपि म"मित्यनेन शविषये आत्मनेपदम्। केचिदिमं तुदादौ च पठित्वा तत्सामर्थ्यात् आत्मनेपदानित्यत्वे शत्प्रत्यये शीयन्ती शीयतीत्युदाहरन्ति।

६५। आङः शदौ गतौ ( आ शद, भ्वा, प ) तालव्यादिः। आशीयते। औ—आशात्सीत्।

आङः षदक् च षद्लृजौश् विषादे शरणे गतौ।

६६। आङः षदक् च ( आषद, चु, प ) क—आसादयति। चकारात् गतौ।

६६ । षद्लृ ञौश् विषादे शरणे गतौ (षद, तुदा, प) लृ—असदत् । ञ—सात: सद: । औ—असात्सीत् । श—सीदन्ती सीदती । विषाद आकुलीभाव: । सीदति राधा रासगृहे । शरणं हिंसा । (१) ।

पूदृङ् निरासे पूदक् त्वान्युतिहत्योश्च ञि ष्विदा ।
ङ् ल्ट मोहस्नेहमोचे ल्ट औ ष्विद्या ञि खिदि ष्वदक् ।
स्वादे छेदे ष्वद स्वर्द स्वादङ् प्रीतिलिहोः स्विदिङ् ।
ईपत्कम्पे स्खुड़ मपड् विदारे स्यन्दू ङ् वल्ट स्रुतौ ।

६७ । पूदङ् निरासे ( पूद, भ्वा, आ ) षठस्वरी । ङ—सूदते । निरासो निक्षेप: । पूद क्षरणे इति प्राञ्चः । क्षरणमव-सारण, हिंसोपलक्षणमिति रमानाथ: ।

६७ । पूदक् त्वान्युतिहत्योश्च ( पूद, चु, प ) षठस्वरी । आन्युतिरङ्गीकार: । क—सूदयति धन विप्राय दातुं दाता । रमा-नाथस्तु आस्रवण इति दन्त्यसकारं पठित्वा सूदयति मदिरा भाण्डात्, क्षरतीत्यर्थ इत्याह । चकारान्निरासे । ( इत्यर्थे यथा—मधुसूदन: ) ।

६८ । ञि ष्विदा ङ्ल्ट मोहस्नेहमोचे ( ष्विद, भ्वा, आ ) एतदाद्या वकारयुक्ता: षट् । ञि—स्विन्नोऽस्ति । आ—स्वेदितं

(१) कातन्त्रादावयं धातुस्तुदादौ भ्वादौ च पठित । तत्र तौदादिकस्य व्याख्यानावसरे "सीदन्ती सीदतीत्येतदर्थमिह पठितस्य भ्वादौ पाठो ज्वलादिकार्य्यार्थं, साद सद ' इत्युक्तं रमानाथेन । किन्तु मुग्धबोधे भ्वादौ षद्लृ जौ विषादे गताविति पठितश्चतायाऽर्य्येण तौदादिकत्वमस्य स्वमतविरुद्धमिति सूचितम् । इह तु तथा पाठ परमतविज्ञापनार्थं एवेति मन्यामहे ।

स्विन्नं तेन, प्रस्वेदितः प्रस्विन्नः सः । ङ—स्वेदते तिलस्तैलं, मुञ्चतीत्यर्थः । ऌ—अस्विदत् । स्नेहः स्निग्धीभावः । (१) ।

६८ । ऌ ञी ष्विद्या ञि स्विदि (ष्विद, दिवा, प) ऌ—अस्विदत् । औ—स्वेत्ता । य—स्विद्यति । ञा—पूर्ववत् । ञि—स्विन्नोऽस्ति । स्विदीति मोऽस्तेऽस्मोचेष्विति वोपदेवः । गात्रप्रक्षरणे इति प्राञ्चः । स्वेदते किल सर्व्वोऽपि वपुष्मानुष्णरश्मितः । न च स्विद्यति तस्याङ्गं व्यायामाद्दितमेदस इत्युभयत्र हलायुधः । २१२ ।

६९ । ष्वदक् स्वादे छेदे (ष्वद, चु, प) स्वादो रसोपादानम् । क—स्वादयति क्षीरं लोकः ।

६९ । ष्वदङ् प्रीतिलिहोः } (ष्वद, भ्वा, आ)
७० । स्वर्द्दङ् प्रीतिलिहोः } (स्वर्द्द, भ्वा, आ)
७१ । स्वादङ् प्रीतिलिहोः } (स्वाद, भ्वा, आ) आद्यो

मूर्द्धन्यादिः, शेषौ दन्त्यादी, मध्यमो रेफोपधः । प्रीतिरिहानुरागविशेषः । तत्र यस्यानुरागस्तस्य सम्प्रदानत्वम् । लिट् रसोपादानम् । ङ—अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा इति श्रीहर्षः । ३ । ९३ । स्वर्द्दते विविध स्वादु स्वादते च रसायणमिति हलायुधः । ११९ ।

७२ । स्यदिङ् ईषत्कम्पे (स्यन्द, भ्वा, आ) इ—स्यन्द्यते । ङ—स्यन्दते चक्षुः । पस्यन्दे । काशे स्यन्द कुशे स्यन्द स्यन्द त्वं गतभस्त्राके इत्यादौ गणकृतानित्यत्वात् परस्मैपदम् । घञादित्वादनि स्यन्द इवाचरतीति क्वौ सिद्धिर्वा ।

---

(१) षकारोऽयमोष्ठ्य इति वर्धदेवनेत्युक्तं रमानाथेन ।

७३। खुद मपड् विदारे (खुद, भ्वा, आ) म—खुदयति। सोपसर्गस्य तु "वा ग्रमयमे"त्यादिना वा ह्रस्वः। प्रखुदयति प्रखादयति। अवपरिभ्यांदुपसर्गात् परस्य घटादित्वं नास्तीति कातन्त्राद्याः। तत्रैव अवस्थाने अप इति भीमः। प्रखादयति अवखुदयति परिखुदयति। अपपरिभ्यां परस्य घटादित्वं नास्तीति जौमराः। अपखादयति परिखादयति प्रखुदयति। ष— खुदा। ङ—खुदते। खुद खुदने इति प्राञ्चः। खुदनं स्थैर्य-मिति त्रिलोचनरामौ। पाटनमिति गोविन्दभट्टः। क्रीयोत्पादन-मिति गोयीचन्द्रः। हिंसेति रमानाथः।

७४। स्यन्दू ङवल्ल सुतौ (स्यन्द, भ्वा, आ) अन्तःस्थादियुक्तः। ऊ—अस्यन्दिष्ट अस्यन्त। ङ—स्यन्दते। व—स्यन्त्स्यति, सिस्यन्त्सति। ल—अस्यदत्। स्रुतिः चरणम्। प्रस्यन्दमदगन्धलुब्ध-मधुपव्यालोलगण्डस्थलमित्यत्र गणाकृतानित्यत्वं, पचादित्वादनि प्रस्यन्द इवाचरतीति क्वौ शतन्तं वा।

## स्कन्दिरौ शोषणे गत्यां स्कदि ङ् आस्रव उद्धृतौ। उत्प्लुत्य गत्यां ङ हदौ त्वर्थे ह्लादी ङ मोदने।

७५। स्कन्दिरौ शोषणे गत्याम् (स्कन्द, भ्वा, प) इर्— अस्कदत् अस्कान्त्सीत्। औ—स्कन्ता। चस्कन्द। स्कन्दति पङ्कं आतपेन।

७६। स्कदिङ् आस्रवउद्धृतौ उत्प्लुत्यगत्याम् (स्कन्द, भ्वा, आ) आदास्वरौ। इ—स्कन्द्यते। ङ—स्कन्दते। चिस्कन्दिषते। पञ्चमस्वरौति धातुप्रदीपरामौ। स्कन्दते स्कुन्दते चापि पङ्कस्रवन-वाचिन इति भट्टमल्लोऽपि। चुस्कुन्दिषते।

७७ । ङ हदौ स्वर्ये ( हद, भ्वा, आ ) स्वर्योविष्ठोत्सर्गः । ङ—हदते जनः । औ—हत्ता ।

७८ । ह्लादीङ मोदने ( ह्लाद, भ्वा, आ ) अन्तःस्थतृतीययुक्तद्वितीयस्वरी । मोदनं हृष्टीकरणं हृष्टीभावश्च । ई—ह्लन्नः ( ह्लादेःस्वःक्तौ चेति ह्रस्वः ) ङ—ह्लादते चन्दनं गात्रम् । "बलात् प्रह्लादते मन" इति किराते । ११ । ८ ।

## ह्रादङ् च स्वन इत्येते दान्ताः स्युर्नवसप्ततिः ।

७९ । ह्रादङ् च स्वने ( ह्राद, भ्वा, आ ) रेफयुक्तद्वितीयस्वरी । ङ—ह्रादते । चकारात् ह्लादीङ् च (शब्दार्थकः) (ह्रादते स्निग्धगम्भीरं यद्देशे वर्षुको घन इति हलायुधः । २३८ ) ।

## इत्येते दान्ताः स्युर्नवसप्ततिः ।

( इति, समाप्तौ । एते दान्ता धातवो नवसप्ततिः एकोनाशीतिसंख्यकाः ) । (१)

---

(१) अस्मिन् दान्तवर्गे "ह्रादिवु स्दी"ति ह्रदधातोः कथं पूर्व्वोक्त षष्ठसंख्यकसजातीयधातुमध्ये न पठितस्तद्बीजं ४र्थ पृष्ठे ३य पङ्क्तौ विवृतमस्ति । तेनायं धातुर्दर्शमात् परं षष्ठस्यैव सजातीयत्वं सूचयित्वा ( ६क ) इति चिह्नेन मया दर्शितः ।

**दृन्भी जिघङ् ह्युताष्टघ्यु निर्वृद्धौ ङेधच चुध् ऌट ।**
**यौ चुधि क्रुध् ऌयौ कोपे गुध् य वेष्टे गुधग् रुषि ।**

१ । दृन्भी जि घङ् ह्युतौ ( दृन्भ, दधा, घा ) क्रसादिः । ई, जि—दृब्धोऽस्ति । घ, ङ—दृम्भे ।

२ । ऋध् युनिर्वृद्धौ ( ऋध्, दिवा, स्वा, प ) य—ऋध्यति । उ—अर्धित्वा ऋद्धा । न—ऋध्नोति । द्र्—आर्धत् आर्धीत् । कचित्तृप्तो चायम्, सोऽहं प्रागभवतैव भूतजननीमृध्नोमीति भवभूतिः । ( मालतीमाधवे पञ्चमाङ्के अघोरघण्टोक्तौ ) अन्तर्भूतण्यर्थत्वादिदं सिद्धमिति केचित् । ( ऋध्नोति धीः सदा यस्य ऋध्यति श्रीश्च भूतले इति हलायुधः । २४६ ) ।

३ । ङेध च ( एध, भ्वा, आ ) ङ—एधते । चकारात् वृद्धौ ।

४ । चुध् ऌ यौ चुधि ( चुध, दिवा, प ) चुत् भक्षणेच्छा । य—चुध्यति अन्नं बुभुक्षितः । श्रौ—चोद्धा ।

५ । क्रुध् ऌयौ कोपे ( क्रुध्, दिवा, प ) ऌ—अक्रुधत् । य—क्रुध्यति लोकः प्रियवे । श्रौ—क्रोद्धा ।

६ । गुध् य वेष्टे ( गुध्, दिवा, प ) य—गुध्यति । जुगोध ।

६ । गुधग् रुषि ( गुध, क्रया, प ) ग—गुध्नाति । जुगोध । ( योऽस्मै गुध्नाति तद्दुर्गं तत्क्षणादेव गुध्यतीत्युभयत्र हलायुधः । २६८ ) ।

**गुधङ् क्रीडे गाधृ ङ्तु प्रतिष्ठाग्रन्थयोर्गृधिर् ।**
**युच लिप्से गर्ध कच गन्ध कङ् द्रुहि णाधङ ।**

**नाथे ट्धङ् द्दे नाधृङ् नाथे वन्धौग बन्धक।**
**वधक् वन्धे वधङ् निन्दे च वुन्धिर्नु निशामने।**

६। गुधङ् क्रीड़े (गुध, भ्वा, आ) ङ—गोधते।

७। गाधृ ङतु प्रतिष्ठाग्रन्थयोः (गाध, भ्वा, आ) (प्रतिष्ठा प्रस्थानम्) ऋ—अजगाधत्। ङ—गाधितासे नभो भूय इति भट्टिः। २२। २। गाधते मालिकः स्रजः।

८। गृधिर् य च लिप्से (गृध, दिवा, प) इर्—अगृधत् अगर्धीत्। अस्यानित्यं ङ इति दुर्गः। य—गृध्यति धनं लुब्धः। ङ—गर्धित्वा गृद्ध्वा। चकारात् गाधृङ् च (लिप्सार्थकः) (न गृध्यति परद्रव्यमिति हलायुधः। २५४)।

९। गर्धक् च (गर्ध, चु, प) क—गर्धयति। चकाराल्लिप्से।

१०। गन्ध कङ ह्रुहि (गन्ध, चु, आ) क, ङ—गन्धयते। ह्रुहि हिंसायाम्। गतिहिंसायाचनेष्विति कातन्त्राः।

११। णाधृङ् नाथे (णाध, भ्वा, आ) णोपदेशविधायस्य वर्ज्जनेऽपीह पाठः केषाञ्चिदनुरोधात्। ऋ—अननाधत्। ङ—नाधते। नाथो दयार्थोरैश्वर्य्यार्थनानि।

१२। दधङ ह्रदे (दध, भ्वा, आ) ङ—दधते। ह्रदे दान-धृत्योः। आदध्यादन्धकारे रतिमतिशयिनीमिति मयूरभट्टोक्तं गणकृतानित्यत्वादस्यैव ढीपरस्मैपदे साध्यमिति रमानाथः। वस्तुतस्तु डु धाञ्ज् धारणे इत्यस्यैव रूपं साध्यम्।

१३। नाधृङ नाथे (नाध, भ्वा, आ) ऋ—अननाधत्। ङ—प्रनाधते। (१) नाथो दयार्थोरैश्वर्य्यार्थनानि।

---

(१) नाथृध इत्यस्य धाद्दीति कथनात्कवपाठे ये धातवो णादित्वेन पठितास्तेषा-

१४ । वन्धौ ग वन्धे ( वन्ध, क्रा, प )
१४ । वन्ध क बन्धे ( बन्ध, चु, प )
१५ । बध क बन्धे ( बध, चु, प ) औ—अबान्तुमौत् ।

ग—बध्नाति । क—बन्धयति । "बस्त्रान्तं शठ मुञ्च मुञ्च गमये: किं धूर्त्त निर्ब्बन्धसे" इति गणकृतानित्यतया णेरभावे आत्मनेपदे च साधनम् । क—बाधयति ।

१५ । बधङ निन्दे च ( बध, भ्वा, आ ) ङ—बीभत्सते खलं लोकः । चकाराद्बन्धे च । बधते । ( निशानार्ज्जवनिन्दाक्षित्यक्तेनिन्दार्थे किञ्जेति सनि वीभत्सते, अन्यत्र बधते इत्याशयः ) अत्र त्यादयो न प्रयुज्यन्ते इति रमानाथः । किन्तु मा वधिष्ठा जटायुं मामिति भट्टिप्रयोगः ।

१६ । बुन्धिर्ञ् निशामने ( बुन्ध, भ्वा, उ ) पञ्चमस्वरी । इर्-अबुधत् अबुन्धीत् । ञ—बुन्धति बुन्धते । उ—बुन्धित्वा बुद्धा । निशामनमालोचनं प्रणिधानमिति यावत् ।

बुन्धक् बन्धे बुधौ विज्ञापने बुध्यौङ् वेदने ।

१६ । बुन्धक् बन्धे (बुन्ध, चु, प) पञ्चमस्वरी । क—बुन्धयति ।

१७ । बुधौ विज्ञापने ( बुध, भ्वा, प ) औ—बोद्धा । बोधति शिष्यं गुरुः ।

१७ । बुध्यौङ् वेदने (बुध, दिवा, आ) य, ङ—बुध्यते शास्त्रं धीरः । औ—बोद्धा ।

बुधिर्ज्ज् चाथ बाधृङ् विहतौ मेधृञ् मेधृवत् ।

---

अत्र भ्वादादिष्ण इत्यनेन पुनर्दन्त्यत्वे, सति षत्वविधौ षत्वमिति सूचितं, तेनात्र न षत्वमिति बोध्यम् ।

१७। बुधिर्ञ् च (बुध, भ्वा, उ) इर्—अबुधत् अबोधीत्। ञ—बोधः बधः। ञ—बोधति बोधते। चकारात् वेदने।

१८। अथ बाधृङ् विहतौ (बाध, भ्वा, आ) ऋ—अबबाधत्। ङ—जनं न सर्वेष्वधिको ययाधे इति रघुः। (१)

१९। मेधृञ मेधृवत् (मेध, भ्वा, उ) ऋ—अमिमेधत्। ञ—मेधति मेधते। मेधृवत् वधमेधासङ्गेष्वित्यर्थः।

**मृधुञ क्लिदि युध्यौङ युद्धे रध्यू ल्ट हिंसने।**
**पाकेऽनौ रुध् ङ्यौ कामे रुधिर्धी ञि ञ आवृतौ।**

२०। मृधुञ क्लिदि (मृध, भ्वा, उ) उ—मर्धित्वा मृद्धा। ञ—मर्धति मर्धते। क्लिदि चार्द्रभावे।

२१। युध्यौ ङ युद्धे (युध, दिवा, आ) य, ङ—युध्यते। औ—योद्धा। सम्मुखस्थितयोर्द्वयोः साग्रामिकरीत्या परस्पराभिभवेच्छा युद्धम्। युध्यते योधः। कदाचिदेकस्य सहभावविवक्षायां युध्यते योधः परेण। कदाचिद्धननेऽपि, युध्यते चौरं राजा, हन्तीत्यर्थः। यो भक्तपिण्डस्य कृते न युध्येदिति, अस्याङ्गावे क्विपि तमिच्छतीति क्ये, तं करोतीति कण्ड्वादित्वात् क्ये वा साध्यम्।

२२। रध्यू ल्ट हिंसने पाके (रध, दिवा, प) य—रध्यति। ऊ—रधिष्यति रत्स्यति। ल्ट—अरन्धत्।

२३। अनौ रुधङ्यौ कामे (अनु+रुध्, दिवा आ) अनाविन्युपपदे सप्तमी। (सप्तमी च परे वाच्ये गम्ये चोपपदे क्वचिदित्युक्तेः) ङ, य—अनुरुध्यते धनं लोकः। औ—अनुरोद्धा।

---

(१) बाधधातरोष्ठ्यवकारादिर्दन्त्यवकारादिश्च भवतीति।

२३। रुधिर्ँ जि अ आवृतौ (रुध, रुधा, उ) इर्—अरुधत् अरौत्सीत्। ध,अ—रुणद्धि रुन्धे। औ—रोद्धा। जि—रुद्धोऽस्ति।

राधौ सिद्धौ वध हतौ व्यधौ ताड़े विधश् विधौ।

२४। राध् नयौ सिद्धौ (राध, स्वा, दिवा, प) रेफादिः। न—राध्नोति। य—राध्यति। औ—अरात्सीत्। सिद्धिरिह स्वादिपक्षे निष्पादना, दिवादिपक्षे निष्पत्तिः। अन्नं राध्नोति विप्राणां च इति हलायुधः। ११४। निष्पादयतीत्यर्थः। सकलं राध्यति श्रिया इति हलायुधः। ११४। निष्पन्नं स्यादित्यर्थः (१)। सिद्धिरन्तर्भूतण्यर्थत्वादुभयत्रैव निष्पादनेति गोविन्दभट्टः।

२५। वध हतौ (वध, भ्वा, प) वकारादिः। वधति।

२६। व्यधौ ताड़े (व्यध, दिवा, प) य—विध्यति मृगं व्याधः। औ—अव्यात्सीत्। केचित्तु द्विर्भूतस्य अनिकारीभूत-यकारस्य च व्यधेर्वकारो वर्ग्य, अन्यत्र दन्त्य इति मन्वानाः सनि विव्यत्सतीत्याहुः।

२७। विधश् विधौ (विध, तुदा, प) विधिर्विधानम्। श—विधति वेधा जगत्। अनेकार्थत्वाच्छिद्रकरणेऽप्ययम्। वेधित-च्छिद्रितौ विद्धे इत्यमरः। कर्णवेधः।

इधक् दीप्तौ इधुङ् वल्ह इद्धौ वाधङ् बाधवत्।

२८। इधक् दीप्तौ (इध, चु, प) क—वर्द्धयति।

---

(१) यत्प्रसादात्त्वन' सर्वं सततं राध्यति श्रियेति क्वचित् पाठः। अनेकार्थत्वा-दयं धातुर्हिंसायां शुभाशुभपर्यालोचनेऽर्थेऽपि, यथा—वानरा भूधरान् रेधुरिति भट्टि'। १४। १८। उन्मूलितवन्त'। गर्गो राध्यति रामायेति मुग्धबोधम्।

२८। ऋधुङ् वल्ल ऋद्धौ (ऋध, भ्वा, भ्वा) उ—ऋद्धित्वा ऋद्धा। ङ—ऋद्धते जनः। य—ऋत्स्यति विवृत्सति। ऌ—अऋधत्।

२९। वाधृङ बाधवत् (बाध, भ्वा, भ्वा) ऋ—अववाधत्। ङ—वाधते। बाधवत् विवृतौ।

वर्द्धक् पूर्त्तिच्छिदोः शुन्धक् शुद्धौ शुन्धञ् च ऋध् वल्ल ङुः।
मर्दृ ऋभुज् क्लेदने ल शुध्यौ शौचे पिधू शिवे।
शास्त्रे पिध् पिधु गत्यामु पिध्यौ पाधौन्य साध् यनौ।
सिद्धौ स्पर्द्ध ङ सङ्घर्षे समत्रिंशच्च धान्तिमाः।

३०। वर्द्धक् पूर्त्तिच्छिदो (वर्द्ध, चु, प) क—वर्द्धयति। ऋधक् दीप्तावित्यत्रैव पूर्त्तिच्छिदोर्येतिपाठादिष्टसिद्धावस्य पाठश्चुरादिभ्यो ञेरनित्यतां बोधयति तेन कदाचित् ञेरप्राप्तौ यगादौ ऋधक् इत्यस्य ऋध्यते इत्यादि, अस्य तु वर्द्धते इत्यादीति भेदः। (वर्द्धयत्यरिवीराणां कत्वा मूर्द्धानमाहवे इति हलायुधः। ८०। वर्द्धयति छिनत्तीत्यर्थः)।

३१। शुन्धक् शुद्धौ (शुन्ध, चु, प) मञ्चमस्वरी। क—शुन्धयति। अयमात्मनेपदीत्येके।

३१। शुन्धञ् च (शुन्ध, भ्वा, उ) मञ्चमस्वरी। चकारात् शुद्धौ। मा चेह शुद्धीभावः शुद्धीकरणञ्च। ञ—शुन्धति शुन्धते जलेन लोकः। यो गां शुन्धति सत्येन शुन्धते तमसा तनुम्। धियं शुन्धयति ज्ञानादित्युभयत्र हलायुधः। ३०। गां वाचम्।

३२। ऋध् वल्ल ङु मर्द्द (ऋध, भ्वा, भ्वा) य—अर्त्स्यति विवृत्सति। ऌ—अऋधत्। ङ—अर्द्धते। उ—अर्द्धित्वा ऋद्धा। मर्द्दोऽप्यानोत्सर्गः। ऋधु मर्द्दने इति चुरादिपरस्मैपदी धातुरन्ये-

नमन्यते। प्रहसनं विद्रव इति गोविन्दभट्टः। शर्द्धयति रद्धं कुत्सित-शब्देन याल इति रमानाथः।

३२। शृधुञ् क्लेदने (शृध, भ्वा, उ) उ—शर्द्धित्वा शृद्धा। ञ—शर्धति शर्धते। क्लेदनमार्द्रीभावः।

३३। लृ शुध्यौ शौचे (शुध, दिवा, प) तालव्यादिः। लृ—अशुधत्। य—शुध्यति लोकः स्नानात्। औ—शोद्धा। रजसा शुध्यते नारीत्यत्र शुध्यतीति क्विपि शुधं करोतीति ञौ कर्मणि यकि रूपम्।

३४। षिधू शिवे शास्त्रे (षिध, भ्वा, प) मूर्द्धन्यादिः। ऊ—असेधीत् असैत्सीत्। शिवं मङ्गलम्, तत्राकर्म्मकः। सिद्धो वर्ण-समाम्नाय इति कातन्त्रस्याद्यसूत्रम्। शास्त्रमनुशासनम्। सेधति शिष्यं गुरुः।

३४। षिध गत्याम् } (षिध, भ्वा, प)
३४। षिधु गत्याम् } (षिध, भ्वा, क्त्वावेट्, प) सेधति। उ—सेधित्वा सिद्धा। निष्ठायां पूर्व्वस्य सिधितः, शेषस्य क्त्वावेट्क-त्वान्निम् डीश्वीत्यनेन इमो निषेधे सिद्ध इति भेदः।

३५। षाधौ न्य सिद्धौ } (षाध, स्वा, दिवा, प)
३६। साधू यनौ सिद्धौ } (साध, दिवा, स्वा, प) शेषो दन्त्यादिः। औ—सिषात्सति। न—साध्नोति। य—साध्यति। शेषपक्षे औ—सिसात्सति। (१) सिद्धिर्निष्पत्तिः। साध्यति घटो निष्पन्नः स्यादित्यर्थः। सिद्धिर्निष्पादनेति गोविन्दभट्टः। साध्नोति साध्यति घटं कुलालः, निष्पादयतीत्यर्थः।

(१) पूर्व्वत्र षोपदेशतया तत्सकारत्वेन षत्वं इह तु तदभावाच्चेति भातृद्वय-कल्पने तात्पर्य्यम्।

३७। स्पर्द्धक सङ्घर्षे ( स्पर्द्ध, भ्वा, श्वा ) सङ्घर्षः परिभवेच्छा। (१) ङ—स्पर्द्धते वलिनं वली। पस्पर्द्धे।

## सप्तत्रिंशच्च धान्तिमा ।

( धकारान्ता धातवः सप्तत्रिंशत्संख्यकाः )

---

## नान्तवर्गः ।

### अनष्लु प्राणनेऽन् यङ् च कनी ञि प्रीगतिद्युतौ ।

१। अनष्लु प्राणने ( अन, अदा, प ) ष, लु—अनिति लोकः, जीवतीत्यर्थः। (२)।

१। अन् यङ् च ( अन, दिवा, आ ) य, ङ—अन्यते। चकारात् प्राणने। (अपथ्यत्वं परित्यज्य सुखं प्राणिति यत्प्रजा। न प्राण्यते पुरं तस्य प्रतिकूलं करोति य इत्युभयत्र हलायुधः। १७२)।

२। कनी ञि प्रीगतिद्युतौ (कन, भ्वा, प) ई, ञि—कान्तोऽस्ति। प्रीः प्रीतिः। ( कनकशब्दव्युत्पत्तये कनी दीप्तौ बुञ्चित्यमरटीका )।

### खनुञ् विदारे चन् शब्दे चन्म हिंसे जुनश् गतौ ।

३। खनुञ् विदारे ( खन, भ्वा, उ ) उ—खनित्वा खात्वा। ञ—तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः। खनते।

४। चन् शब्दे ( चन, भ्वा, प ) चनति।

---

(१) सर्द्धासङ्घर्षयोरुक्तः सङ्घर्षे शब्दवेदिभिरिति व्याडिः। अत्र सङ्घर्षे इत्यपि पाठः।

(२) लु समादित्वेऽत्र षकारादादादित्वेयुक्तपूर्व्वम।

४। चन् म हिंसे ( चन, भ्वा, घटादिः, प ) म—चनयति।

५। जुनश् गतौ ( जुन, तुदा, प ) श—जुनति। जोनिता।

जनी य्य ङ जनौ जन्मालिर्चं तन् दुञ विस्तृतौ।

६। जनीय्यङ जनौ ( जन, दिवा, आ ) ई—जातः। म—जनयति। य, ङ—जायते। जनिर्जन्म। प्रादुर्भावे इति प्राञ्च। प्रादुर्भावः स्फुटीभावः, प्राकाश्ये प्रादुराविःस्यादित्यमरात्। वीजादङ्कुरो जायते, पत्रकाण्डादिभेदेन प्रकाशते इत्यर्थः। प्रादुर्भावो-ऽसदुत्पत्तिरिति केचित्। घटो जायते।

६। जन् मलि र्चं ( जन, हा, प ) म—जनयति। लि—जजन्ति। र—वैदिकः। चकाराज्जनौ।

७। तन् दुञ विस्तृतौ ( तन, तना, उ ) द, ञ—तनोति तनुते पुण्यं सुधीः। उ—तनित्वा तत्वा।

तनुक्य्युपकृतौ श्रद्धाघाते शब्दोपतापयोः।
उपसर्गाद्दैर्घ्यके दान् आर्जवे छिदि मि ध्वन।
धन्रवे धन्लि धान्ये पन्ङीडे वन्ङ दुयाचने।

७। तनु क्युपकृतौ श्रद्धाघाते शब्दोपतापयोः ( तन, चु, भ्वा, प ) उ—तनित्वा तत्वा। कि—तानयति तनति। उपकृतिरुपकारः, आघातो हिंसावर्ज्जनं, स्तुतिरिति गोविन्दभट्टः।

उपसर्गाद्दैर्घके।

दैर्घकं दीर्घीकरणम्। ( अयं सोपसर्गश्चेत् दीर्घीकरणेऽर्थे वर्त्तते इत्यर्थः )। वितानयति यः कीर्त्तिं वितनत्यमलं यश इति हलायुधः। ६२।

८। दान आर्जवे छिदि ( दान, भ्वा, उ ) ऋजुत्वकरणम्

शानृञ् तेजे शुनश् गत्यां षन् सम्भक्तौ तु षन् दुञ् ।
दाने ष्टन् स्तन्मि शब्दे स्वन् ण च ण स्वन् मि तंसने ।

१७। शानृञ् तेजे (शान, भ्वा, उ) तेजस्तीक्ष्णीकरणम् । ञ—शीशांसति शीशांसते खड्गं कर्म्मकारः ।

१७। शुनश् गत्याम् (शुन, तुदा, प) तालव्यादिः। श—शुनति । शोनिता ।

१८। षन सम्भक्तौ तु (षन, भ्वा, प) मूर्द्धन्यादिः । सम्भक्तिः सेवनम् । सनति गुरुं लोकः । तुशब्दः पादपूरणार्थः ।

१८। षन दुञ् दाने (षन, तना, उ) द, ञ—सनोति सनुते । उ—सनित्वा सात्वा ।

१९। ष्टन मि शब्दे } (ष्टन, भ्वा, प)
२०। स्तन मि शब्दे } (स्तन, भ्वा, प) द्वौ क्रमान्मूर्द्धन्य-दन्त्यादी । मि—स्तनयति स्तानयति । अतिष्टनत् । अतिस्तनत् ।

२१। स्वन ण च (स्वन, भ्वा, प) वकारयुक्तः । ण—स्वेनतुः सस्वनतुः । चकारात् शब्दे ।

२१। ण स्वन मि तंसने (स्वन, भ्वा, प, या घटादिः) वकार-युक्तः । शब्दे इत्यनुवर्त्तते, तंसने भूषणे कर्त्तरि (सति) शब्देऽर्थे, भूषणकर्त्तृकशब्देऽयमित्यर्थः । ण—स्वेनतुः सस्वनतुर्नूपुरौ । मि—स्वनयति स्वानयति कङ्कणं वधूः । अन्यत्र स्वानयति घण्टां जनः ।

हन् लो गतौ वधेऽथण् दिणान्तास्त्वष्ट विंशतिः ।

२२। हन लो गतौ वधे (हन, अदा, प) ल—हन्ति । औ—हन्ता । गणकृतमनित्यमितिन्यायात् कदाचित् गण्स्थितौ हनतीत्यपीति वररुचिः । तेन सर्प्पो व्याहनत् इत्यादिति षष्ठी ।

उद्धतिं विना भाषायां गतौ नास्य प्रयोगः। उद्धतौ—ग्रग्रेसरैर्वाजिभिरुद्धतानीति रघौ उद्धतानि ऊर्द्धं गतानीत्यर्थः। वधः प्राणवियोगफलकव्यापारः। जघान रावणं रामः।

ऋवर्णादिषान्ताश्च।

(ऋवर्णाः) वर्णवर्ज्जिता ये (दितः) दकारेतो मूर्द्धन्यणान्ता (धातवः) तेऽपि दन्त्यनान्ताः स्युरित्यर्थः। यथा—

२३। ऋन डुञ गतौ | (ऋन, तना, उ)
२४। घन डुञ वधे | (घन, तना, उ)
२५। क्षिन डुञ वधे | (क्षिन, तना, उ)
२६। ष्टन डुञ दीप्तौ | (ष्टन, तना, उ)
२७। तृन डुञ भक्ते | (तृन, तना, उ)
२८। ष्टन डुञ भक्ते | (ष्टन, तना, उ) इति पट्। रूपाणि

पूर्व्ववत्। फलन्तु मूर्द्धन्यणान्तानां तिकि ऋर्ण्टिः ऋर्ण्टिरित्यादि। यङ्लुकि चंचर्ण्टीत्यादि। दन्त्यनान्तानान्तु ण्नोर्णभणीत्यस्य बलवत्त्वाददौ नस्यानुस्वारे 'अपे अम् नो'रित्यस्य पुनर्नकारे सत्यपतो विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायासत्वाभावे तिकि ऋन्तिः ऋन्तिरित्यादौ, यङ्लुकि चंचन्तीत्यादौ च दन्त्यस्थितिरिति।

## इत्यष्ट विंशतिः।

(इति इमे धातवः अष्ट विंशतिः, अष्टेति पृथक्पदं अष्टसंख्यका विंशतिसंख्यकाश्च; समुदायेनाष्टाविंशतिरित्यर्थः। कोटीयतस्तो दशचेतिवत्)।

---

## मान्तवर्गः ।

**आप्ल्ट नौ कि व्यापने चिप् घञौ चिप्यौ नुदि चपिक् घञौ कुपक द्युतौ कुप्य दूर्कोपे कुपि कि स्तृतौ ।**

१। आप् ल्ट नौ कि व्यापने (आप, स्वा, चु, भ्वा, प) ल्ट— आपत्। न—आप्नोति कीर्त्तिर्ब्रह्माण्डम्। औ—आप्ता। कि— आपयति आपति। स्वराज्यं प्राप्स्यते भवानिति गणकृतानित्यत्वात्।

२। चिप् घञौ नुदि } (चिप, तुदा, उ)
२। चिप्यौ नुदि } (चिप, दिवा, प) नुदि प्रेरणे।
घ, ञ—चिपति चिपते शरं योधः। औ—चेप्ता। य—चिप्यति।

३। चपिक् घञौ (चम्प, चु, प) घञ्चिरिह चमा। इ, क— चम्पयति दुःखं मुनिः, सहते इत्यर्थः।

४। कुपक द्युतौ (कुप, चु, प) क—कोपयति।

४। कुप्य दूर्कोपे (कुप, दिवा, प) कोपो नेत्रलौहित्यादिहेतुश्चित्तविकारः। य—कुप्यति माता शिशवे। दूर्—अकुपत् अकोपीत्। अस्मान्नित्यं ङ इति दुर्गः। कदाचित् कुप्यते माता नोदरस्था हरीतकीति तु कुप्यतीति कुप्, सा इवाचरतीति ङेत्र साध्यम्।

४। कुपि कि स्तृतौ (कुम्प, चु, भ्वा, प) पञ्चमस्वरी। इ— कुम्पते। कि—कुम्पयति कुम्पति। स्तृतिराच्छादनम्।

**क्रपघञ ङ कृपायां ङ केप्ट गत्यां कपिङ्ङपि । चाले क्रप् कि युतौ चित्रे कृपूङ् वल्ट च कल्पने।**

५। कपघ ञ ङ कृपायाम् (कप, भ्वा, आ) कृपा दया।

य—क्लृपा, भीषिविभ्लीति ङे मनीषादित्वाद्रेफस्य ऋकारः ।
म—कृपयति । ङ—कृपते दयालुर्दीनम् ।

६ । ङ केपृ गत्याम् (केप, भ्वा, आ) ङ—केपते । चिकेपे ।
ङ—अचिकेपत् ।

७ । कपिङ्गपि चाले ( कम्प, भ्वा, आ ) चालः कम्पनम् ।
ङ—कम्पते । ङ—कम्पते वायुना दलः । अपियन्तात् केपृ च
( कम्पनार्थकः ) ।

८ । क्लृप कि युतौ चित्ते ( क्लृप, चु, भ्वा, प ) सप्तमस्वरी ।
कि—कल्पयति कल्पति । क्लृपः क्लृपोऽकृपादाविति क्लृपादेशः ।
( युतिर्मिश्रणम्, कल्पयति दुग्धं जलेन । चित्तं चित्रकरणम्,
कल्पयति प्रतिमां शिल्पी । न कल्पयति मिथ्यार्थं गिरः कल्पति
विद्विषामिति हलायुधः । ८३ ) ।

८ । क्लृपू ङ वङ्ग च कल्पने ( क्लृप, भ्वा, आ ) सप्तमस्वरी ।
कल्पनं सामर्थ्यम् । ङ—अकल्पिष्ट अक्लृप्त । ङ—योऽर्थिनामीप्सित-
मार्थी कल्पते कल्पवृक्षवदिति हलायुधः । ८३ । व—कल्प्स्यति
चिक्लृप्सति । ङ—अक्लृपत् । इते तस्मिन् प्रियं श्रुत्वा कल्पता
प्रीतिं परां प्रभुरित्यनेकार्थत्वे अन्तर्भूतण्यर्थत्वात् लनयितेत्यर्थः ।
चकारात् क्लृपङि च ।

## गुपू रक्षे गुपक् भासि गुपङ् गोपनकुत्सयोः ।

८ । गुपू रक्षे (गुप, भ्वा, प) एतदाद्याश्चत्वारः पञ्चमस्वरिणः ।
गोपायति गोपायते । आयान्तत्वादुभयपदमिति वोपदेवः । अत्रे
तु आयस्याप्राप्तिपक्षे परस्मैपदमेव । अगोपीत् जुगोपेत्यादि ।
जुगोप गोरूपधरामिवोर्वीमिति रघुः । २ । ३ । ङ—गोपियति
गोप्स्यति ।

७ । गुपक् भासि ( गुप, चु, प ) क—गोपयति । भासि दीप्तौ । ( धातूनामनेकार्थत्वादस्य गोपनार्थे बहुलप्रयोगः ) ।

८ । गुपङ् गोपनकुत्सयोः (गुप, भ्वा, आ) गोपनमपह्नवः । ङ—कष्टयाभानत्कारस्य किं गोपसे । अत्र त्यादयो न स्युरिति रमानाथः । कुत्सा निन्दा । सा जुगुप्साञ्चक्रेऽसूनिति भट्टिः । १४ । ५९ ।

## गुप्य दूर्व्याकुलत्वे ङ क्लेष्ट दैन्ये ङ गेष्ट च ।
## केष्टवत् चपक्म कल्के चप् सान्त्वे चुप् शनैर्गतौ ।

९ । गुप्य दूर्व्याकुलत्वे ( गुप, दिवा, प ) व्याकुलत्वं व्याकुलीभावस्तत्करणञ्च । य—धीरो न गुप्यति महत्यपि कार्य्यजाते इति हलायुधः । ६ । गुप्यति गां दृष्टिः, आकुलीकरोतीत्यर्थ इति चतुर्भुजः । इर्—अगुपत् अगोपीत् । अस्मान्नित्यं ङ इति दुर्गसिंहः ।

१० । ङ क्लेष्ट दैन्ये ( क्लेप, भ्वा, आ ) अन्तःस्थाद्यतीययुक्तः । ङ—क्लेपते निर्धनः सदा । ङ—अचिक्लेपत् ।

११ । ङ गेष्ट च केष्टवत् ( गेप, भ्वा, आ ) ङ—गेपते । ङ—अजिगेपत् । चकारात् 'ङ क्लेष्ट च' केष्टवत् गतिकम्पनयोः ।

१२ । चपक्म कल्के ( चप, चु, प ) कल्कश्चूर्णीकरणम् । क, म—चपयति तण्डुलान् शिला ।

१२ । चप् सान्त्वे ( चप, भ्वा, प ) सान्त्व. प्रियवचनम्, उपशमो वा । चपति पुत्रं माता ।

१३ । चुप् शनैर्गतौ ( चुप, भ्वा, प ) चोपति खञ्जः । चोपति दुष्टं राजा इति रमानाथः । (१) ।

---

(१) सर्व्वेष्वादर्शपुस्तकेषु चोपति दुष्टं राजा इति रमानाथ इति पाठो दृश्यते ।

**चुलुम्प् लोपे छपिक् सर्पे छुप् शौ स्पर्शे ज्ञपक् मतु ।**
**ज्ञप्तौ जप ह्वदुद्वारे जल्पच् वाचि टिपक् नुदि ।**

१४। चुलुम्प लोपे ( चुलुम्प, भ्वा, प ) चन्तःस्थातृतीयमध्यः, पञ्चमस्वरद्वयी, घोष्यवर्गीयोपोपधश्चायम् । चुलुम्पति । यगादौ चुलुम्प्यते इत्यादि । न च 'नकारजावनुस्वारपञ्चमा'विति स्वरस्थादस्य नप्रकृतित्वे यगादौ तल्लोप इति वाच्यम्, तर्हि नोपधस्यैव पठितुमुचितत्वात् (१)। एवं सति चङ्क्रादीनां नप्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न, ते तु कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः । न च तर्हि इदित्पाठेऽपीष्टसिद्धिरिति वाच्यम्, क्विपि संयोगान्तलोपे चुलुन्, चुलुम्पपाठे चुलुम् इति भेदात् । एवं सर्व्वत्र ।

१५। छपिक् सर्पे ( छम्प, चु, प ) इ, क—छम्पयति । सर्पो गतिः ।

१६। छुप् शौ स्पर्शे ( छुप, तुदा, प ) श—छुपति । शौ—छोप्ता ।

१७। ज्ञपक् मत ज्ञप्तौ ( ज्ञप, चु, प ) क, म—ज्ञपयति । "ज्ञप्तिर्मारणालोकनिशानस्तुतयः । ज्ञाक्म इत्यनेनैवेष्टसिद्धौ ज्ञपपाठश्चुरादिरुभयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थं" इति धातुप्रदीपः । वस्तुतस्तु ज्ञप्तिपदमस्यैव निष्पादितम् । तेन अनिर्दिष्टार्थत्वात् ज्ञप्तिरिह ज्ञानम् । अतएव मच्छौघ चीप्से इत्यत्र

---

रमानाथकृतमनोरमायान्तु चुप मन्दायां गताविन्यस्य व्याख्याने चोपति अनश इत्युदाहरणमस्तीति तच्च चिन्त्यम् ।

(१) युत युतिर स्यात् चरे इति हयोस्तालव्ययकारादिपाठेन तद्वचनस्य व्यभिचारदर्शनादिति च कश्चित् माह ।

८ । गुपक् भासि ( गुप, चु, प ) क—गोपयति । भासि दीप्तौ । ( धातूनामनेकार्थत्वादस्य गोपनार्थे बहुलप्रयोगः ) ।

८ । गुपङ् गोपनकुत्सयोः (गुप,भ्वा,आ) गोपनमपह्नवः । ङ—कङ्कणाभानत्कारस्य किं गोपसे । अत त्यादयो न स्युरिति रमानाथः । कुत्सा निन्दा । सा जुगुप्साप्रचक्रेऽङ्गनिति भट्टिः । १४ । ५८ ।

गुप्य दूर्व्याकुलत्वे ङ ग्लेष्ट दैन्ये ङ गेष्ट च ।
केष्टवत् चपक्म कल्के चप् सान्त्वे चुप् शनैर्गतौ ।

८ । गुप्य दूर्व्याकुलत्वे ( गुप, दिवा, प ) व्याकुलत्वं व्याकुलीभावस्तत्करणञ्च । य—धीरो न गुप्यति महत्यपि कार्य्यजाते इति हलायुधः । ६ । गुप्यति गा दृष्टिः, व्याकुलीकरोतीत्यर्थ इति चतुर्भुजः । इर्—अगुपत् अगोपीत् । अस्मान्नित्यं ङ इति दुर्गसिंहः ।

१० । ङ ग्लेष्ट दैन्ये ( ग्लेप, भ्वा, आ ) अन्तःस्थादृतीययुक्तः । ङ—ग्लेपते निर्धनः सदा । ह—अजिग्लेपत् ।

११ । ङ गेष्ट च केष्टवत् ( गेप, भ्वा, आ ) ङ—गेपते । ह—अजिगेपत् । चकारात् 'ङ ग्लेष्ट च' केष्टवत् गतिकम्पनयोः ।

१२ । चपक्म कल्के ( चप, चु, प ) कल्कश्चूर्णीकरणम् । क, म—चपयति तण्डुलान् शिला ।

१२ । चप् सान्त्वे ( चप, भ्वा, प ) सान्त्वः प्रियवचनम्, उपशमो वा । चपति पुत्रं माता ।

१३ । चुप् शनैर्गतौ ( चुप, भ्वा, प ) चोपति पङ्गुः । चोपति दुष्टं राजा इति रमानाथः । (१) ।

(१) सर्व्वेष्वादर्शपुस्तकेषु चोपति दुष्टं राजा इति रमानाथ इति पाठो दृश्यते ।

चुलुम्प् लोपे छपिक् सर्पे छुप् शौ स्पर्शे ज्ञपक् मतु ।
ज्ञप्सौ जप ह्रदुखारे जल्पच् वाचि टिपक् नुदि ।

१४ । चुलुम्प लोपे ( चुलुम्प, भ्वा, प ) अन्तस्थान्ततीयमध्यः, पञ्चमस्वरद्वयी, ओष्ठ्यवर्गशेषोपधश्चायम् । चुलुम्पति । यणादौ चुलुम्प्यते इत्यादि । न च 'नकारजावनुस्वारपञ्चमौ' इति स्वरघादस्य नप्रकृतित्वे यणादौ नल्लोप इति वाच्यम्, तर्हि नोपधस्यैव पठितुमुचितत्वात् (१) । एवं सति चकादीनां नप्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न, ते तु कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः । न च तर्हि इदित्पाठेऽपीष्टसिद्धिरिति वाच्यम्, क्विपि संयोगान्तलोपे चुलुन्, चुलुम्पपाठे चुलुम् इति भेदात् । एवं सर्वत्र ।

१५ । छपिक् सर्पे ( छम्प, चु, प ) इ, क—छम्पयति । सर्पै गतिः ।

१६ । छुपशौ स्पर्शे ( छुप, तुदा, प ) श—छुपति । औ—छोप्ता ।

१७ । ज्ञपक् मत ज्ञप्सौ ( ज्ञप, चु, प ) क, म—ज्ञपयति । "ज्ञप्तिर्मारणालोकनिशानस्तुतयः । आकम इत्यनेनैवेष्टसिद्धौ ज्ञपपाठश्चुरादिषु भयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थं" इति धातुप्रदीपः । वस्तुतस्तु ज्ञप्तिपदमस्यैव निष्पादितम् । तेन अनिर्दिष्टार्थत्वात् ज्ञप्तिरिह ज्ञानम् । अतएव प्रयुञ्जीत ज्ञीप्से इत्यत्र

---

रथानाधतनमनोरथावास्तु पुन मन्दायां गतायिस्वन व्याख्याने चोरति ध्वनन्नत्युदाहरणमस्तीति तत्त्वं चिन्त्यम् ।

(१) चुल चुलितिरस्मात् चरे इति इदोभावान्तमकारादिपाठेन तद्वचनं व्यभिचारदर्शनादिति च क्वचित् पाठः ।

यस्यैव समन्तस्य निपात्यते तेन चौम्यशब्देन घातुमिच्छतीति प्रतिपाद्यते । एवं ज्ञानपर्याये प्रतिपज्झुम्पिचेतना इत्यमरश्च ।

१८ । जप व्हद्मवारे (जप, भ्वा, प) जिह्वोष्ठादिव्यापाररहितं शब्दार्थयोश्चिन्तनं व्हद्मवारः । जपति मन्त्रं साधकः ।

१९ । जल्प च वाचि (जल्प, भ्वा, प) अन्तःस्थाद्‌तृतीयोपधः । जल्पति । चकारात् जप च ।

२० । टिपक् तुदि (टिप, चु, प) क—टेपयति । तुदि प्रेरणे ।

## डिप शिक्य दूर्च डिपि डिप् डप् डपिक्ङ्ञ संहतौ ।

२१ । डिप शिक्य दूर्च (डिप, तुदा, चु, दिवा, प) शि—डिपति, अडिपीत् । क—डेपयति । य—डिप्यति । दूर्—अडिपत् अडेपीत् । तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिपक्षे गुणः । दिवादिपक्षे पुषादित्वान्नित्यं ङ इत्यन्ये । चकारात् तुदि ।

२१ । डिपि कङ्ञ संहतौ (डिम्प, चु, उ)
२१ । डिप कङ्ञ संहतौ (डिप, चु, उ)
२२ । डप कङ्ञ संहतौ (डप, चु, उ)
२२ । डपि कङ्ञ संहतौ (डम्प, चु, उ) मूर्द्धन्यवर्गतृतीयाद्याः सर्व्वे । इ, क, ङ—डिम्पयते । ञ—डिम्पयति डिम्पयते । क, ङ—डेपयते । ञ—डेपयति डेपयते । क, ङ—डापयते । ञ—डापयति डापयते । क, ङ—डम्पयते । ञ—डम्पयति डम्पयते । पुनः पाठान्मध्यमौ नेदनुबन्धौ । एते आत्मनेपदिन इत्यन्ये । संहतीराशीकरणम् ।

## तप् ङञ् दाहे तप कच्च तपौ तप्यौङ् द्वैश्ययोः ।

२३ । तप् ङञ् दाहे (तप, भ्वा, उ) ङ—तपते । ञ—तपति तपते । अयमात्मनेपदीत्यन्ये ।

२३। तपक् च (तप, चु, प) क—तापयति। चकाराद्दाहे। अयमात्मनेपदीत्येके।

२३। तपी दवैश्वर्य्ययोः (तप, भ्वा, प) (१)

२३। तप्यीङ् दवैश्वर्य्ययोः (तप, दिवा, आ) दव उपतापः। तपति ततुगात्रि मदनस्तावाम्। औ—अताप्सीत्। य, ङ—तप्यते धनी, ईश्वरः स्यादित्यर्थः। औ—अतप्त। दिवादिपक्षे ऐश्वर्य्य एव इत्यन्ये।

तपू षमिङ् ह्रियि तिप ञक्षटङ ष्टुति तेपृङ।
कम्पे च टप कि सन्दीपे टप्र च प्रीणने ञिल्ट।
टप्यू च टप् षम् च लुप तुप् वधे तुप् षम् ल्लिपि।
वधे तुमिक् त्वर्हने प्राक् चतुष्को नोपधो न पित्।

२४। तपू षमिङ ह्रियि (तप, भ्वा, आ) ञ—अत्रपिष्ट अत्रप्त। ष—त्रपा। मि—त्रपयति त्रापयति। ङ—त्रपते। ह्रियि लज्जायाम्।

२५। तिप ञ क्षट ङ ष्टुति (तिप, भ्वा, आ) ञ—तेपिष्यते तेप्स्यते। क्षट—अतितेपत्। ङ—तेपते तितेपे। ष्टुत् क्षरणम्।

२६। तेपृङ कम्पे च (तेप, भ्वा, आ) क्षट—अतितेपत्। ङ—तेपते इत्यः। तितेपे। चकारात् ष्टुति च।

२७। टप कि सन्दीपने (टप, चु, भ्वा, प) कि—तर्पयति तर्पति।

---

(१) नान्येडितानुबन्धेष्विस्तुकोरत्त ङकारो न पूर्व्वस्यानुबन्धः, औकारस्य पुनरुक्तत्वादान्येडितानुबन्धत्वं बोध्यम्।

२७ । तृप्न च प्रीणने ( तृप, स्वा, प ) प्रीणनं प्रीतीकरणम् । न—तृप्नोति पितरं पुत्रः । ततर्प । चकारात् तृपकि च ( प्रीणनार्थकः ) योऽग्निलयं तर्पतीति हलायुधः । १० ।

२७ । जिङ तृप्य च ( तृप, दिवा, प ) जि—तृप्तोऽस्ति । ङ—अतृपत् । अस्य लिदित्त्वेऽपि कृप स्पृश स्मृशेत्यादिना पचे सि, तेन अतार्प्सीत् अत्राप्सीत् अतर्पीदित्यादि । य—तृप्यति । ऊ—तर्पिष्यति तर्प्स्यति । चकारात् प्रीणने । प्रीणनमिह प्रीतीभावः प्रीतीकरणञ्च । स्वन्दीनि तृप्यत मधूनि पिबन्निवायमिति श्रीहर्षः । पितॄनतार्प्सीन्नृपरक्ततोयैरिति भट्टिः । २ । ५२ ।

२७ । तृप प श च ( तृप, तुदा, प ) प, श—तृम्पति । ततर्प । चकारात् प्रीणने ।

२८ । तुप वधे } ( तुप, भ्वा, प )

२८ । तुप वधे } ( तुप, भ्वा, प ) तोपति । तोपति ।

२८ । तुप पश क्षिपि वधे ( तुप, तुदा, प ) प, श—तुम्पति । तुतोप ।

२८ । तुपिक् त्वर्हने ( तुम्प, चु, प ) पञ्चमस्वरी । इ, क—तुम्पयति । अर्हनं वध' ।

प्राक् चतुष्को नोपधो न पित् ।

तुपिकः पूर्व्वं चत्वारो ये धातव स्ते नकारोपधा भूत्वा पकारेतो न स्युरित्यर्थः । यथा—

३० । तृन्प श प्रीणने ) ( तृन्प, तुदा, प )

३१ । तुन्प वधे ( तुन्प, भ्वा, प )

३२ । तुन्प वधे ( तुन्प, भ्वा, प )

३२ । तुन्प श क्षिपि वधे ) ( तुन्प, तुदा, प ) इति ।

प्रीणनमिह प्रीतीभावः । अ—तृम्पति लाभात्तोकः । ततम्प । तृम्पति । तृम्पति । अ—तृपति । ततृम्प । तृप पश, तृम्प अ क्विगि वधे इत्येताभ्यां तृम्पति तृपतीति रूपद्वयसिद्धौ तृम्प वधे इत्यस्य भ्वादौ पाठस्तु वेदे अवन्तस्य शान्तस्य च उच्चारणभेदार्थः ।

दीपोङ्‌अ ऋ दीपने ञि दृपू दृर् ह्र्षगर्व्वयोः ।

३३ । दीपोङ्‌अ ऋ दीपने (दीप, दिवा, आ) दीपनमुज्ज्वलीभावः । ई—दीप्तः । ङ, य—दीप्यते निशि चन्द्रमाः । ऋ—अदीदिपत् अदिदीपत् ।

३४ । ञि दृपू दृर् हर्षगर्व्वयोः (दृप, दिवा, प) ञि—दृप्तोऽस्मि । य—दृप्यति । ऊ—दर्पिष्यति दर्प्स्यति (यद्रौऽकि दित्यनेन द्रप्स्यतीत्यपि) । दृर्—अदृपत् अदर्पीत् अद्राप्सीत् अदार्प्सीत् ।

दृप् कि सन्दीपने दृपृअ वाधने दृम्प दिम्प ञङ् ।
क सङ्घाते धूप्क दीप्तौ धूप् तापे पुप्फ फुल्लने ।

३४ । दृप् कि सन्दीपने (दृप्, चु, भ्वा, प) कि—दर्पयति दर्पति ।

३४ । दृप अ वाधने (दृप, तुदा, प) अ—दृपति, दर्पिता । वाधनं विहतिः ।

३५ । दृम्प ञ ङ क सङ्घाते } (दृम्प, चु, उ)
३६ । दिम्प ञ ङ क सङ्घाते } (दिम्प, चु, उ) द्वावोष्ठ्यवर्गयोपधौ, क्रमात् सप्तमतृतीयस्वरिणौ च । ञ, क—दृम्पयति दृम्पयते । दिम्पयति दिम्पयते । सङ्घातो राशीकरणम् । ङ—दृम्पयते दिम्पयते । एतौ कैश्चिन्न मन्येते ।

३७। धूपक् दीप्तौ (धूप, चु, प) षष्ठस्वरी। क—धूपयति।

३७। धूप तापे (धूप, भ्वा, प) षष्ठस्वरी। धूपायति धूपायते। आयान्तत्वादुभयपदमिति बोपदेवः। मतेतु आयस्याप्राप्तिपक्षे परस्मैपदमेव। अधूपीत् दुधूपेत्यादि। तापः सन्तापीकरणम्।

३८। पुष्प फुल्लने (पुष्प, दिवा, प) पञ्चमस्वरी, मूर्द्धन्योपधश्च। फुल्लनं विकसनम्। य—पुष्प्यति कुन्दकोरकः।

ङ मेप गत्यां युप् रूप्य दुर्विमोहेऽथ रप् वदे।

३९। ङ मेप गत्याम् (मेप, भ्वा, आ) ङ—मेपते मिमेपे। ऋद—अमिमेपत्।

४०। युप्य दुर्विमोहे } (युप, दिवा, प)
४१। रूप्य दुर्विमोहे } (रूप, दिवा, प) आद्योऽन्तःस्थाद्यादिः। विमोह आकुलीकरणम्। य—युप्यति, रूप्यति लोक ग्रोकः। इर्—अयुपत् अयोपीत्। अरुपत् अरोपीत्। आभ्यां नित्यं ङ इति दुर्गः।

४२। अथ रप् वदे (रप, भ्वा, प) रपति। वदः कथनम्।

ङ रेप शब्दे लेपङ्च गमने ञि लिपौ शपञ।
लेपे लुपृश् लुञौ छेदे दुर्लुप्य युपि ऋटलप।
भापे व्यप्क च्ये विपक क्षेपे द्व ङ वेप् चले वपौञ्।
ङ्कै सुराङतन्तुवीजोप्तौः शूर्पक् माने य शपशपौञ्।
क्रोशे प्वपौ चलु ञि शये ष्टिप ष्टेप ङ तु स्रुगति।

४३। ङ रेट शब्दे ( रेप, भ्वा, आ) ङ—रेपते। रिरेपे। चङ—अरिरेपत्।

४४। लेट ङ च गमने ( लेप, भ्वा, आ ) चङ—अलिलेपत्। ङ—लेपते। लिलेपे। चकारात् ङरेट च ( गमनार्थकः )।

४५। ञि लिपौ श पञ लेपे ( लिप, तुदा, उ ) ञि—लिप्तोऽस्ति। औ—लेप्ता। श, प, ञ—लिम्पति लिम्पते चन्दनेन गात्रं सुखी।

४६। लुपॢ शपॢञौ छेदे ( लुप, तुदा, उ ) ऋ—अलूलुपत् अलुलोपत्। श, प, ञ—लुम्पति लुम्पते। ऌ—अलुपत्। औ—लोप्ता।

४६। इर्लुप य युपि ( लुप, दिवा, प ) इर्—अलुपत् अलोपीत्। अस्मान्नित्यं ङ इति दुर्गः। य—लुप्यति। युपि ( इच ) आकुलीभावे। मातुं लुप्यति लावण्यं नेत्रञ्जलिपुटैर्नर इति हलायुधः। १७३।

४७। ऋ लप भाषे (लप, भ्वा, प ) ऋ—अलीलपत् अललापत्। भाषः कथनम्।

४८। व्यपक् क्षये ( व्यप, चु, प ) अन्तःस्थाद्ययुक्तः। क—व्यापयति।

४९। क्षिप् क क्षेपे ( क्षिप, चु, प ) क—क्षेपयति।

५०। टुऋङ् वेप चले ( वेप, भ्वा, आ ) चलः कम्पनम्। टु—वेपथुः। चङ—अविवेपत्। ङ—वेपते वायुना द्रुमः।

५१। वपौञ् ड्व मुण्डतन्तुवीजोप्तयोः (वप, भ्वा, उ) औ—वप्ता। ञ—वपति वपते। ड्व—उप्त्रिमम्। ऐ—उप्यात्। मुण्डो लोमच्छेदः, वपति मस्तकं नापितः। तन्तुवीजयोरुप्तिः तन्तु-

यीजोभिः। वपति तन्तुं तन्तुवायः। यदि वपति कृषाणः चेत्र-माखाद्य बीजमिति।

५२। शूर्पक् माने (शूर्प, चु, प) षष्ठस्वरी। क—शूर्पयति धान्यं स्टही।

५३। ष शपौ ञ कोशे } (शप, दिवा, उ)

५३। शपौ ञ कोशे } (शप, भ्वा, उ) तालव्यादी। य, ञ—शप्यति शप्यते। औ—शप्ता, अशाप्सीत्। ञ—शपति शपते। क्रोशो दिवादिपक्षे उक्तिविशेषः। निर्भर्त्सनमिति चतुर्भुजः। सन्वशपोऽसौ शपथानशप्यदिति भट्टिः। २। ३२। भ्वादिपक्षे गालिदानम्। शपतेर्ञित्त्वेऽपि शपथार्थीर्गत्यनुकारे इति नियमात् शपथे आत्मनेपदम्, अन्यत्र परस्मैपदम्। कृष्णाय शपते गोपी(१)। प्रजेति त्वा शशाप सा इति रघुः। १। ७७। सख्यः शपामि यदि किञ्चिदपि स्मरामीति तु शरीरस्पर्शनाभावादिति पाणिनीयाः। केचित्तु शपथे नित्यमात्मनेपदमन्यत्र विभाषयेत्याहुः, तेन प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते इति माघः। १६। २५।

५४। ष्वपौ ञ्लुञि शये (स्वप, अदा, प) वकारयुक्तमूर्द्धन्यादिः। औ—अस्वाप्सीत्। ञ, लु—स्वपिति। ञि—सुप्तोऽस्मि। शयः शयनम्।

५५। ष्टिप्ङ क्षरति } (ष्टिप, भ्वा, आ)

५६। ष्टेपृङ क्षरति } (ष्टेप, भ्वा, आ) ऋट—अतिष्टेपत्। ङ—स्तेपते। तिष्टिपे, तिष्टेपे। क्षरत् चरणम्।

---

(१) कस्यचित् शरीरं स्पृष्टा मया एतत् कृतमिति दिव्येन कृष्णं स्वाभिप्रायं विज्ञापयितुमिच्छतीत्यर्थः। पुत्रादिशरीरस्पर्शनादिना मिथ्यानिरसनं शपथः।

ष्टूप् कोच्छ्राये ष्टूप्य इर्चे षप् सम्बे सादयस्त्रयः ।

५७। ष्टूप् कोच्छ्राये (ष्टूप, चु, प) षट्स्वरी। उच्छ्रायो राशीकरणम्। क—स्तूपयति धान्यं कृषकः। तुष्टूपयिषति।

५७। ष्टूप्य इर्चे (ष्टूप, दिवा, प) षट्स्वरी। य—स्तूप्यति। इर्—अस्तूपत् अस्तूपीत्। अस्मान्नित्यं ङ इति दुर्गः। अतुष्टूपत्। चकारादुच्छ्राये।

५८। षप सम्बे (षप, भ्वा, प) मूर्द्धन्यादिः। सपति। असीषपत्। सम्बः सम्बन्धः। (१)।

सादयस्त्रयः।

ष्टूपकादयस्त्रयो दन्त्यसादयश्च स्युरित्यर्थः। (२)।

५९। स्तूपकोच्छ्राये (स्तूप, चु, प) तुस्तूपयिषति। (३)।

५९। स्तूप्य इर्चे (स्तूप, दिवा, प) अतुस्तूपत्।

६०। सप सम्बे (सप, भ्वा, प) असीसपत्।

स्तेपक चेपे स्ट सृपौ गत्यां क्षेटङ च क्षपक् ।
भाषणे स्युः पकारान्ताश्चतुःषष्टिस्तु धातवः ।

६१। स्तेपक् चेपे (स्तेप, चु, प) एकादशस्वरी। क—स्तेपयति। तिस्तेपयिषति।

६२। स्ट सृपौ गत्याम् (सृप, भ्वा, प) स्ट—असृपत्। अस्य

---

(१) सम्ब इति सम्बक् सम्बन्धे इत्यस्य घञि रूपम्।

(२) त्रय इति प्रथमोपस्थितपरित्यागे प्रमाणाभावात् अव्यवहितास्त्रय एव इमे ष्टूपकादय इति बोध्यम्।

(३) अत्र जिघ्नो ठेरिति नियमेन षत्वप्रसक्तेऽपि दन्त्यसादिपाठबलान्न षत्व-मिति बोध्यम्।

१९। चुबि कि चुम्बने (चुम्ब, चु, भ्वा, प) चुम्बनं मुखसंयोगः। द्र—चुम्ब्यते। कि—चुम्बयति चुम्बति कान्ताधरं कामी। प्रिया-मुखं किम्पुरुषश्चुचुम्बे इति तु व्यतीहारे आत्मनेपदम्।

२०। डबिक् नोदे (डम्ब, चु, प)

२१। डिबिक् नोदे (डिम्ब, चु, प) द्वौ मूर्द्धन्यवर्ग-तृतीयादी। द्र, क—डम्बयति, डिम्बयति। नोदः प्रेरणम्।

२२। तुबि कि तु अर्द्दे (तुम्ब, चु, भ्वा, प) तवर्गाद्यादिः पञ्चमस्वरी। द्र—तुम्ब्यते। कि—तुम्बयति तुम्बति। अर्द्दो वधः।

२३। तर्ब गतौ (तर्ब, भ्वा, प)

२४। तम्ब गतौ (तम्ब, भ्वा, प)

२५। नर्ब गतौ (नर्ब, भ्वा, प)

२६। नम्ब गतौ (नम्ब, भ्वा, प)

२७। पर्ब गतौ (पर्ब, भ्वा, प)

२८। पम्ब गतौ (पम्ब, भ्वा, प) आद्यतृतीयपञ्चमा रेफोपधाः शेषा ओष्ठवर्गशेषोपधाः। तर्बति, तम्बति, नर्बति, नम्बति, पर्बति, पम्बति।

पूर्बक् निकेतने वर्ब वम्ब मर्ब मम्ब रिबि।
रबि गत्यां रबिङ् शब्दे लबिङ स्रंसने च कि।
लुब्यर्द्दने शम्ब गतौ शर्ब हिंसे च शुल्ब क।
माने सर्गे पर्ब पम्ब सर्ब सम्ब तु सर्पणे।

२९। पूर्बक् निकेतने (पूर्ब, चु, प) पञ्चस्वरी। निकेतन-मिह निमन्त्रणं निवासो वा। क—पूर्बयति द्विजान् भोक्तुं गृही। पूर्बयति तीर्थे साधुः।

३० । वर्वँ गत्याम् ) (वर्व, भ्वा, प )
३१ । वम्ब गत्याम् (वम्ब, भ्वा, प )
३२ । मर्वँ गत्याम् (मर्व, भ्वा, प )
३३ । मम्ब गत्याम् (मम्ब, भ्वा, प)
३४ । रिबि गत्याम् (रिम्ब, भ्वा, प )
३५ । रबि गत्याम् ) (रम्ब, भ्वा, प ) आद्यतृतीयौ रेफोपधौ, द्वितीयचतुर्थावोष्ठवर्गशेषोपधौ । वर्वति, वम्बति, मर्वति, मम्बति । द्रू—रिम्ब्यते । द्रू—रम्ब्यते ।

३५ । रबिङ् शब्दे ( रम्ब, भ्वा, आ ) द्रू—रम्ब्यते । ङ—रम्बते ।

३६ । लबिङ स्रंसने च ( लम्ब, भ्वा, आ ) द्रू—लम्ब्यते । ङ—लम्बते । स्रंसनमिहावलम्बनमिति गोविन्दभट्टः । ननाद चरणायुधस्तदपि मौनमालम्बसे इति । चकारात् शब्दे च ।

३७ । कि लुब्यर्द्दने (लुम्ब, चु, भ्वा, प ) पञ्चमस्वरी । कि—लुम्बयति लुम्बति । द्रू—लुम्ब्यते । अर्द्दनं वधः ।

३८ । शम्ब गतौ (शम्ब,भ्वा,प) ओष्ठवर्गशेषोपधः । शम्बति ।

३९ । शर्व हिंसेच ( शर्व, भ्वा, प ) शर्वति । चकारात् गतौ ।

४० । शुल्वक माने सर्गे ( शुल्व, चु, प ) पञ्चमस्वरी, तालव्यादिरन्तःस्थतृतीयोपधः । सर्गः सृष्टिः । क—शुल्वयति वेधाः पृथिवीं, परिमाति सृजति वेत्यर्थः ।

४१ । षर्व सर्पणे ) ( षर्व, भ्वा, प )
४२ । षम्ब सर्पणे ( षम्ब, भ्वा, प )
४३ । सर्व सर्पणे ( सर्व, भ्वा, प )
४४ । सम्ब सर्पणे ) ( सम्ब, भ्वा, प ) द्वावाद्यौ मूर्द्ध-

न्यादी, शेषौ इन्व्यादी, द्वितीयचतुर्थावोष्ठ्यवर्गशेषोपधौ। सम्बति, सम्भति। सिषम्बयिषति, सिषम्भयिषति। सिसम्बयिषति, सिसम्भयिषति। (एतैस्त्रिसनन्तोदाहरणैः षोपदेशाषोपदेशपाठफलं दर्शितम्)।

## सम्ब साम्बक सम्बन्धेऽपञ्चाः पञ्चाशदन्तवाः।

४४। सम्बक सम्बन्धे } (सम्ब, चु, प)
४५। साम्बक सम्बन्धे } (साम्ब, चु, प) द्वावोष्ठ्यवर्गशेषोपधौ, शेषो द्वितीयस्वरौ। क—सम्बयति साम्बयति धनं लोकः, बध्नातीत्यर्थः। आद्यस्तालव्यादिरिति धातुप्रदीपः, मूर्द्धन्यादिरप्येके।

अपञ्चाः पञ्चाशदन्तवाः।

(अन्तवाः अन्ते वो येषां ते वकारान्ता धातव इत्यर्थः।) अपञ्चाः न विद्यन्ते पञ्च यत्रेति संख्याया डोऽबहोरिति ड.। (तादृशः पञ्चाशत्) पञ्चचत्वारिंशदित्यर्थः।

---

## भान्तवर्गः।

### अभिङ् ध्वनावुन्भ पुभ् श पूर्त्तौ लुभ् स्तङ सम्भ्रमे।

१। अभिङ् ध्वनौ (अम्भ, भ्वा, आ) इ—अम्भते। ङ—अम्भते।

२। उन्भ पश पूर्त्तौ } (उन्भ, तुदा, प)
३। उभ् श पूर्त्तौ } (उभ, तुदा, प) द्वौ कुशादी।

प, श—उम्नाति (उपसृष्टनो लोप इति नलोपे पुनर्संचा-दित्वान्नुण्)। श—उभति कुम्भं जलेन लोकः। उम्भामास। उवोभ।

४। क्षुभ् ऌङ सञ्चले (क्षुभ, भ्वा, आ) ऌ—अक्षुभत्। ङ—क्षोभते नानुजीविषु इति हलायुधः। ५६।

क्षुभ्यग् च गल्भङ् धृष्टत्वे चीभ्टङ् कत्थे जभिक् नशि।

४। क्षुभ्यग् च (क्षुभ, दिवा, क्रा, प) य—यः क्षुभ्यति रिपुष्वेवेति हलायुधः। ५६। ग—क्षुभ्नाति। चुक्षोभ। चकारात् सञ्चलने।

५। गल्भङ् धृष्टत्वे (गल्भ, भ्वा, आ) अन्तःस्थतृतीयो-पधः। ङ—गल्भते लोकः, प्रगल्भ' स्यादित्यर्थः।

६। चीभ्टङ् कत्थे (चीभ, भ्वा, आ) कत्थः प्रशंसा। अट—अचिचीभत्। ङ—चीभते गुणिनं गुणी। ओष्ठ्यवर्गादि-द्वयमित्येके। (वीभ इत्यर्थः)।

७। जभिक् नशि (जम्भ, चु, प) नशीति भस्तर्भूत-ण्यर्थत्वात् नष्टीकरणे। इ, क—जम्भयति पापं गङ्गा।

जभि जभ् यभने जभ्ङ जृम्भे जभजृभिङ् चर्ण्डी।
जृभ्च डभ् डिभिञक् सङ्घे णभ्यग् हिंसेऽग्य णभ् तुभ्ऌ।
ङच तुभ्यग् च कि दृभी भये ग्री दृभ् कि गुम्फने।

७। जभि यभने } (जम्भ, भ्वा, प)
७। जभ यभने } (जभ, भ्वा, प) यभनं मैथुनम्। इ—जम्भते। जम्भति, जभति युवा।

७। जभङ जृम्भे (जभ, भ्वा, आ) जृम्भो गात्रशैथिल्य-

मिति गोविन्दभट्टः । ङ—जम्भते लोकः । तुणजभोऽचीति अस्यैव तुण्, आत्मनेपदप्रकरणे तत्सूत्रविधानसामर्थ्यात् ।

७ । जभि ङ च } ( जम्भ, भ्वा, चा )
८ । जृभि ङ च } ( जृम्भ, भ्वा, चा ) ग्रेषः सप्तमस्वरी ।

ङ—जम्भते, जृम्भते । चकारात् जृम्भे । मत्यूपकाले भुजगाङ्गनाना सुखेषु कालः प्रतिजृम्भतीवेति गणकृतानित्यत्वात् ।

८ । ञी जृभ् च (जृभ, भ्वा, चा) ङ—जर्भते । ई—जृब्धः । चकारात् जृम्भे ।

९ । डभि अक सङ्घे } ( डम्भ, चु, उ )
१० । डिभि अक सङ्घे } ( डिम्भ, चु, उ ) द्वौ सर्वन्यवर्गतृतीयादी । इ, ञ, क—डम्भयति डम्भयते । डिम्भयति डिम्भयते । एतावात्मनेपदिनाविति केचित् । सङ्घो राशीकरणम् ।

११ । णभ्य ग हिंसे ( णभ, दिवा, क्रया, प ) य—नभ्यति । ग—नभ्नाति ।

११ । अथ णभ् लङ च } ( णभ, भ्वा, चा )
१२ । तुभ् लङ च } ( तुभ, भ्वा, चा ) लङ—अनभत् । अतुभत् । ङ—नभते । तोभते । चकाराद्धिंसे ।

१२ । तुभ्यग् च ( तुभ, दिवा, क्रया, प ) य—तुभ्यति । ग—तुभ्नाति । तुतोभ । चकाराद्धिंसे ।

१३ । कि दृभी भये ( दृभ, चु, भ्वा, प ) कि—दर्भयति, दर्भति । ई—दृब्धः । रामस्तु दृ भी इति धातुद्वयं मत्वा दारयति दरति, भाययति भयतीत्याह ।

१३ । गी दृभ् कि गुम्फने ( दृभ, तुदा, चु, भ्वा, प ) ग—दृभति । ई—दृब्ध । कि—दर्भयति, दर्भति । गुम्फनं ग्रन्थनम् ।

**दन्भुन् दम्भे दन्भ दिन्भ कङ् सङ्घातेऽथ दिभ् दभि।**
**दभक् नोदे भर्भ हिंसे यभौ मैथुन ईरितः।**

१४। दन्भु न दम्भे ( दन्भ, स्वा, प ) दम्भः परवञ्चना-हेतुव्यापारः। उ—दम्भित्वा दब्ध्वा। न—दभ्नोति खलः, छल-यतीत्यर्थः।

१४। दन्भ क ङ सङ्घाते ( दन्भ, चु, आ )
१५। दिन्भ क ङ सङ्घाते ( दिन्भ, चु, आ ) क, ङ—दम्भयते, दिम्भयते। सङ्घातो राशीकरणम्।

१६। अथ दिभिक् नोदे ( दिन्भ, चु, प )
१७। दभिक् नोदे ( दन्भ, चु, प )
१७। दभक् नोदे ( दभ, चु, प ) इ, क—दिम्भयति, दम्भयति। क—दाभयति। नोदः प्रेरणम्।

१८। भर्भ हिंसे ( भर्भ, भ्वा, प ) रेफोपधः। भर्भति।

१९। यभौ मैथुन ईरितः ( यभ, भ्वा, प ) औ—ययाभीत्। यभति युवा।

**रभौङ स्यात्तु राभस्ये रभिङ् शब्दे ङ रेभृ च।**

२०। रभौङ स्यात्तु राभस्ये ( रभ, भ्वा, आ ) राभस्य-मुत्सुकीभावः। निर्विचारप्रवृत्तिरितिगोविन्दभट्टः। औ—रब्धा। ङ—रभते साधुः पुण्ये। आङ्पूर्व्वोऽयमारम्भे। शास्त्रं पठितुमार-भते *शिष्यः*।

२०। रभिङ् शब्दे ( रम्भ, भ्वा, आ ) इ—रम्भते। ङ—रम्भते।

२१ । ङ रेभृ च ( रेभ, भ्वा, आ ) ङ—रेभते । रिरेभे । ऋट—अरिरेभत् । चकारात् शब्दे ।

**लभिङ् शब्दे लभ डुौ पङ् प्राप्तौ श लुभ विमोहने ।**

२२ । लभिङ् शब्दे ( लम्भ, भ्वा, आ ) ङ—लम्भते । ङ—लम्भते ।

२२ । लभ डुौपङ् प्राप्तौ ( लभ, भ्वा, आ ) डु—लब्धिमम् । औ—लब्धा । प—लभा । ङ—लभते । लभन्ति पुनरुत्थानमिति गणकृतानित्यत्वात्, पचादित्वादनि लभा इवाचरन्तीति क्वौ वा साध्यम् ।

२३ । श लुभ विमोहने ( लुभ, तुदा, प ) श—लुभत्यात्मनि (१) कामेचेति हलायुधः । २६५ । लोभिता लोब्धा ।

**लुभ्येगार्ध्येङ् वलुभ भुक्तौ शीभृ शल्भ ङ कत्थने ।**

२३ । लुभ्येगार्ध्ये ( लुभ, दिवा, प ) गार्ध्यमाकाङ्क्षा । य—लुभ्यति धनं लुब्धः । इर—अलुभत् अलोभीत् । यमान्नित्यं ङ इति दुर्गः । लोब्धा लोभिता ।

२४ । ङ वलुभ भुक्तौ ( वलुभ, भ्वा, आ ) अन्तःस्थादृतीयोपधः । भुक्तिर्भक्षणम् । ङ—वलुभते अन्नं लोकः ।

२५ । शीभृङ कत्थने ( शीभ, भ्वा, आ )

२६ । शल्भङ कत्थने ( शल्भ,भ्वा,आ ) शेषोऽन्तःस्थादृतीयोपधः । ऋट—अशिशीभत् । ङ—शीभते, शल्भते । कत्थनं प्रशंसा ।

**शुभल्टङ् दीप्तौ शुभ प शुन्भश् पुन्भ च पिन्भु च हिंसने ।**

---

(१) लुभत्यर्थे चेत्यपि पाठ ।

२७। शुभ ल्ङ् दीप्तौ ( शुभ, भ्वा, आ ) ल्ङ—अशुभत्। ङ—शोभते। न शोभति सभामध्ये इति गणकृतानित्यत्वात्, मघादित्वादनि शोभइवाचरतीति क्वौ वा साध्यम्।

२७। शुभ णश दीप्तौ ( शुभ, तुदा, प )
२८। शुन्भ श दीप्तौ ( शुन्भ, तुदा, प )
२९। पुन्भ च ( पुन्भ, भ्वा, प ) छायादौ तालव्यादी, शेषो मूर्द्धन्यादिः। त्रयः पञ्चमस्वरिणः। प, श—शुम्भति। शुशोभ। श—शुम्भति। शुशुम्भ। सुम्भति। चकाराद्दीप्तौ। माधवस्तु भ्वादौ च शुभ शुम्भ भासनहिंसनयोरिति पठन्ति।

३०। षिन्भु च हिंसने ( षिन्भ, भ्वा, प ) उ—सिम्भित्वा सिब्ध्वा। चकारात् पूर्व्वाच ( पूर्व्वे त्रयो धातवोऽपि हिंसार्थका इत्यर्थः )।

टुभु टभि स्तभिङ् स्तम्भे स्कभिङ् च स्तन्भुङ स्मृतः।
प्रमादे ल्ट स्तन्भुङ विश्वासे खिन्भ स्टभ खिभु।
हिंसे सुन्भ द्युतौ चैकोनचत्वारिंशदन्तभाः।

३१। टुभु ङ स्तम्भे ( टुभ, भ्वा, आ )
३२। टभि ङ स्तम्भे ( टन्भ, भ्वा, आ )
३३। स्तभि ङ स्तम्भे ( स्तन्भ, भ्वा, आ ) शेषो दन्त्यादिः। उ—स्तोभित्वा स्तुब्ध्वा। ङ—स्तोभते। इ—स्तम्भते। ङ—स्तम्भते। इ—स्तम्भते। ङ—स्तम्भते। तुष्टोभयिषति। तिष्टम्भयिषति। तिस्तम्भयिषति। इकारस्योभयत्र पाठात् पूर्व्वो नेदनुबन्धः। ननु आम्रेडितानुबन्धेऽप्यत्र कथं पूर्व्वो ङिदितिचेत् सत्यम्। अत्र इकारस्य पुनरुक्तिः पूर्व्वेण सम्बन्धनिषेधार्थैव, ङितस्तु सर्व्वे, एक एवेत् पाठबलादाध्य इतिवत् (१)। स्तम्भो जडीभावो

(१) एतद्दोषं ।।७ सस्वरूपले सुखङ च, सुविङ च इत्युभयोर्थ्यांस्थाने विहतम्।

जड़ीकरणञ्च, स्तम्भौ स्थूणाजड़ीभावावित्यमरोक्तेः, शीतेनावष्टम्भो जड़ीकृत इत्यर्थ इति कमदीश्वरोक्तेश्च । शास्त्रेण स्तोभते श्रुयो लघुप्रकृतिको नर इति हलायुध. । १२८ । स्तोभते हमं शीतो वायुरिति चतुर्भुजः । स्तम्भ इह क्रियानिरोध इति भीमः । दोष दृश्चिरिति गोविन्दभट्टः । शेषयोः पक्षे स्तम्भो स्तब्धीकरणञ्च । स्तम्भते कवाटेन द्वारं लोकः ।

३४ । स्कभिङ च ( स्कनृभ, श्वा, श्रा ) चकारात् स्तम्भे, स चेह स्तब्धीकरणम् । इ—स्कम्भते । ङ—स्कम्भते कवाटेन द्वारं लोकः । चस्कम्भे ।

३५ । स्रम्भु ङ श्लतः प्रमादे ( स्रन्भ, श्वा, श्रा ) प्रमादोऽनवधानता । उ—स्रम्भित्वा स्रब्ध्वा । ङ—स्रम्भते धर्मे नीचः ।

३५ । ऌ स्रम्भु ङ विश्वासे ( स्रनृभ, श्वा, श्रा, श्यां प ) विश्वासः शङ्काराहित्यभावः । ऌ—अस्रभत् । उ—स्रम्भित्वा स्रब्ध्वा । ङ—स्रम्भते पुत्रो मातरि । तालव्यादिरयमित्येके ।

३६ । ष्विन्भु हिंसे ( ष्विन्भ, श्वा, प )
३७ । ष्कभु हिंसे ( ष्कभ, श्वा, प )
३८ । ष्विभु हिंसे ( ष्विभ, श्वा, प ) श्राद्यन्तौ रेफयुक्ततृतीयस्वरिणौ, मध्यमः सप्तमस्वरी । उ—ष्विम्भित्वा ष्विब्ध्वा । सभित्वा स्कब्ध्वा । ष्वेभित्वा ष्विब्ध्वा । ष्विम्भति, सर्भति, ष्वेभति ।

३८ । सुम्भ शुतौ च (सुन्भ, श्वा, प) पञ्चमस्वरी । सुम्भति । चकाराद्धिंसे च ।

## एकोनचत्वारिंशद्दन्तभाः ।

( अन्ते भो येषां ते, भकारान्ता धातव इत्यर्थः ।

---

**अम् गतौ भजने शब्देऽमक् रोगे कमुकङ् स्पृहि।**

१। अम गतौ भजने शब्दे (अम, भ्वा, प) अमति। (अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिवेति हलायुधः। १८०)।

१। अमक रोगे (अम, चु, प) क—आमयति व्याधिर्लोकम्।

२। कमुकङ् स्पृहि (कम, चु, आ) उ—कमित्वा कान्त्वा। क, ङ—कामयते। अन्यैर्भ्वादौ पठ्यमानस्याप्यस्य कित्करणं कम ऋत इत्यादिना विहितस्य ञिङोऽज्ञापनार्थं, तेन अरे ञिङो-ऽप्राप्तिपक्षे अचकमत चकमे कमितेत्यादि। (निष्क्रष्टुमर्थं चमके कुवेरादिति रघुः। ५। २६)।

**ञि क्लम्य क्लमु भिर्ग्लानौ क्रम्य क्रमु गतौ चमु।**
**दूर्ध्य मर्षे चमूङ् ञिप् च कुम्भ कङ मतौच्चिते।**
**कुक्षित्यौ गमॢ गत्यां चम नचम छम् जम जिम् भसु।**
**भक्षे शमौ शब्दनत्योस्तिमृतीम्य क्लेदने तमु।**
**दूर्ध्य खेदेच्छयोर्दमम्यु दूर् शमे द्रम् गतौ भ्रमिर्।**
**भ भ्रम्य भ्रमु जण् चाले भामङ् क्रोधे ऋट मीम गतौ।**
**शब्दे यमौ ङ विरतौ यमक्मि परिवेषणे।**
**तटभावे रमुङ जौ क्रीड़ेण् जुटु वमुद्गिरि।**

२। ञि क्लम्युभिर्ग्लानौ } (क्लम, दिवा, प)
३। क्लमुभिर्ग्लानौ } (क्लम, भ्वा, प) द्वावन्तःस्था-तृतीययुक्तौ। ञि—क्लान्तोऽस्ति। य, भ—क्लाम्यति। उ—

( मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी । क्रियासमभिहारेण विराध्यन्तं क्षमेत क इत्युभयत्र माघः । २ । ४३ )।

५ । कुस्म कुड मतीक्षिते कुस्मिति ( कुस्म, चु, आ ) ह्रस्वो-दन्त्योपधः । मतीक्षितं बुद्धिपूर्वकदर्शनम् । कुस्मित् कुत्सितमीषद्धास्यम् । क, ङ—कुस्मयते जनः, कुद्या पश्यति, कुत्सितं स्मयते वेत्यर्थः । चुकुस्मयिषते ।

७ । औ गम्लृ गत्याम् ( गम, भ्वा, प ) औ—गन्ता । ऌ—अगमत् । गतिरुत्तरदेशसंयोगफलकव्यापारः ।

८ । चमु नद भक्षे ( चम, स्वा, प )
८ । चमु भक्षे ( चम, भ्वा, प )
९ । छमु भक्षे ( छम, भ्वा, प )
१० । जमु भक्षे ( जम, भ्वा, प )
११ । जिमु भक्षे ( जिम, भ्वा, प )
१२ । झमु भक्षे ( झम, भ्वा, प ) पठेते । न—चम्नोति । र—वैदिकः । उ—चमित्वा चान्त्वा । चमति । उ—छमित्वा छान्त्वा । जमित्वा जान्त्वा । जेमित्वा जीन्त्वा । झमित्वा झान्त्वा ।

१३ । णमौ शब्दनत्योः (णम, भ्वा, प) औ—नन्ता । शब्दार्थो न भाषायाम् । नतिरिह नमस्कारो नम्रीभावश्च । नमति गुरुं शिष्यः । नमन्ति फलिनो वृक्षाः । अमन्तत्वेऽप्यस्य ज्वलह्वलेत्यादिना औ केवलस्य ह्रस्वविधानात् सोपसर्गस्यैव नित्यं ह्रस्वः । नमयति, नामयति, प्रणमयति । स्वयुक्तमवनामितं बधिरकर्णजापः कृत इत्यादौ अवममनं अवनामः घञ्, ततोऽवनामं करोतीति औ रूपम् ।

क्रमित्वा क्रान्त्वा। भ—क्रामति। भ्वादिपक्षेऽपि शमादित्वं, दिवु-क्रमाचम इति दीर्घस्थापनार्थम्। इर्—अक्रमत् अक्रमीत्। अक्रामिषं च इति दुर्गः।

४। क्रमु गतौ } (क्रम, दिवा, प)

४। क्रमु गतौ } (क्रम, भ्वा, प) य—क्राम्यति। गोविन्द-भट्टक्रमदीश्वरौ तु दीर्घं विधाय क्राम्यतीत्याहतुः। तथाच—दृश्यते यनि दीर्घत्वं शान्तिक्लमणवेदिभिः। तेन क्राम्यति कौमारे(१) चानीत्यस्योपलक्षणादिति। क्त—क्रमित्वा क्रान्त्वा क्रन्त्वा (क्रमोर्वा-वेति वा दीर्घः) क्रामति। वारिपूर्णां नदीं दृष्ट्वा पथात् संक्रमते गुरुरित्यादौ *सम्प्रत्यस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात्* पाणे-रित्यात्मनेपदम्। उपपराभ्यां वृत्तायनेपूपसर्गान्तरपूर्वादप्यात्मनेपद-मिति शरणदेवः। संक्रामयतीत्यादि तु संक्रामन्तं करोतीति णिज-न्तात् ञौ साध्यम्। अन्यथा अमन्तत्वात् ह्रस्वः स्यात्। "चरे-र्दक्रामि चदेककेन च"मिति तु धातुपारायणमते चुरादित्वविव-क्षायां सिद्धम्। तन्मतं परिभाषायां लिखितम्। अथवा 'आक्रा' इति कर्मण्योप्याधारे घेरणौ साध्यम्। दरेरेकेन पदा आक्रा यत् यं क्रमयाहके इत्यर्थः।

५। क्षमु क्षमर्षे (क्षम, दिवा, प) मर्षः सहनम्। क्त—क्षमित्वा क्षान्त्वा। ऊदित्त्वादिडनित्यत्वे। इर्—अक्षमत् अक्षमीत्। अक्षमिषं च इति दुर्गः। य, श—क्षाम्यति दीर्घं साधुः।

५। क्षमू सहने च (क्षम, भ्वा, आ) त्र—क्षम्'सह क्षमते। क्त—क्षमते। ञि—क्षामोऽसि। य—क्षमा। अकारादन्ते।

(१) [illegible] । कौमारे [illegible] ।
[illegible]

( मनागनभ्यावृत्त्या वा कामं चाभ्यत् यः चमी। क्रियासमभिहारेण विराध्यन्तं चमेत क इत्युभयत्र माघ: । २ । ४३ ) ।

५। कुश्म कश्म सतीचिते कुश्मिति ( कुश्म, चु, भा ) कुसीदन्त्योपधः। सतीचितं बुद्धिपूर्व्वकदर्शनम। कुश्मित् कुत्सितमीपञ्चास्यम्। क, ङ—कुश्मयते जनः, बुद्धा पश्यति, कुत्सितं स्मयते वेत्यर्थः। चुकुश्मयिषते।

७। ष्ठी गम्लृ गत्याम् ( गम, भ्वा, प ) ष्ठी—गन्ता। ऌ—अगमत्। गतिरुत्तरदेशसंयोगफलकव्यापारः।

८। चम नश् भच्चे ( चम, स्वा, प )
८। चमु भच्चे ( चम, भ्वा, प )
६। छमु भच्चे ( छम, भ्वा, प )
१०। जमु भच्चे ( जम, भ्वा, प )
११। जिमु भच्चे ( जिम, भ्वा, प )
१२। झमु भच्चे ( झम, भ्वा, प ) पठेते। न—चम्नोति। र—वैदिक। उ—चमित्वा चान्त्वा। चमति। उ—छमित्वा छान्त्वा। जमित्वा जान्त्वा। जेमित्वा जीन्त्वा। झमित्वा झान्त्वा।

१३। णमौ शब्दनत्योः (णम, भ्वा, प) ष्ठौ—नन्ता। शब्दार्थो न भाषायाम्। नतिरिह नमस्कारो नम्रीभावश्च। नमति गुरुं शिष्यः। नमन्ति फलिनो वृक्षाः। घमन्तावेऽप्यस्य ज्वलह्वलेत्यादिना ञौ केवलस्य ह्रस्वविधानात् सोपसर्गस्यैव नित्यं ह्रस्वः। नमयति, नामयति, प्रणमयति। खरुध्वस्मवनामितं वधिरकर्णजापः कृत इत्यादौ अयममनं अवनामः घञ्, ततोऽवनामं करोतीति ञौ रूपम्।

१४ । तिम्य क्लेदने } (तिम, दिवा, प)

१५ । तीम्य क्लेदने } (तीम, दिवा, प) य—तिम्यति, तीम्यति । तितेम तितीम । क्लेदनमार्द्रभावः । (स्यात्तेमनन्तु निष्ठानमित्यमरे व्यञ्जनपर्य्यायः) ।

१६ । तमु ग्लान्यें खेदेच्छयोः (तम, दिवा, प) ङ—तमित्वा तान्त्वा । ङ्—अतमत् अतमीत् । ग्लान्यितं इति दुर्गः । भ, य—ताम्यति लोक उत्तप्तः स्यादित्यर्थः ।

१७ । दमु श्यु ङ् शमे (दम, दिवा, प) भ, य—दाम्यति । ङ—दमित्वा दान्त्वा । ङ्—अदमत् अदमीत् । ग्लान्यितं इति दुर्गः । शमः शान्तीभावः । दाम्यति मुनिः । शम इति पदस्य अन्तस्यापि सम्भवे शान्तीकरणोऽप्ययमिति धातुप्रदीपः । दमित्वायरिसंघातानिति ।

१८ । द्रमृ गतौ (द्रम, भ्वा, प) दन्त्यवर्गतृतीयादिः । द्रमति ।

१९ । भ्रमिश्यु जण चाले } (भ्रम, दिवा, शमादिः, प)

१९ । भ्रमु जण चाले } (भ्रम, दिवा, प)

१९ । भ्रमु जण चाले } (भ्रम, भ्वा, प) ओष्ठवर्गचतुर्थाद्याः । ङ्—अभ्रमत् अभ्रमीत् । भ, य—भ्राम्यति । ङ—भ्रमित्वा, भ्रान्त्वा । ज—भ्रमः भ्रामः । ज्वलादित्वात् णप्रत्ययेऽपि जनवत्र इत्यादिना ह्रस्वे भ्रम इत्येव ; तेन ज्वलादावस्य पाठो निष्फल इति धातुप्रदीपादयः । वस्तुतस्तु यथा ड्रुस्तेर्मुखां घञ् येत्यनेन घञोप्राप्तिरत्वे शोढीभावित्यनेन ढ एव, मुखादिपाठसामर्थ्यात् दार्दैर्घ इत्यनेन घो न स्यात्, तथात्रापि ज्वलादिपाठात् जनवध इति ह्रस्वो न स्यात् । णा—भ्रेमतुः बभ्रमतुः ।

य—भ्रम्यति। भ्रमति। चाल इह पादविहरणम्। न जाने को हेतुर्भ्रमति भुवने भिक्षुक इव। भ्रेमुः शिलोच्चयांस्तुङ्गानिति भट्टौ (७। ५५) गत्यर्थविवक्षया सकर्मकत्वम्।

२०। भाम ङ क्रोधे (भाम, भ्वा, था) ङ—भामते। (कोपना सैव भामिनीत्यमरः)।

२१। ऋ मीम् गतौ शब्दे (मीम, भ्वा, प) ऋ—अमिमीमत्।

२२। यमौ उ विरतौ (यम, भ्वा, प) औ—यन्ता। उ—यमित्वा यत्वा। विरतिर्निवृत्तिः। यच्छति पापात् साधुः।

२२। यमक् मि परिवेषणे तदभावे (यम, चु, प) (तदभावे अपरिवेषणे इत्यर्थ.) यमयति यामयति। परिवेषणमन्नादेरुपसर्पणं, वेष्टनमित्येके। विष्णुध्यामावित्यस्य रूपमिति रमानाथः। केचित्तु परिवेषण एवायं मानुबन्धः। क, मि—यमयन्नं स्त्री, अन्यत्र नियामयति संयामयतीत्यादीत्याहुः। अन्येतु अपरिवेषण एवायं मानुबन्धः। नियमयसि विमार्गप्रस्थितानात्तदण्ड इति शाकुन्तले। परिवेषयेतु यामयत्यन्नं द्विजाय स्त्रीत्याहुः। अनेनोभयोर्मतयोः प्रामाणिकत्वादुभयत्र मानुबन्धः कृतः।

२३। रमु ङलौ क्रीड़े (रम, भ्वा, आ) उ—रमित्वा रत्वा। ङ—रमते। ज—रामः रमः। औ—रन्ता।

२४। यादृट् वमुङ्गिरि (वम, भ्वा, प) वकारादिः। णा—येमतुः ववमतुः। अन्ये तु एतत्कार्य्यविधायकसूत्रे फणादौ वेमं न पठन्तो "वेमुश्च केचिद्रुधिरमित्यादिसिद्धये तत्सूत्रे दन्त्यवकारादिवर्ज्जनस्यानित्यतां स्वीकुर्व्वन्ति। केचित् पुनर्वर्गेयवरादिधात्वन्तरमप्यस्तीति प्रलपन्ति। ज—वामः वमः। उ—

वमित्वा वान्त्वा। टु—वमथुः। उद्गिरि वान्तौ। वमत्यन्नमजीर्णवान्। अमन्तत्वेऽप्यस्य ञौ ज्वलहलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः। वमयति वामयति प्रवमयति।

शमुश्य ईर् शमे शमङ् कञालोचे श्रमुश्यञि।
दूतपःखेदयो ष्टीम ष्टिम्य क्लेदे पम ष्टम।
वैक्लव्येऽथ क साम् सान्त्वे ख्मुञ् श ध्वनने स्नम।
अक् वितर्के ह्नम गतौ वियुतास्त्रिंशदन्तमाः।

२५। शमुश्य ईर् शमे (शम, दिवा, प) उ—शमित्वा शान्त्वा। श, य—शाम्यति। ईर्—अशमत् अशमीत्। अशानित्यं ञ इति दुर्गः। शमः शान्तीभावः। शशाम वृष्टापि विना दवाग्निरिति रघुः। २। १४। शम इति पदस्य ज्ञान्तस्यापि सम्भवे शान्तीकरणेऽप्ययमिति धातुप्रदीपः (१)। वरेण शमितुं(२) लोकानलं दग्धुं हि तत्तपः इति कुमारसम्भवम्। २। ५६। वधो नियस्याधिपतिर्दिवौकसामित्यादावनेकार्थत्वात् श्रुत्वेत्यर्थः। वा शम यमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ नित्यं ह्रस्वः। शमयति।

२५। शमङ्कञालोचे (शम, चु, उ) आलोचः प्रणिधानम्। वा शमयमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ

---

(१) कातन्त्रधातुवृत्तौ शमु दम उपशमे इत्यनयोर्व्याख्याने "एतौ सकर्मकावपि, उपशमयन्त्रादिनन्तादपि युत्पत्तेरिति धातुप्रदीप" इत्युक्तम्।

(२) इदानीन्तनपुस्तकेषु वरेण शमितमिति पाठो दृश्यते, तत्र शमितमिति अन्तक्तान्तस्य रूपम्, तथापि सकर्मकोदाहरणं सुधीभिर्भाव्यम्।

ङ्कसाभावः। ङ, क—शामयते कार्य्यं सुधीः। ञ—शामयति शामयते। निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति। चव-मात्मनेपदीति केचित्।

२६। अमुश्च जि दृतप.खेदयोः (श्रम, दिवा, प) ताल-व्यादिः। उ—श्रमित्वा श्रान्त्वा। भ, य—श्राम्यति लोकस्तपः, करोति खिद्यते वेत्यर्थः। जि—श्रान्तोऽस्मि। दृर्—अश्रमत् अश्रमीत्। चश्रान्तिर्य ङ इति दुर्गः। धुर्य्यान् विश्रामयेति स इति रघौ श्रामल मन्ने इत्यदन्तस्य रूपम्।

२७। ष्टीम्य क्लेदे } (ष्टीम, दिवा, प)
२८। ष्टिम्य क्लेदे } (ष्टिम, दिवा, प) नौ मूर्द्धन्यादी। य—स्तीम्यति, स्तिम्यति। तिष्टीम, तिष्टेम। तिष्टीमयिषति, तिष्टेमयिषति। क्लेद आर्द्रभावः।

२९। षम वैक्लव्ये } (षम, भ्रा, प)
३०। ष्टम वैक्लव्ये } (ष्टम भ्रा, प) वैक्लव्यं विह्वलीभावः। समन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुरा इति हलायुधः।२२३। स्तमति। असीसमत्, अतिष्टमत्। (न च स्तमति शोकेनेति हलायुधः। २४५)।

३१। षय ष साम सान्त्वे (साम, चु, प) दन्त्यादिर्द्वितीय-स्वरी। सान्त्वं प्रियकरणम्। क—सामयति दीनं दानेन दाता। (यः साम्यति सामन्तः स्निग्धैरालोकनैश्च ता इति हलायुधः। ताः सीमन्तिनीरित्यर्थः २२३।)।

३२। स्मसु षाम ध्वनने (स्मम, तदा, प) अन्तःस्थादियुक्तः। उ—स्ममित्वा स्मान्त्वा। य—स्मेमतुः सस्ममतुः। श—स्ममती स्ममन्ती।

३२ । स्यमु जक वितर्के ( स्यम, चु, उ ) अन्तःस्यादिशुकः । अस्य स्वार्थणौ ह्रस्वो न स्यात् प्रेरणणौ तु स्यादिति प्राञ्चः । स्यमते तु वाग्यमयमेति वाग्यन्द्वाद्वयस्याम्यम । ञ, क—स्यामयति स्यामयते परगुणं सुधीः ।

३३ । हम्म गतौ ( हम्म, भ्वा, प ) महयान्तः । हम्मति ।

त्रियुतास्त्रिंयदन्तमाः ।

( अन्ते मो येषा ते, मान्ता धातव इत्यर्थः, त्रियुतास्त्रिंयत् त्रयस्त्रिंशत्संख्यका इत्यर्थ. ) ।

---

## यान्तवर्गः ।

### अयङ् गतावीर्ष्य ईर्ष्य ईर्षे ऊयीङ सेवने ।

१ । अयङ गतौ ( अय, भ्वा, आ ) ङ—अयते ।

२ । ईर्ष्य ईर्षे ) ( ईर्ष्य, भ्वा, प )

३ । ईर्ष्य ईर्षे ) ( ईर्ष्य, भ्वा, प) द्वौ दीर्घादी रेफिणौ । ईर्ष इति शेषस्य यङि हसाल्लोप इति यलोपे सिद्धम् । ईर्षः परा-भ्युदयासहिष्णुत्वम् । परदोषासहिष्णुत्वमिति केचित् ( अक्षमेत्यर्थः ) । ईर्ष्यति ईर्ष्यति खलः साधवे । एतौ यशान्तावित्येके ।

४ । ऊयीङ सेवने ( ऊय, भ्वा, आ ) दीर्घादिः । सेवनमिह सिव्यु तन्तुसन्तताविव्यस्य रूपम् । ई—ऊतः । ङ—ऊयते पटं सौचिकः ।

### क्नूयीङ् दुर्गन्ध आर्द्रत्वे शब्दे क्ष्मायीङ् विधूनने ।

५ । क्नूयीङ् दुर्गन्ध आर्द्रत्वे शब्दे (क्नूय, भ्वा, आ) दन्त्यनकार-

युक्तो दीर्घो । तथा च "क्नूयीक्ष्मायतितेविदेवय इमे वेविद्य मेवि-त्सये"ति शार्दूलविक्रीड़िते चण्डेश्वरः । (क्नू इति दीर्घं विना शार्दूलविक्रीड़ितछन्दइति न स्यात् )। ई—क्नूतः। ङ—क्नूयते मत्स्यः, दुर्गन्धः स्यादित्यर्थः । क्नूयते वस्त्रमम्भसा ।

६। क्ष्मायीङ विधूनने ( क्ष्माय, भ्वा, आ ) षोष्ठवर्गयोप-युक्तमादिः । विधूनन इति विधूयतेऽसाविति कर्म्मणि घञि विधूनः सकम्पस्ततो विधून इवाचरतीति क्वौ कृतेऽनटि रूपं कम्पनमित्यर्थः । अन्यथा कम्पनप्रेरणमेवार्थः स्यात् । ई—क्ष्मातः । ङ—क्ष्मायते दृक्षः । चक्ष्माये च मही इति भट्टिः । १४ । २१ । क्ष्मायते कम्पते त्वङ्गत्येजतीत्त्वं च वेपते इति कम्पार्थे भट्टमल्लः ।

## चुच्चीत्वभिषवे चीयृञ् संहत्यादानयोश्चयङ् । गतौ चायृञ् निशामेऽर्च्चे णय् तयङ् गतिरक्षयोः ।

७। चुच्चीत्वभिषवे ( चुच्च, भ्वा, प ) तालव्यवर्गाद्योपधः । पञ्चमस्वरी । ई—चुक्तः । यद्वयान्तोऽयमित्येके । अभिषवः स्नानं मन्थनं पीड़नं सन्धानञ्च । (षु ञ न सन्धाक्लेदपीड़ामन्थे इति निष्पादनात् )।

८। चीयृ ञ संहत्यादानयोः ( चीय, भ्वा, उ ) चतुर्थस्वरी । ङ—अचिचीयत् । ञ—चीयति चीयते । (संहतिराच्छादनम्) ।

९। चय ङ गतौ ( चय, भ्वा, आ ) ङ—चयते ।

१०। चायृ ञ निशामेऽर्च्चे (चाय, भ्वा, उ) ङ—अचचायत् । ञ—चायति चायते । निशाम इह चाक्षुषज्ञानम् । तं पर्व्वतीयाः प्रमदाश्चचायिरे इति माघः । १२ । ५१ ।

११। णय ङ गतिरक्षयोः } (णय, भ्वा, आ)
१२। तय ङ गतिरक्षयोः } (तय, भ्वा, आ) ङ—नयते। तयते।

**तायृङ् पालनसन्तत्योर्ञिदयङ् ग्रहणे गतौ।**
**वधे दानेऽवने दायृङ् दाने नय पयङ् गतौ।**

१३। तायृङ पालनसन्तत्योः (ताय, भ्वा, आ) सन्ततिर्विस्तारः। ऋ—अततायत्। ङ—तायते विद्यां सुधीः।

१४। ञि दयङ ग्रहणे गतौ वधे दानेऽवने (दय, भ्वा, आ) अवनं पालनम्। ञि—दयितोऽस्ति। ङ—दयते दीनं दयालुः। तेषां दयसे न कस्मादित्यत्र कर्म्मणि षष्ठी।

१५। दायृङ दाने (दाय, भ्वा, आ) ऋ—अददायत्। ङ—दायते।

१६। नय ङ गतौ } (नय, भ्वा, आ)
१७। पय ङ गतौ } (पय, भ्वा, आ) ङ—नयते। पयते।

**पूयीङ् दुर्गन्धशीर्ण्योरो प्यायीङ् वृद्धौ मयङ् गतौ।**

१८। पूयीङ दुर्गन्धशीर्ण्योः (पूय, भ्वा, आ) षट्स्वरी। ई—पूतः। ङ—पूयते मत्स्यः दुर्गन्धः स्यादित्यर्थः। शीर्णिर्भेदनम्।

१९। ओ प्यायीङ वृद्धौ (प्याय, भ्वा, आ) ओ—पीनं मुखम्। उपसर्गात्तु प्रप्यानम्। अस्माङ्केत प्यानः पीनः स्वेदः। ङ—प्यायते।

२०। मयङ गतौ (मय, भ्वा, आ) ङ—मयते।

**मव्य वन्धे रय् लय् वयङ् व्ययञ् गत्यां व्ययक् त्रुटि।**

२१ । मव्य बन्धे ( मव्य, भ्वा, प ) मव्यति चौरं राजा । यद्वयान्तोऽयमित्येके ।

२२ । रयङ गत्याम् ( रय, भ्वा, आ )
२३ । लयङ गत्याम् ( लय, भ्वा, आ )
२४ । वयङ् गत्याम् ( वय, भ्वा, आ )
२५ । व्ययञ् गत्याम् ( व्यय, भ्वा, आ ) शेषोऽन्तःस्थादियुक्तः । (अत्र पूर्व्वे धातवो न कथं आनुबन्धा इत्याशङ्क्याह) धातुभेदे ङञोरसङ्कर इति वोपदेवः । ( धातुभेदे सति परोऽनुबन्धः पूर्व्वेषामिति नियमात् ङञावित्यनुबन्धावेकस्य धातोर्न भवत इति भावः ) । ङ—रयते, लयते, वयते । ञ—व्ययति व्ययते ।

२५ । व्ययक् नुदि ( व्यय, चु, प ) अन्तःस्थादियुक्तः । क—व्याययति । नुदि प्रेरणे ।

शुच्यी त्वभिषवे पूर्व्यं ईर्षे स्त्र्यं त्वनादरे ।
ईर्षे स्फायीङ संहृद्वौ हय हर्य्यं क्लमे गतौ ।
*एकविंशद् यकारान्ता धातवः परिकीर्त्तिताः ।*

२६ । शुच्यी त्वभिषवे ( शुच्य, भ्वा, प ) तालव्यादिः पञ्चमस्वरी तालव्यवर्गाद्योपधः । ई—शुक्तः । यद्वयान्तोऽयमित्येके । अभिषवः स्नानं मन्थन पीडनं सन्धानञ्च ।

२७ । पूर्व्य ईर्षे ( पूर्व्य, भ्वा, प ) स्त्र्यन्त्यादिर्दीर्घोरेफमध्यः । स्त्र्यति सुपूर्व्य । यद्वयान्तोऽयमित्येके । ईर्षार्थः प्रागुक्तः ।

२८ । स्त्र्यं त्वनादरे ईर्षे ( स्त्र्यं, भ्वा, प ) दन्त्यादिर्दीर्घोरेफमध्यः । स्त्र्यति । सुस्त्र्यं ।

२९ । स्फायीङ संहृद्वौ (स्फाय, भ्वा, आ) ई—स्फीतः स्फातः ।

ङ—स्मायते । मस्माये । स्मायन्निर्मोकसन्धीति गणकृतानित्यत्वात् । स्मायते स्माय: पचादित्वादन्, स्माय इवाचरतीति क्वौ यवन्तं वा ।

३० । इय क्लमे गतौ } ( इय, भ्वा, प )
३१ । इर्य्य क्लमे गतौ } ( इर्य, भ्वा, प ) शेषो रेफोपधः । इयति । इर्य्यति । क्लमो ग्लानिः ।

एकत्रिंशद् यकारान्ता धातवः परिकीर्त्तिताः । (सुगमम्) ।

---

## रान्तवर्गः ।

### अभ्र गत्यामीर्ड् कम्पगत्योरीर्कि गतौ नुदि ।

१ । अभ्र गत्याम् ( अभ्र, भ्वा, प ) ओष्ठ्यवर्गचतुर्थोपधः । अभ्रति । ( वनेष्वानभ्र निर्भय इति भट्टिः ।४।११। ) ।

२ । ईर्ड् ल कम्पगत्योः (ईर, अदा, आ) दीर्घादिः । ङ, त—ईर्त्ते लता वायुना ।

२ । ईर्कि गतौ नुदि ( ईर, चु, भ्वा, प ) कि—ईरयति ईरति । नुदि प्रेरणे ।

### क्मर् कौटिल्ये कुर् श शब्दे चर् ज सञ्चलने चुर् श् । विलेखे खनने कुद्रिक् मिथ्योक्तौ खोर् ऋट खोटने ।

३ । क्मर् कौटिल्ये ( क्मर, भ्वा, प ) ओष्ठ्यवर्गाद्ययुक्तः । क्मरति खलः कुटिलः स्यादित्यर्थः ।

४ । कुर् श शब्दे ( कुर, तुदा, प ) श—कुरति । कोरिता ।

५ । चर् ल सञ्चलने ( चर, भ्वा, प ) ज—चारः चरः ।

मस्खलनमिह मोचनं स्रवणञ्च । आदौ सकर्म्मकः । क्षोतोभि-क्षिद्यगजा मदं क्षरन्त इति किराते ।७।८। स्रवणेतु घरत्घृतज-क्षत्तय इति । (अचारिपुः मराम्भांसि तस्मिन् रुचःपयोधरा इति भट्टिः ।३।८। खादुल्काः प्रचक्षरिति भट्टिः ।१४।२७।)।

६ । क्षुरश्च विलेखे खनने (क्षुर, तुदा, प) ग्र—क्षुरति भूमिं लोकः । क्षोरिता । क्षुरो लोमच्छेदनः ।

७ । क्षुद्रिक् मिथ्योक्तौ (क्षुन्द्र, चु, प) पञ्चमस्वरी दन्त्यवर्ग-तृतीयोपधः । इ, क—क्षुन्द्रयति नीचः मिथ्या वदतीत्यर्थः । क्षुन्द्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वैदेपूद्धारणभेदार्थः ।

८ । खोर् च खोटने (खोर, भ्वा, प) क—अचुखोरत् । खोरति खञ्जः ।

## खुरश्च चोरच्छिदो गुर्डीङ्गि गूरङक उद्यमे ।

९ । खुरश्च चोरच्छिदोः (खुर, तुदा, प) चोरो विलेखनम् । ग्र—खुरति भूमिं तृणं वा लोकः । खोरिता ।

१० । गुर्डीङ्गि उद्यमे } (गुर, तुदा, कुटा, आ)
११ । गूरङक उद्यमे } (गूर, चु, आ) द्वौ क्रमात् ह्रस्व-दीर्घिणौ । ङ, ग्नि—गुरते, जगुरिष्ट । ई—गूर्णः । ङ, क—अनेषु नोङ्गूरयतेऽस्त्रमाहवे (यः) इति हलायुधः । ५१ ।

## गूरी यङ वधे गत्यां गुद्रिक् कुन्द्रे घुरञ् ध्वनौ ।
## भीमार्थे घुर् यङी हिंसाज्यान्योश्वर् गमनेऽदने ।
## आचारे चर्क संशीत्यसंशीत्योर्घूर्ङ्यो दहि ।

११ । गूरी यङ वधे गत्याम् (गूर, दिवा, आ) दीर्घी । तथा च—दीपि पूरि जनि गूरि धूरयः काशि वाशि पदि शूरि

त्वरयः। घूरि जूरि खिदि विद्यति क्लिश्यिपूरि शुध्यति मनो दिवादिष्विति रथोद्धताया चण्डेश्वरः। ई—गूर्णः। य, ङ—गूर्यते।

१२। गुद्रिक् कुन्द्रे (गुन्द्र, चु, प) पञ्चमस्वरी दन्त्यवर्गतृतीयोपधः। कुन्द्रो मिथ्योक्तिः। इ, क—गुन्द्रयति नीचः मिथ्या वदतीत्यर्थः। गुन्द्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः।

१३। घुरञ ध्वनौ भीमार्थे (घुर, तुदा, प) भीमोभयानकरसः तस्यार्थो हेतुर्भीमार्थः, भीमार्थ इति ध्वनावित्यस्य विशेषणम्। श—घुरति व्याघ्रो मनुष्याणां भयजनकशब्दं करोतीत्यर्थः। अर्थद्वये तु शब्दं करोति भयहेतुर्भवति वेत्यर्थः। घोरिता। घुर भीमार्त्तशब्दयोरिति प्राञ्चः। आर्त्त इति शब्दविशेषणमिति रमानाथः। घुरत्यार्त्तेच कुरतीति शब्दानुदत्तौ भट्टमल्लः। (१)। (विभिन्ना जुघुरुर्घोरमिति भट्टिः। १४। ४०)।

१४। घूर्यङौ हिंसाज्यान्योः (घूर, दिवा, आ) दीर्घी। य, ङ—घूर्यते। ई—घूर्णः। ज्यानिर्गतवञ्चयोभावः।

१५। चर गमनेऽदने चाचारे (चर, भ्वा, प) चरति।

१५। चर्क संशीत्यसंशीत्योः (चर, चु, प) संशीतिः संशयः, असंशीतिरसंशयः। क—विचारयति यो धर्म्ममिति हलायुधः। १२५। चर असंशये इति प्राञ्चः। केचित्तु चर संशये इति पठित्वा संशये हि विचारणा स्यादित्याहुः। (२)।

१६। चूर्ङयी दहि (चूर, दिवा, आ) दीर्घी। ङ, य—चूर्यते वह्निरिन्धनम्। इ—चूर्णः।

---

(१) घुर कुर इत्युभावार्त्तशब्दे इत्यर्थं।

(२) संशये इति पाणिनि। असंशये इति कातन्त्रम्।

**चुर्कि स्तेये छुर्शि लोपे ज्वर्म रोगे ङ जूर यी।**
**ज्यानौ वधे त्सर छद्मगत्यां ञि त्वर्पमङ् स्वदे।**

१७। चुर कि स्तेये (चुर, चु, भ्वा, प) कि—चोरयति चोरति धन चौरः।

१८। छुर शि लोपे (छुर, तु, प) शि—छुरति, अच्छुरीत्, चुच्छोर। लोपश्छेदः। (१)।

१९। ज्वर म रोगे (ज्वर, भ्वा, प) म—ज्वरयति। ज्वरति मनोधातुवैषम्यात्।

२०। ङ जूर यी ज्यानौ वधे (जूर, दिवा, आ) दीर्घी। ङ, य—जूर्य्यते। ई—जूर्णः। ज्यानिर्गतवद्धयोभावः।

२१। त्सर छद्मगत्याम् (त्सर, भ्वा, प) दन्त्यवर्गाद्यस्याधोदन्त्य सकारः। त्सरति धूर्त्तश्छलेन गच्छतीत्यर्थः। तत्सार।

२२। ञि त्वर प मङ स्वदे (त्वर, भ्वा, आ) ञि—त्वरितः त्वर्णोऽस्ति। क्षुभाम ह्वपत्वरसंघुषास्वनिभ्यो निष्ठाया वेमत्त्वेऽपि वेदेपूच्चारणभेदार्थमेतस्मादनुबन्धमन्ये न मन्यन्ते। प—त्वरा। म—त्वरयति। ङ—त्वरते। स्वद इह शीघ्रमनुष्ठानम्। नानुनेतुमबलाः स तत्वरे इति। १९। ३८।

**तूर्यङी हिंसे च तुर्लि वेंगे तविक् ङ धारणे।**

२३। तूर्यङी हिंसे च (तूर, दिवा, आ) दीर्घी। य, ङ—तूर्यते। ई—तूर्णः। चकारात् स्वदे च।

---

(१) रञ्जनेऽप्ययम्। छुरति अर्कं बालातपः।

२४ । तुर लिर वेगे (तुर, ह्वा, प) ऋस्रौ । लि—तुतूर्ति ।
र—वैदिकः । वेगः शीघ्रगमनम् । यदादिवर्ज्जधातुभ्यः यपो-
विधानेनैवेष्टसिद्धौ यदादेः शप विधाय तलुक्करणमस्य निष्ठायां
भावादिके वोदुडोऽव्यत इत्यनेन गुणार्थमितिचतुर्भुजः । तेन
तोरितं तुरितमिति, एवं रोदितं रुदित मित्यादि ।

२५ । तति कङ धारणे (तन्त्र, चु, आ) आदिमध्ययो-
स्तकारः । धारणं भरणम् । आयायामस्य विस्तारणे प्रायः-
प्रयोगः । चु, क, ङ—तन्त्रयते तन्तून् तन्त्रवायः । तन्त्र इति
पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः । तति कुटुम्ब
धारणे इति माधः । द्वावेतौ धारणेऽर्थे वर्त्तेते इति चान्द्राः ।
केचित्तु कुटुम्बधातुममन्यमानाः ततिधातुः कुटुम्बस्य धारणे
पोषणेऽर्थे वर्त्तते इत्याहुः ।

ऋट धोर गतिचातुर्य्ये धूरी यङ वधे गतौ ।

२६ । ऋट धोर गतिचातुर्य्ये (धोर, भ्वा, प) ऋट—अदुधोरत् ।
गतौ चातुर्य्यं गतिचातुर्य्यम् । धोरत्याधोरणाक्रान्ता विनीता
यस्य वारणा इति हलायुधः । १३८ ।

२७ । धूरी यङ वधे गतौ (धूर, दिवा, आ) दीर्घो । ई—
धूर्णः । य, ङ—धूर्य्यते । (आत्मा क्षुर्य्याय धूर्य्यन्ते साधुभिः
साधुवाहिता इति हलायुधः । १३८ । ) ।

पुर्श्चग्रगत्यां पूरी यङ् पूर्त्तौ पूरक् च बभ्रतु ।
मभ्र गत्यां मत्रि कङ गुप्तोक्तौ मुर्श वेष्टने ।

२८ । पुरग्र अग्रगत्याम् (पुर, तुदा, प) पञ्चमस्वरी । श—
पुरति क्ष्वेडः, कनिष्ठस्य अग्रे गच्छतीत्यर्थः । पोरिता ।

२८। पूरी यङ पूर्त्तौ (पूर, दिवा, आ) दीर्घी। पूर्त्तिरिह आप्यायनम्। ई—पूर्णः। य, ङ—पूर्य्यन्ते पितरस्तस्तेति हलायुधः। १५१।

२९। पूरक् च (पूर, चु, प) दीर्घी। चकारात् पूर्त्तौ। पूर्त्तिरिहापि आप्यायनम्। क—पितॄन् पूरयति श्राद्धे हव्यैः कव्यैश्च यः सदेति हलायुधः। १५१।

३०। बभ्रतु गत्याम् (बभ्र, भ्वा, प)
३१। मभ्र गत्याम् (मभ्र, भ्वा, प) द्वावोष्ठवर्गचतुर्थोपधौ। बभ्रति। मभ्रति।

३२। मत्रि कङ गुप्तोक्तौ (मन्त्र, चु, प) दन्त्यवर्गाद्योपधः। इ, क, ङ—इति ध्रुवं मन्त्रयते नृपोऽयमिति मुरारिः। मन्त्र इतिपाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः।

३३। मुरश वेष्टने (मुर, तुदा, प) पवर्गशेषादिः पञ्चमस्वरी। श—मुरति हर्म्यं लता। मोरिता।

## यत्रिक् सङ्कोचने वभ्र गत्यां ख्वभ्रक् विले गतौ। तङ्के ष्टूर् पूर्यङी स्तम्भे हिंसे पुर्सुर्श भैरययोः।

३४। यत्रिक् सङ्कोचने (यन्त्र, चु, प) दन्त्यवर्गाद्योपधः। इ, क—यन्त्रयति मन्त्रेण सर्पं जाङ्गलिकः (विषवैद्यः)। यन्त्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः।

३५। वभ्र गत्याम् (वभ्र, भ्वा, प) वकारादिरोष्ठवर्गचतुर्थोपधः। वभ्रति।

३६। ख्वभ्रक् विले गतौ तङ्के (ख्वभ्र, चु, प) वकारयुक्तादिरोष्ठवर्गचतुर्थोपधः। विलं रन्ध्रकरणम्। क—ख्वभ्रयति भाण्डं

बालकः । तद्ध इति तकि दौस्थ्ये इत्यस्य रूपम् । प्रश्नयति दीनः दुःखेन जीवतीत्यर्थः । तद्ध स्थाने तन्न इति पाठो ज्ञेयः ।

३७ । मूर्ह् यड्गौ स्तम्भे हिंसे } ( मूर, दिवा, आ )

३८ । पूर्ह् यडौ स्तम्भे हिंसे } ( पूर, दिवा, आ ) द्वौ दीर्घिणौ क्रमात्तालव्यमूर्द्धन्यादी च । य, ङ—मूर्य्यते, स्तूर्य्यते । ई—मूर्णः स्तूर्णः । शेषः केचिन्न मन्यते । स्तम्भो जडीभाव ।

३९ । मुर् श भेस्ययोः } ( मुर, तुदा, प )

४० । स्तुर् श भेस्ययोः } ( स्तुर, तुदा, प ) द्वौ पञ्चमस्वरिणौ । शेषो दन्त्यादिः । श—सुरति । सुषोर । सुसोर । भा दीप्तिः, ऐश्वर्यमैश्वर्य्यम् ।

## स्फुरशि स्फूर्त्तौ चले स्फारश्च द्विचत्वारिंशदन्तराः ।

४१ । स्फुरशि स्फूर्त्तौ चले ( स्फुर, तुदा, प ) स्फूर्त्तिः प्रकाशः, चलनम् । शि—स्फुरति, अस्फुरीत् चामरम् । पुस्फोर ।

४२ । स्फरश च ( स्फर, तुदा, प ) आद्यस्वरी । श—स्फरती स्फरन्ती पस्फार विस्फारयति पास्फर्य्यते । क्रमदीश्वरोऽप्येवम् । स्फरणं स्फुरणे इत्यमरोऽपि । चकारात् स्फूर्त्तिचलनयो. । अयं पञ्चमस्वरीति भ्रमो ज्ञेयः । तथात्वे पूर्व्वस्यैवेटसिद्धावस्य वैयर्थ्यं स्यात् । न च कुटादित्वविकल्पनार्थमस्य पाठ इति वाच्यं पूर्व्वत्रैव शि श इत्यनुबन्धद्वयपाठादपि तत्सिद्धेः । एवं संख्याया अप्यसङ्गतिः स्यात् । यत्तु अस्मिन् सत्यपि स्फारयतीति साधनाय णौ स्फुरतेरेव चकारस्य आकारविधानं तदस्य सर्व्वसम्मतत्वाभावात् अतएव स्फर इत्येके इति रमानाथः ।

द्विचत्वारिंशदन्तराः । ( सुगमम् ) ।

---

अलञ् वारणपर्य्याप्तिभूषास्विल् श शये गतौ ।

१। अल ञ वारणपर्य्याप्तिभूषासु ( अल, भ्वा, उ ) ञ— अलति अलते पापं गङ्गा, निवारयतीत्यर्थः । पर्य्याप्तिः सामर्थ्यम् । पर्य्याप्तन्तु यथेष्टं स्यात् तृप्तौ शक्ते निवारणे इति विश्वप्रकाशात् । अलति घोटको धावितुं, समर्थः स्यादित्यर्थः । अलति हारो जनं भूषयतीत्यर्थः ।

२। इल श शये ( इल, तुदा, प ) श—इलति । शयः शयनम् ।

इल् कच् क्षेपे कलङ् संख्याकृतोः कल् किल् शुदौ किलश् ।
शौक्ले क्रीड़े कील बन्धे क्ष्वल्ज चाले चये क्षलक् ।
शौचे कूलत्वाद्दृतौ क्ष्मील् निमेषे ङ् कल्ल कूजने ।
शब्देऽशब्दे कुलज् बन्धुसंहत्योः क्षेल केलतु ।
क्ष्वेल् खेल् चालगत्योः खल् क्ष्वल् जार्थे खोल् खोटने ।

२। इल कच क्षेपे ( इल, चु, प ) क्रस्वादिः । क—एलयति । चकारादिलश्च ( क्षेपार्थकः ) ।

३। कलङ् संख्यानतोः ( कल, भ्वा, आ ) ङ—कलते दिवसं दक्ष', गणयतीत्यर्थः । कल् शब्दः । ( निष्कलन्ते मुखादस्य नानीलपक्ष्मा गिर इति हलायुधः । ७० ) ।

३ । कल क तुदौ ) ( कल, चु, प )

४ । किल क तुदौ ∫ ( किल, चु, प ) क—कालयति । केलयति । तुदिरिति तुद औ प्रेरणे इत्यस्य औणादिककिप्रत्यये रूपम् ।

४ । किलश शौक्ल्ये क्रीडे ( किल, तुदा, प ) श—किलति प्रासादः शिशुर्वा । केलिता ।

५ । कील बन्धे ( कील, भ्वा, प ) चतुर्थस्वरी । कीलति ।

६ । चल ज चाले चये ( चल, भ्वा, प ) ज—चालः चलः । चालश्चलनं, चयश्चयनम् ।

६ । चलक शौचे ( चल, चु, प ) शौचमिह शुद्धीकरणम् । क—चालयति पात्रं पयसा लोकः ।

७ । कूल त आवृतौ (कूल, भ्वा, प) षष्ठ स्वरी । कूलति वाटीं प्राचीरः ।

८ । क्ष्मील निमेषे ( क्ष्मील, भ्वा, प ) श्चोश्चवर्गशेषयुक्तचादिस्तुर्य्यस्वरी । निमेषः पक्ष्मभिश्चक्षुष आवरणम् । क्ष्मीलति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः ।

९ । ङ कल्ल कूजने शब्देऽशब्दे ( कल्ल, भ्वा, आ ) लद्वयान्तः । ङ—कल्लते लोकः, अव्यक्तशब्दं करोति, शब्दं न करोति वेत्यर्थः । कूजने इति चान्द्रजौमराः । शब्दमात्रे इति केचित् । अशब्दे इति कालापाः ।

१० । कुल ज बन्धुसंहत्योः (कुल, भ्वा, प) ज—कोलः कुलः ( पक्षे इगुपधत्वात् कप्रत्ययः ) ( बन्धुर्बन्धुभावः ) कोलति कुलीनः, सर्व्वेषां बन्धुः स्यादिति चतुर्भुजः । संहतीराशीकरणम् । केचित्तु संहतिस्थाने संस्त्यानं पठित्वा कोलति कुम्भान् कुलालः,

गणयतीत्यर्थ इत्याहुः। संख्यानं पठित्वा संख्यानमुपचय इति रामः। अन्ये तु मन्त्रेषु धातिषु वर्त्तमानोऽयमन्यत्रास्य न प्रयोगः, गडि गण्डे इतिवदित्याहुः।

११। क्षेल्ह चालगत्योः (क्षेल, भ्वा, प)
१२। केल्ह चालगत्योः (केल, भ्वा, प)
१३। ख्वेल्ह चालगत्योः (ख्वेल, भ्वा, प)
१४। खेल्ह चालगत्योः (खेल, भ्वा, प) आद्यो षकार-युक्तः। द्वौ कवर्गप्रथमादी। तृतीयो वकारयुक्त खादिः। शेषः कवर्गद्वितीयादिः। लुङ—अचिक्षेलत्, अचिकेलत्, अचिख्वेलत्, अचिखेलत्। चालः कम्पः। चालः कैश्चिन्नमन्यते।

१५। खल् खलनार्थे (खल, भ्वा, प) चलनार्थचालयोः। चालयेद्व स्खलनम्। खलति खलो धर्मात्।

१६। खोल्ह खोटने (खोल, भ्वा, प) लुङ—अचुखोलत्। खोलति खञ्जः।

गल् भक्षे गल् कङ् च स्रावे चल् ञ् गतौ मिश्चले चलम्।
विलासेक् चल् भृतौ चिल् श वासे चेल् चेल्लृ केल्हवत्।

१७। गल भक्षे (गल, भ्वा, प) गलति।

१७। गल कङ च स्रावे (गल, चु, आ) स्रावः क्षरणम्। क, ङ—गालयते रक्तं क्षतस्य। चकारात् गल च। स्वयं धारा-कारा गलति जलधारा कुवलयादिति।

१८। चल ञ गतौ (चल, भ्वा, प) ञ—चालः चलः। चलति यौवनम्। चलमानोऽनिल इति ताच्छील्ये शतुः शानः।

मिश्चले। पूर्व्वेणान्वयः। चलधातुः कम्पने मानुबन्धः स्वादि-

त्यर्थः । चलति लता वायुना । ञ—चलयति लतां वायुः । चलयन् भृङ्गरुचस्तवालकानिति रघुः । ८ । ५३ । चालयन् सकलां पृथ्वीमिति घसन्ताच्चालं करोतीति णौ यवन्तम् । गत्यर्थस्य तु चालयति हस्तिनं यन्ता ।

१८ । चल श विलासे ( चल, तुदा, प ) श—चलती चलन्ती । विलासः क्रीड़नम् ।

१८ । क चल भृतौ ( चल, चु, प ) क—चालयति । दन्त्य-वकारादिरयमिति दुर्गसिंहजुमरौ । भृतिरिह पोषणम् ।

१९ । चिल श वासे ( चिल, तुदा, प ) वासः परिधानम् । श—चिलति वस्त्रं लोकः, परिदधातीत्यर्थः । चेलिता ।

२० । चेल्ट केल्टवत् ( चेल, भ्वा, प )

२१ । चेल्लृ केल्लवत् ( चेल्ल, भ्वा, प ) शेषो लद्दयान्तः । ल्ट—अचिचेलत्, अचिचेल्लत् । शेषस्य ऋदनुबन्धः कूडतेः कुटा-दित्वनिष्फलः, वेदेपूच्चारणभेदार्थो वा । शेषः कैश्चिन्न मन्यते । केल्टवच्चालगत्योः ।

## चुल्ल हावकृतौ चिल्ल शैथिल्ये च जुलक् पिषि ।

२२ । चुल्ल हावकृतौ ( चुल्ल, भ्वा, प ) पञ्चमस्वरी लद्दयान्तः । एकोऽर्थः । कृतिग्रहणं स्पष्टार्थम् । चुल्लन्ति चारुनयनाश्च सह प्रियेणेति हलायुधः । ४७ ।

२३ । चिल्ल शैथिल्ये च ( चिल्ल, भ्वा, प ) ऋस्वी, लद्दयान्तः । चिल्लति । चेचिल्लाते । चकारात् हावकृतौ च ।

२४ । जुलक पिषि ( जुल, चु, प ) क—जोलयति । पिषि चूर्णीकरणे ।

**जलक् पिधाने जलज धान्ये ज्वल् जम् चलत्विपोः ।**

२५ । जलक् पिधाने (जल, चु, प) क—जालयति चन्द्रं मेघः ।

२५ । जल ज धान्ये ( जल, भ्वा, प ) ज—जालः जलः । धीयते जीवोऽनेनेति धानं तस्य भावो धान्यं जीवनोपयोगिक्रिया । जलति लोकान् जलं, जीवयतीत्यर्थः । धीयते आच्छाद्यतेऽनेनेति धानं तस्य भावो धान्यं आच्छादनक्रिया । जलति जालेन मत्स्यान् जालिक इति वा । गोविन्दभट्टस्तु धनस्य भावो धान्यं समृद्धिः । जलति धनी समृद्धः स्यादित्यर्थ इत्याह ।

२६ । ज्वल् जम् चलत्विपोः ( ज्वल, भ्वा, प ) वकारयुक्तः । ज—ज्वालः ज्वलः । म—प्रज्वलयति । मित्त्वेऽप्यस्य जौ ज्वल ह्वल ह्मलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः । ज्वलयति ज्वालयति । त्विट् दीप्तिः । ज्वलति वह्निः ।

**टल् ट्वल्ज विक्लवे नील वर्णे ग्र् णिल् गहने णलज् ।**
**बन्धे तुल क्ष्मितौ तिल्ल तिल् गतौ तिल्कश्च स्निहि ।**

२७ । टल् ज विक्लवे } ( टल, भ्वा, प )

२८ । ट्वल् ज विक्लवे } ( ट्वल, भ्वा, प ) ज—टालः टलः । ट्वालः ट्वलः । विक्लवो विह्वलीभावः ।

२९ । नील वर्णे ( नील, भ्वा, प ) वर्ण इह कृष्णवर्णीभावस्तत्करणञ्च । नीलति पर्णं तमालस्य । नीलति सूत्रं तन्तुवायः ।

३० । ग्र णिल गहने ( णिल, तुदा, प ) ह्रस्वी । गहनं दुर्बोधः । ग्र—निलति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः ।

३१ । णल ज बन्धे ( णल, भ्वा, प ) ज—नालः नलः ।

नलति केयं लोक', वध्नातीत्यर्थः । गन्धे इति केचित् । गन्धोऽदर्शनमिति गोविन्दभट्टः ।

३२ । तुल कि उन्मितौ (तुल, चु, स्वा, प) उन्मितिः परिमाणम् । कि—तोलयति तोलति काञ्चनं वणिक् । त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुमिति शङ्करोक्तं तुला करोतीति णौ साध्यम् ।

३३ । तिल्ल गतौ } (तिल्ल, भ्वा, प)
३४ । तिल गतौ } (तिल, भ्वा, प) चाद्यो लद्वयान्तः । द्वौ ह्रस्विनौ । तिल्लति तेलति ।

३४ । तिल क य स्निहि (तिल, चु, तु, प) स्निह् स्निग्धीभावः । क—तेलयति । य—तिलति तैलेनाङ्गं । तितेल ।

## तूल्काङ् पूरणे तूल्क निष्कर्षे तल्कि प्रतिष्ठितौ ।

३५ । तूलकङ पूरणे (तूल, चु, आ) षष्ठस्वरी । क, ङ—तूलयते ।

३५ । तूल्क निष्कर्षे (तूल, चु, प) षष्ठस्वरी । निष्कर्षं इयत्तापरिच्छेदः । क—तूलयति काञ्चनं वणिक् ।

३६ । तल कि प्रतिष्ठितौ (तल, चु, भ्वा, प) कि—तालयति तलति व्रतं, सम्पूर्णं स्यादित्यर्थः ।

## दुल्कोत्क्षेपे दलमि भेदे दलक् भेदेऽथ पाल् पलक् । रक्षे पलज् पल्ल गतौ पेल्ट चाले च पिल् क्षुटि ।

३७ । दुल्कोत्क्षेपे (दुल, चु, प) दोलयति धूलिं वायुः ।

३८ । दलमि भेदे (दल, भ्वा, प) मि—दलयत्यष्टौ कुल-

स्त्राभत इति मुरारिः । दालयति । भेदो विदारणम् । दलति काष्ठं कुठारः । क्वचिद्विदीर्णीभावे विकसने चायम् । श्रीमद्राघवबाहुदण्डविदलत्कोदण्डचण्डध्वनिरिति महानाटकम् । दरविदलितमल्लीवल्लिचञ्चत्परागेति जयदेवः ।

३८ । दलक् भेदे (दल, चु, प) क—दालयति गात्रं घाघः ।

३९ । पालक रक्षे } (पाल, चु, प)

४० । पलक रक्षे } (पल, चु, प) क—पालयति । क्रस्मिनैवेष्टसिद्धौ दीर्घियोऽपि पाठः कानुबन्धानामिदनुबन्धवत् णेरनित्यता बोधयति । तेन पालतीत्यपि सिद्धम् ।

४० । पल ञ गतौ } (पल, भ्वा, प)

४१ । पल्ल गतौ } (पल्ल, भ्वा, प) शेषो लद्वयान्तः । ञ—पालः पलः । पल्लति । (पलन्ति यद्द्विषो दिक्षु इति हलायुधः । २५९ । पलायन्ते इत्यर्थः ) ।

४२ । पेल्ल चाले च (पेल, भ्वा, प) ङ—अपिपेलत् । पिपेलतुः । चालः कम्पः । चकारात् गतौ च ।

४३ । पिल क् क्षुदि (पिल, चु, प) क—पेलयति । क्षुदि प्रेरणे ।

## पील रोधे पुलथ पुलञ महत्त्वे पुलक उत्क्षितौ ।

४४ । पील रोधे (पील, भ्वा, प) रोधः क्रियानिरोधः जडीभाव इत्यर्थः । पीलति पशुः ।

४५ । पुल थ महत्त्वे } (पुल, तुदा, प)

४५ । पुल ञ महत्त्वे } (पुल, भ्वा, प) द्वौ पञ्चमस्वरिणौ । थ—पुलति पुलिनं शरदि, महत् स्यादित्यर्थः । पोलिता । ञ—पोलः पुलः । पोलति ।

४५। पुल क उच्छ्रितौ (पुल, चु, प) पञ्चमस्वरी। उच्छ्रितिरुन्नीभावः। क—पोलयति पर्व्वतः।

## पूल् कि स्यात् संहतौ फुल्ल विकासे ञि फला भिदि।

४६। पूल कि स्यात् संहतौ (पूल, चु, भ्वा, प) षष्ठस्वरी। कि—पूलयति पूलति। संहतौराशीकरणम्।

४७। फुल्ल विकासे (फुल्ल, भ्वा, प) फ्रस्वी लह्वयान्तः। विकास इति कस ण गताविति इत्यान्तस्य घञि रूपम्, विपूर्व्वत्वेन विकसनमित्यर्थः। फुल्लति मल्लीकलिका।

४८। ञि फला भिदि (फल, भ्वा, प) ञि—फुल्तोऽसि। क्ता—फलितं फुल्तं तेन, प्रफलितः प्रफुल्तः सः। फलति काष्ठं कुठारः।

## फल् निष्पत्तौ फल् ज गतौ फेल्ल च क् वल्ल जीवने।

४८। फल निष्पत्तौ (फल, भ्वा, प) इह नवशुककोमला मणीनां रविकरसम्वलिताः फलन्ति भास इति भारविः। ५।३८। (निष्पद्यन्ते इत्यर्थः)। निष्पादनेऽपि वाल्मीकिः—फलति स्म यस्य चरितस्तोत्राय दिव्या गिर इति।

४८। फल ज गतौ (फल, भ्वा, ज्वलादि, प) ज—फालः फलः। फलति।

४९। फेल्ल च (फेल, भ्वा, प) ङ—अपिफेलत्। पिफेलतुः। चकाराद्गतौ।

५०। क वल्ल जीवने (वल, चु, प) क, म—वलयति। (जीवनं प्राणनम्)।

वल्ज धान्यावरोधे च बल्ङ दाने वधे ङ् वलक् ।
च निरूपे बिल कश भेदने बुल्क मज्जने ।

५० । वलज धान्यावरोधे च ( वल, भ्वा, प ) ज—बाल: बल: । धनस्य भावो धान्यं समृद्धि:, तस्यावरोध: प्रतिबन्ध: । बलति पुण्यहीनं विधि:, पुण्यहीनस्य समृद्धिं प्रतिबध्नातीत्यर्थ: । अयमर्थोऽन्यैर्न मन्यते । चकाराज्जीवने च । बलत्यन्नेन लोक: ।

५० । वलङ दाने वधे ( वल, भ्वा, आ ) ङ—वलते ।

५० । ङ वल क च निरूपे ( वल, चु, आ ) ङ, क—वालयते धर्मं धीर: । अयं कैश्चिन्न मन्यते । चकारात् वलङ च । ( निरूपणार्थक: ) ।

५१ । बिल कश भेदने ( बिल, चु, तुदा, प ) तृतीयस्वरी । क—बेलयति । श—बिलति ।

५२ । बुल्क मज्जने ( बुल, चु, प ) पञ्चमस्वरी । क—बोलयति प्रस्तर: पयसि । तालव्यवर्गादिरयमिति केचित् । चोल: वस्त्रम् । निशा वीणा वाणी निचुलयति चोलेन निभृतमिति शङ्कराचार्य्य: । अत्र निचुलयतीति ञेरनित्यताया कृगृह्यामीति क प्रत्यये निचुलां करोतीति ञौ साध्यम् । मग्ना करोतीत्यर्थ: । तालव्यवर्गाद्यादिपक्षे उच्चार्येऽप्ययम् ।

भलङ् भल्कङ् भिल्क वादिवद्भल्लङ तु भलङवत् ।

५३ । भल ङ वादिवत् ( भल, भ्वा, आ )
५३ । भल क ङ वादिवत् ( भल, चु, आ )
५४ । भिल क वादिवत् ( भिल, चु, प ) ङ—भलते ।

क, ङ—भालयते । क—भेलयति । बादिवदिति—(एते त्रयो धातवः पूर्व्वोक्ता बकारादयः बलङ, ङ बलक, बिलक श इतिवदर्थबोधका इत्यर्थः । ततश्चैते धातव इत्थं पठनीयाः । यथा—भलङ दानवधनिरूपणेषु, भलक ङ निरूपणे, भिलक भेदने इत्यर्थः ।

५५ । भल्ल ङ तु भलङवत् ( भल्ल, भ्वा, श्वा ) लद्वयान्तः । ङ—भल्लते । भलङवत् दानवधनिरूपणेष्वित्यर्थः ।

## मल् मल्लङ धृतौ मील्ट निमेषे मिल श्रञ् श्लिषि ।

५६ । मल ङ धृतौ ( मल, भ्वा, श्वा )
५७ । मल्ल ङ धृतौ ( मल्ल, भ्वा, श्वा ) शेषोलद्वयान्तः ।
ङ—मलते, मल्लते । ( धृतिर्धारणम् )

५८ । मील्ट निमेषे ( मील, भ्वा, प ) चतुर्थस्वरी । ट—अमिमीलत् । मीलति चक्षुः, पक्ष्मभिराहतं स्यादित्यर्थः ।

५९ । मिल श ञ श्लिषि ( मिल, तुदा, च ) श्लिषि सम्बद्धीभावे । श, ञ—मिलति मिलते लता वृक्षेण । अयं विभाषया कुटादिरिति कुलचन्द्रः । तेन मिलिष्यन्ति । महापातकिनः पञ्च मिलितव्यं न तैः सहेति । एवं व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरमिति जयदेवः ।

## मुल् मूलक् रोपणे मूलञ् प्रतिष्ठायां ललक् ङ तु । ईप्सायां वेल्ल वेल् वेह्ल चाले वलसि वल्लङ । स्तृतौ विलश् च शल ङ चलने च शलञ् गतौ ।

६० । मुलक रोपणे ( मुल, चु, प )
६१ । मूलक रोपणे ( मूल, चु, प ) द्वौ क्रमात्

पञ्चमपष्ठस्वरिणौ। रोपणमारोपणम्। क—मोलयति, मूलयति तरुं लोकः। गोविन्दभट्टस्तु रोहणेति पठित्वा रोहणं जननेति व्याख्याति।

६१। मूल ञ प्रतिष्ठायाम् (मूल, भ्वा, उ) पवर्गशेषादिः पष्ठस्वरी। प्रतिष्ठा स्थितिरिति गोविन्दभट्टः। मूलति मूलते यशः। अयं परस्मैपदीति केचित्।

६२। लल कङ तु ईप्सायाम् (लल, चु, आ) क, ङ— लालयते। ईप्सा आप्तुमिच्छा।

६३। वेल्ल चाले } (वेल्ल, भ्वा, प)
६४। वेल्ल चाले } (वेल, भ्वा, प)
६५। वेह्ल चाले } (वेह्ल, भ्वा, प) त्रय एकादश-स्वरिणः। आद्यो लद्दयान्तः, शेष उष्मचतुर्थोपधः। ऋ—अविवेल्लत् अविवेलत् अविवेह्लत्। आद्यन्तयोः ऋदनुबन्धः कृतः कुटादिपाठवन्निष्फलः, वेदेषूच्चारणभेदार्थो वा। चालः सञ्चलनम्। उद्वेल्लङ्कुजवल्लिकङ्कणझनत्कारः क्षणं वार्य्यतामिति। एते गता-वित्येके। शेषः कैश्चिन्न मन्यते।

६६। वल मिङ स्तृतौ } (वल, भ्वा, आ)
६७। वल्ल ङ स्तृतौ } (वल्ल, भ्वा, आ) शेषो लद्दयान्तः। स्तृतिरिह संवरणम्। मि—वलयति वालयति। ङ—वलते वल्लते धनं लोकः, संवृणोतीत्यर्थः। (कुवलयं वलयन् मरुदा ववाविति माघः। ६। ३।

६८। विलश च (विल, तुदा, प) तृतीयस्वरी। चकारात् स्तृतौ। स्तृतिराच्छादनम्। श—विलति वस्त्रं लोकः, परिदधातीत्यर्थः। वेलिता। अयं कैश्चिन्न मन्यते।

६६ । शल ङ चलने च (शल, भ्वा, आ) ङ—शलते । चलनं कम्पः । चकारात् स्तुतौ, स्तुतिरिह संवरणम् ।

६६ । शल ञ गतौ ( शल, भ्वा, प ) ञ—शालः शलः ।

## शल् ङक् श्लाघे शल स्वल्ल स्वल् वेगे ङ् शाल्ट कत्थने ।

६६ । शल ङक श्लाघे ( शल, चु, आ ) ङ, क—शालयते पण्डितं धीरः ।

६६ । शल वेगे ( शल, भ्वा, प )
७० । स्वल्ल वेगे ( स्वल्ल, भ्वा, प )
७१ । स्वल वेगे ( स्वल, भ्वा, प ) शेषौ द्वौ वकारयुक्तादी । मध्यमो लद्वयान्तः । शलति स्वल्लति स्वलति । वेगः शीघ्रगतिः ।

७२ । ङ शाल्ट कत्थने ( शाल, भ्वा, आ ) कत्थनं प्रशंसा । ङ—शालते गुणिनं गुणी । ऋ—अशशालत् ।

## शिल शुञ्छे ञि शील स्यात् समाधौ श्मील् निमेषणे ।

७३ । शिल श शुञ्छे ( शिल, तुदा, प ) तृतीयस्वरी । शुञ्छ उद्धृतशस्यशेषाहरणम् । श—शिलति धान्यं दीनः । शेलिता ।

७४ । ञि शील स्यात् समाधौ (शील, भ्वा, प) चतुर्थस्वरी । ञि—शीलितोऽस्ति । समाधिः सेवानुभावनं प्रवृत्तिर्वा । यः शीलति सदा धर्ममिति हलायुधः । २४५ ।

७५ । श्मील निमेषणे ( श्मील, भ्वा, प ) ओष्ठवर्गशेषयुक्तः । श्मीलति चक्षुः, चक्षुभिरावृतं स्यादित्यर्थः ।

## मूल् रुजायां शेल पेल् केलृवत् ष्ठलज स्थितौ।

७६। म्लूल रुजायाम् ( म्लूल, भ्वा, प ) षष्ठस्वरी। म्लूलति लोकं रोगः।

७७। शेल्ट केल्टवत् } ( शेल, भ्वा, प )

७८। पेल्ट केल्टवत् } ( पेल, भ्वा, प ) द्वौ क्रमात्तालव्य-मूर्द्धन्यादी। ङ—अशिशेलत्, अपिपेलत्। केल्टवत् चालगत्यो-रित्यर्थः।

७९। ष्ठलज स्थितौ ( ष्ठल, भ्वा, प ) ज—स्थाल: स्थलः। स्थलति लोकस्तिष्ठतीत्यर्थः। तिष्ठालयिषति।

## पिल् शुञ्छे पल् गतौ स्थल्ज स्थाने स्खल्मि चये चले।

८०। पिल श उञ्छे ( पिल, तुदा, प ) उञ्छ उद्धृतशस्य-शेषापहरणम्। श—सिलति धान्यं दीनः। सेलिता।

८१। पल गतौ ( पल, भ्वा, प ) मूर्द्धन्यादिः। सलति। सिषालयिषति।

८२। स्थल ज स्थाने ( स्थल, भ्वा, प ) दन्त्यादिः। ज—स्थालः स्थलः। तिस्थालयिषति। अयं नास्तीति केचित्।

८३। स्खल्मि चये चले ( स्खल, भ्वा, प ) मि—स्खलयति वचनं ते सर्व्वथा सुभ्रु खेदमिति मालत्याम्। स्खालयति। चस्खाल। चयः सञ्चयः। स्खलति पुष्पं मालिकः, सञ्चिनो-तीत्यर्थः। चलः स्खलनम्। स्खलति पत्रं दृक्षस्य। दृढः प्रेमा भग्नः सदसिरिव सन्धिं न लभते लभेतापि प्रायः स्खलति खलु यत्नैरपि धृत द्युति।

स्फुल् शि स्फूर्त्तौ च स्खल श चाले चस्मील् निमेषणे।

८४। स्फुल शि स्फूर्त्तौ च (स्फुल, तुदा, प) शि—स्फुलति, अस्फुलीत्, पुस्फोल। स्फूर्त्तिः प्रकाशः। चकारात् चयचलयोश्च।

८५। स्खल श चाले च (स्खल तुदा, प) आद्यस्वरी। श—स्खलती स्खलन्ती। पस्खाल। विस्खलियति। मास्खल्यते। सुरद्विपास्फालनकर्कशाङ्गुलाविति रघुः। ३। ५५। चालश्चलनम्। चकारात् स्फूर्त्तौ च। अयमपि पञ्चमस्वरीति भ्रमो हेयः। तथात्वे कामधेनौ स्खलती स्खलन्तीत्युदाहरणासङ्गतेः। न च तत्रापि पञ्चमस्वर एवेति वाच्य तर्हि शुधास्यानिनां पुलतिप्रभृतीनामिव तिवादेरेवोदाहर्त्तुमुचितत्वात्। यत्तु अस्मिन् सत्यपि स्फुलतेरेव घञि स्फाल इति निपातनं तत् स्फोल इत्यनिष्टपदनिवारणार्थम्, अस्य सर्वसम्मतत्वाभावाच्च। अतएव स्खल इत्येके इति रमानाथः।

८६। स्मील निमेषणे (स्मील, भ्वा, प) ओष्ठ्यवर्गशेषयुक्तः। स्मीलति चक्षुः, पक्ष्माभिराष्टतं स्यादित्यर्थः।

सेलृ कैले ह्वल ह्मलम चाले ऊलण् हतौ छर्दि।

८७। सेलृ कैले (सेल, भ्वा, प) ऌ—असिसेलत्। कैले चालगत्योः।

८८। ह्वलम चाले } (ह्वल, भ्वा, प)

८९। ह्मलम चाले } (ह्मल, भ्वा, प) आद्यो वकारयुक्तः शेष ओष्ठ्यवर्गशेषयुक्तः। म—प्रह्वलयति। ह्वलयति ह्वालयति। ह्मलयति ह्मालयति (ज्वलह्वल ह्मलेति वा ह्रस्वः) चालश्चलनम्।

९०। ऊलण् हतौ छर्दि (ऊल, भ्वा, प) ण—ऊोलः ऊलः। छर्दीति अच्छदि अ संहताविल्यस्य रूपं, संवरणे इत्यर्थः।

छिलश् छावकृतौ छलज विलेखे ला नवतिस्त्रिभिः ।

८१ । छिल श छावकृतौ ( छिल, तुदा, प ) तृतीयस्वरी । एकोऽर्थः । श—छिलति तक्ष्णा तक्षणः ।

८२ । छल ज विलेखे ( छल, भ्वा, प ) ज—छालः छलः । छलति भूमिं कृषकः ।

ला नवतिस्त्रिभिः । ( लान्तास्त्रिनवतिसंख्यकाः ) । अत्र संख्यायामेकोनास्तीति चिन्त्यम् ।

---

## वान्तवर्गः ।

अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ ।
प्राप्तौ श्लेषेऽर्थने वेशे भावे दृष्टौ ग्रहे वधे ।
सामर्थ्येऽवगमे कामे धृतावर्व वधे द्रुवि ।
व्याप्तिप्रीणनयोरुर्वी हिंसे नृ क्षवि क्षतौ चङ ।
केष्ट सेवे कर्व दर्पे क्षाव घङ भये चिव ।
त्रिव्यु चीव निरासे चीव् कव स्तोष्टङ वान्तवत् ।

१ । अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ प्राप्तौ श्लेषेऽर्थने वेशे भावे दृष्टौ ग्रहे वधे सामर्थ्येऽवगमे कामे धृतौ (अव, भ्वा, प ) ऊनविंशतिरर्थाः । कान्तिरिच्छा, कमुङ स्पृहेति योगार्थत्वात् । काम इति अन्ताहत्यत्तेरिच्छोत्पादना इति भेदः । द्युतिः शोभा, श्रुतिराकर्णनम्, श्लेष आलिङ्गनम्, अर्थनं याच्ञा, वेशः प्रवेशः, भावः सत्ता, ग्रह आदानम्, सामर्थ्यं शक्तिः,

अवगमो ज्ञानम्, इतिर्धरणं, रक्षणे प्रसिद्धोऽयम्। प्रीतौ तु न मामवति सद्वीपा रत्नसूरपि मेदिनीति रघुः।१।६५। केचित्तु ग्रहणस्थाने दहनं पठन्ति (१)। अवति।

२। अर्व वधे (अर्व, भ्वा, प) अर्वति।

३। हुवि व्याप्तिप्रीणनयोः (हुन्व, भ्वा, प) कुसादिः। हु—हुन्व्यते। हन्त्यवकारपरत्वान्नानुस्वारः। प्रीणनं कैश्चिन्न मन्यते।

४। उर्वी हिंसे (उर्व, भ्वा, प) कुसादिः। व्योनच्तयीति दीर्घे ऊर्वति। क्विपि राच्छोर्लोप इति वलोपे ऊः ऊरौ ऊरः। एवं सर्वत्र। ई—ऊर्णः।

५। न क्षवि क्षतौ च (क्षण्व, स्वा, प) सप्तमस्वरी। न—क्षणोति (क्षविधिव्योः क्षधीश्यौ) इ—क्षण्वाते। चकाराद्धिंसे च।

६। ङ केष्ट सेवे (केव, भ्वा, आ) ङ—केवते। ऋ—अचिकेवत्।

७। कर्व दर्पे (कर्व, भ्वा, प) कर्वति।

८। क्षवप्न ङ भये (क्षव, भ्वा, आ) अन्तःस्थाद्वतीययुक्तः। प—क्षवा। म—क्षवयति। ङ—क्षवते। विक्षवन्ति दिवि ग्रहा इति तु पचादित्वादनि विक्षवा इवाचरन्तीति क्वौ साध्यम्।

९। चिवु निरासे (चिव, भ्वा, प)
९। चिव्यु निरासे (चिव, दिवा, प)
१०। चीव निरासे (चीव, भ्वा, प) द्वावाद्यौ कुसिनौ,

---

(१) केचित्तु स्तुतिभागमहकामष्टतीर्न पठित्वा क्रियाश्रयवहनभावानाङ्-रिचयपि पाठ।

षेपो दीर्घो। निरास इह फुत्कार इति भट्टमल्लः, मुखेन श्लेष्मादेर्वमनमिति केचित्। ष्ठ्यक्पाठात् मूर्ध्यो भ्वादिः। ष्ठेवति। ड—ष्ठेविला ष्ट्यूत्वा। य—ष्ठीव्यति। ड—ष्ठेविला ष्ट्यूत्वा। ष्ठीवत्यन्नं लोकः। (फुत्करोतीत्यर्थः)

१०। ष्ठीटङ वान्तवत् ⎫ (ष्ठीव, भ्वा, प्या)
११। कटङ वान्तवत् ⎬ (कव, भ्वा, प्या)
१२। क्षीटङ वान्तवत् ⎭ (क्षीव, भ्वा, प्या) ष्ट—

षचिष्ठीवत्, षचकावत्, षचिक्षीवत्। ङ—ष्ठीवते, (ष्ठीवते दर्पगर्वित इति हलायुधः। ८५) कवते, क्षीवते। वान्तवदिति ष्ठीटङ दर्पे, कटङ स्तुतौ वर्णे, क्षीटङ यथार्थ इत्यर्थः। (ष्ठीश्चवकारान्तानामेतत्सजातीयानां त्रयाणामिवार्थो एषाममीत्यर्थः)।

**खवग् खच्वत् खर्व गर्वे खेव् गेव् ग्लेटङ सेव ई। गुर्वुद्यमे गर्व मदे चीटञ ग्रहसंद्दतौ।**

१३। खव ग खचवत् (खव, क्या, प) खचवदिति भूतिपूत्योत्पत्तौ। ग—खौनाति राजा, सम्बद्धः स्यादित्यर्थः। च्छ्रोःशूटावित्यूट्, आद्रूटोमिः। क्विपि खौः खावौ खावः। क्नौ खौतिः। केचित्तु प्वादित्वात् ह्रस्वे खुनातीत्याहुः। धातुपारायणस्तु खव्नातीत्युदाहरन्ति।

१४। खर्व गर्वे (खर्व, भ्वा, प) खर्वति।

१५। खेटङ सेवे ⎫ (खेव, भ्वा, प्या)
१६। गेटङ सेवे ⎬ (गेव, भ्वा, प्या)
१७। ग्लेटङ सेवे ⎭ (ग्लेव, भ्वा, प्या) ग्रेपोऽन्तःस्यात्तीय-

युक्तः । ऋ—अचिखेवत्, अजिगेवत्, अजिग्लेवत् । ङ—खेवते, गेवते, ग्लेवते ।

१८ । ई गुर्वैद्यमे ( गुर्व, भ्वा, प ) क्रस्ती । गूः गुरौ गुरः । ई—गूर्णः । गूर्वति पक्तिः खड्गम् ।

१९ । गर्व मदे ( गर्व, भ्वा, प ) मद इहाहङ्कारः । नीचो गर्व्वति सम्पदा ।

२० । चीवृञ् ग्रहसंवृतौ ( चीव, भ्वा, उ ) चतुर्थस्वरी । ऋ—अचिचीवत् । ञ—चीवति चीवते वल्कलं भिक्षुः, गृह्णाति परिदधाति वेत्यर्थः । (अर्थद्वयं, ग्रहो ग्रहणं, संवृतिराच्छादनम्) ।

चीवक् दीप्तौ चर्व कितु भच्चे जुर्वी वधे जिवि ।
प्रीणने जीवऋट् प्राणे णिवि सेकेऽथ नीवतु ।
स्थौल्ये तीव च तुर्वी तु हिंसे तेट्टङ् देवने ।

२० । चीवक् दीप्तौ ( चीव, चु, प ) चतुर्थस्वरी । क—चीवयति ।

२१ । चर्व कितु भच्चे (चर्व, चु, भ्वा, प) कि—चर्वयति चर्वति तण्डुलान् बालः ।

२२ । जुर्वी वधे ( जुर्व, भ्वा, प ) क्रस्ती । क्विपि जूः जुरौ जुरः । ई—जूर्णः ।

२३ । जिवि प्रीणने ( जिन्व, भ्वा, प ) क्रस्ती । इ—जिन्व्यते जिन्वति लोकः पितरम् ।

२४ । जीव ऋट प्राणे ( जीव, भ्वा, प ) चतुर्थस्वरी । ऋ—अजीजिवत् अजिजीवत् । प्राण' प्राणधारणम् । जीवति लोकः ।

२५। णिवि सेके (णिन्व, भ्वा, प) क्रस्वी। ड—निन्व्यते। निन्वति।

२६। अथ नीव तु स्थौल्ये (नीव, भ्वा, प) चतुर्थस्वरी। नीवति लोकः स्थूलः स्यादित्यर्थः।

२७। तीव च (तीव, भ्वा, प) चतुर्थस्वरी। चकारात् स्थौल्ये।

२८। तुर्वी तु हिंसे (तुर्व, भ्वा, प) क्रस्वी। क्विपि तूः तुरौ तुरः। ई—तूर्णः।

२९। तेवृङ देवने (तेव, भ्वा, प) देवनमिह क्रीड़ा। अ— अतितेवत्। ङ—तेवते कन्दुकैर्नित्यमिति। देवनमिह रोदनमिति भट्टमल्लः।

## थुर्व दुर्वी वधे दिव्यु जिगीषेच्छापणिद्युतौ।
## क्रीड़ागत्योर्दिवि प्रीतौ दिव काङ् परिकूजने।

३०। थुर्व वधे } (थुर्व, भ्वा, प)
३१। दुर्वी वधे } (दुर्व, भ्वा, प) द्वौ क्रस्विनौ। क्विपि थूः थुरौ थुरः, दूः दुरौ दुरः। ई—थूर्नः दूर्णः।

३२। दिव्य जिगीषेच्छापणिद्युतौ क्रीडागत्यो (दिव, दिवा, प) य—दीव्यति। उ—देवित्वा द्यूत्वा। दीव्यमानं शितान् बाणानिति भट्टौ (५। ८१) ताच्छील्ये शतुः शानः। पणिर्व्यवहारः स्तुतिश्च। व्यवहारस्तु क्रयणविक्रयणास्वरूपः। द्युतावेवाकर्म्मकः। क्रीडायान्तु दीव्यतेः करणस्य नित्यं कर्म्मत्वम्, तत्र तृतीया विभक्तिरेव विभाव्यते इति साम्प्रदायिकाः। तेन अक्षा दीव्यन्ते छात्रेणेति कर्म्मणि प्रत्ययः स्यात्। अक्षैर्दीव्यते छात्रेणेति भावे

प्रत्ययो न स्यात् (१)। यच्चैदेवयते छात्रेण गुरुरित्यत्र यञ्जन्तकर्त्तुः कर्मत्वं न स्यात्। तेनादुद्यूपयद्रामं यगेण यगलोचनेति भट्टौ तु, तेनेति करणं दुद्यूपेरेव न तु दीव्यतेः। तेनाकर्मकत्वात् राममित्यञ्जन्तकर्त्तुः कर्मत्वम् ।

३२। दिवि प्रीतौ (दिन्व, भ्वा, प) इ—दिन्व्यते। प्रीतिरिह प्रीतीकरणम्। दिन्वति लोकः पितरम्।

३२। दिव कङ परिकूजने ( दिव, चु, आ ) क, ङ—परिदेवयते कश्चित्तस्य राष्ट्रे न दुःखित इति हलायुधः। ६०।

## क दिवर्द्दे देटङ तु देवने दव् धवि व्रजे ।

३२। क दिवर्द्दे ( दिव, चु, प ) क—देवयति। अर्द्द इह पीडनमिति मैत्रेयः। याचनं गमनं वेति रमानाथः।

३३। देट ङ तु देवने ( देव, भ्वा, आ ) देवनमिह क्रीडा। अ—अदिदेवत्। ङ—देवते कान्दुकैर्नित्यमिति हलायुधः। ६०। देवनमिह रोदनमिति भट्टमल्लः।

३४। दवि व्रजे } ( दन्व, भ्वा, प )
३५। धवि व्रजे } ( धन्व, भ्वा, प ) इ—दन्व्यते, धन्व्यते, व्रजो गतिः।

## धिविन् प्रीतौ गतौ धुर्वी हिंसे धावुञ् जवे स्टजि ।

३६। धिविन् प्रीतौ गतौ ( धिन्व, स्वा, प ) प्रीतिरिह प्रीती-

---

(१) कर्मणि विद्यमानेऽपि भावे क्तप्रत्ययः स्यादिति भाष्यादीनां मतम्। केचित्तु तत्र व्याख्यातप्रत्ययमपीच्छन्ति तेन कृत्यर्थादिधातूनां कर्मणि षष्ठी-प्रसङ्गे मात्र अर्थते पुष्पेभ्यादुदाहृतवन्त ।

करणम्। णू—धिन्वयते। न—धिनोति च्यवेन हिरण्यरेतसमिति भारविः। १। २२। गतिः कैश्चिन्न मन्यते।

३७। धुर्वी हिंसे (धुर्व, भ्वा, प) कम्सी। क्विपि धूः धुरौ धुरः। ईू—धूर्णः। क्तवेच धात्ये धूर्त्त इति मनीषादित्वान्निपातः।

३८। धावु ञ जवे वलि (धाव, भ्वा, उ) उ—धावित्वा धौत्वा। ञ—धावति धावते। जवः शीघ्रगतिः। यस्य रोषाद्भया इवविधीवते यत्र धावते। पाशपाणिः पुनस्तत्र यमदूतोऽपि धाव-तीति चलायुधः। १२८। वट् शुद्धीभावः शुद्धीकरणञ्च। धावति ताम्रमस्त्रेन, शुध्यतीत्यर्थः। इधाषाङ्किततव्नुः सुग्रीवस्य विमीमन्द इति भट्टिः। १४। ५०। अस्य क्ते निष्ठाया अप्रयोगः। (इन्द्र धावितेति पदं तत् धावोधावनं च जातोऽस्य इति वाक्ये इत-प्रत्ययसाधितम्)।

## स्त्रवङ् गत्यां स्रेव पेट ङ सेवे पिवि सेचने।

३९। स्त्रव ङ गत्याम् (स्त्रव, भ्वा, आ) अन्तःस्थान्तीयदुन्तः। ङ—स्त्रवते।

४०। स्रेट ङ सेवे } (स्रेव, भ्वा, आ)
४१। पेट ङ सेवे } (पेव, भ्वा, आ) पाद्योऽन्तःस्थान्तीय-युक्तः। अट—अपिस्रेवत्, अपिपेवत्। ङ—स्रेवते, पेवते।

४२। पिवि सेचने (पिन्व, भ्वा, प) तृतीयस्वरी। णू—पिन्वयते।

## पीव स्थौल्ये मर्व मुर्व पूर्त्तौ पूर्वक् निकेतने।

४३। पीव स्थौल्ये (पीव, भ्वा, प) दन्त्यवर्गीयस्वरी। पीवति लोकः, स्थूलःस्यादित्यर्थः।

४४ । पर्व पूर्त्तौ } ( पर्व, भ्वा, प )
४५ । पुर्व पूर्त्तौ } ( पुर्व, भ्वा, प ) शेषः पञ्चमस्वरी । पूः पुरौ पुरः । पर्वति, पुर्वति पयसा कुम्भं चेटी ।

४६ । पूर्वक् निकेतने ( पूर्व, चु, प ) षष्ठस्वरी । निकेतनमिह निमन्त्रणं निवासो वा । क—पूर्व्ययति द्विजान् भोजनाय गृही, पूर्व्ययति तीर्थे साधुः ।

भर्व हिंसे मीव पीवे मर्व पूर्त्तौ गतौ मिवि ।
सेके सुर्वी मव नद्धे मेव क्लेट्टङ सेवने ।

४७ । भर्व हिंसे ( भर्व, भ्वा, प ) रेफोपधः । भर्वति ।

४८ । मीव पीवे ( मीव, भ्वा, प ) चतुर्थस्वरी । मीवति । पीवः स्थूलीभावः ।

४९ । मर्व पूर्त्तौ गतौ (मर्व, भ्वा, प) मर्वति पयसा कुम्भं चेटी ।

५० । मिवि सेके ( मिन्व, भ्वा, प ) इ—मिन्व्यते । मिन्वति ।

५१ । सुर्वी नद्धे } ( सुर्व, भ्वा, प )
५२ । मव नद्धे } ( मव, भ्वा, प ) आद्यः पञ्चमस्वरी । स्तुः सुरौ सुरः । ई—स्तूर्णः । नद्धो बन्धनम् । मवति चौरं लोकः ।

५३ । मेट्ट ङ सेवने } ( मेव, भ्वा, आ )
५४ । क्लेट्ट ङ सेवने } (क्लेव, भ्वा, आ) शेषोऽन्तःस्थातृतीययुक्तः । ङ—अमिमेवत्, अचिक्लेवत् । ङ—मेवते, क्लेवते ।

रीटञ् चीवे रेट्टङ तु गतौ रव् रिवि च व्रजे ।

• ५५ । रीट ञ चीवे (रीव, भ्वा, उ) ङ—अरिरीवत् । ञ—रीवति रीवते । चीवे—ग्रहणसंवरणयोः ।

५६। रेट ङ तु स्रुतौ (रेव, भ्वा, आ) स्रुतिः स्रवेण गमनम्। अ—अरिरेवत्। ङ—रेवते कपिः, उत्प्लुत्य गच्छतीत्यर्थः।

५७। रखि व्रजे (रख, भ्वा, प)

५८। रिखि च व्रजे (रिख, भ्वा, प) द्वौ रेफादी। इ—रङ्खाते, रिङ्खाते। चकारात् रेट ङ च (व्रजार्थकः) व्रजो गतिः।

श्रव् विकारे च शर्व् हिंसे षिव्यु तन्तुततौ ष्ठिवु।
ष्ठिव्य ष्ठीव निरासेऽथ स्यात् षेट्ङ ञ सेवने।

५९। श्रव विकारे च (श्रव, भ्वा, प) श्रवति चित्तं कामः। चकाराद्व्रजे च।

६०। शर्व हिंसे (शर्व, भ्वा, प) तालव्यादिः। शर्वति।

६१। षिव्यु तन्तुततौ (षिव, दिवा, प) मूर्द्धन्यादिः। तन्तुततिस्तन्तुभिर्ग्रन्थनम्। य—सीव्यति वस्त्रं सौचिकः। उ—सेवित्वा, स्यूत्वा।

६२। ष्ठिवु निरासे (ष्ठिव, भ्वा, प)
६३। ष्ठिव्य निरासे (ष्ठिव, दिवा, प)
६४। ष्ठीव निरासे (ष्ठीव, भ्वा, प) द्वावाद्यौ ह्रस्विनौ, शेषो दीर्घी। उ—ष्ठेवित्वा, ष्ठ्यूत्वा। ष्ठीवति (ष्ठिवुक्लमाचमोऽपि घे इति दीर्घः)। य—ष्ठीव्यति। आद्यस्य क्त्वावेट्त्वान्नेमुडीश्वीत्यनेन इमो निषेधे निष्ठायां ष्ठ्यूतः, मध्यमस्य तु ष्ठिवित इति भेदः। ष्ठिवुक्लमाचमोऽपीत्यनेन यस्य ह्रस्विनो दीर्घः क्रियते, ष्ठीविष्यति ष्ठीवितव्यमित्यादिदर्शनात् स एवायं दीर्घो पठितो न तु तद्भिन्नो धातुः। तेन ह्रस्विनो ग्रहणेनैवास्मिन् गृहीते भ्वाद्यादिणा इत्यनेन मूर्द्धन्यस्य दन्त्यसो न स्यात्, एवं ष्ठिवजाद्योरित्यादिना खेष्ठ-

कारस्य तकारे तिष्ठीव टिष्ठीव इत्याद्यपि स्यात् । यत्तु अस्मिन् सत्यपि अनटि ष्ठीवनमिति निपातनं, तदस्य सर्व्वसम्मतत्वाभावात् । निरास इव थुत्कार इति भट्टमल्लः । मुखेन श्लेष्मादेर्वमनमिति केचित् । ष्ठीवत्यन्नं लोकः । ष्ठीवामि श्रुक्केचुलताश्विकल्पमिति ।

६३ । षथ स्यात् षेवृङ ञ सेवने ( षेव, भ्वा, उ ) अद्— असिषेवत् । ञ—सेवति सेवते । ङ—सेवते । ( अस्य ञानुबन्धित्वं परस्मैपदित्वे मतभेदज्ञापनार्थम् ) । सेवनमाराधनमुपभोग आश्रयणञ्च । विष्णुं सेवते, सुखं सेवते, तीर्थं सेवते साधुः । अन्येत्वस्मात् परस्मैपदममन्यमाना "नीचं सद्द्रुमपि सेवति नीच एवेति" "स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिन" इत्यादौ गणकृतानित्यत्वमाहुः । वक्ष्यमाणे दन्त्यादावप्येवं व्याख्येयम् ।

पान्त्व सान्त्वक् सामयोगे स्रिव्यु शोषे गतौ ञ ङ ।
सेट सेवे ह्विवि प्रीतौ वान्ता इत्यष्टषष्टिकाः ।

६४ । पान्त्वक सामयोगे } ( षान्त्व, चु, प )
६५ । सान्त्वक सामयोगे } ( सान्त्व, चु, प ) द्वौ क्रमान्मूर्द्धन्यदन्त्यादी । सिषान्त्वयिषति, सिसान्त्वयिषति । क—सान्त्वयति शोकार्त्तं दयालुः ।

६६ । स्रिव्यु शोषे गतौ ( स्रिव, दिवा, प ) रेफयुक्तसकारादिस्तृतीयस्वरी । य—स्रीव्यति । उ—स्रेवित्वा स्रूत्वा । सिस्रेव ।

६७ । ञ ङ सेट सेवे ( सेव, भ्वा, उ ) ञ—सेवति सेवते । अद्—असिसेवत् ।

६८। हिवि प्रीतौ (हिन्व, भ्वा, प) इ—हिन्वति। प्रीतिरिह प्रीतीकरणम्। हिन्वति लोकः पितरम्।

वान्ता इत्यष्टषष्टिकाः।

---

## शान्तवर्गः ।

अशूङ् व्याप्तिसंहत्योरशग् भोजन ईश् ल ङ ।
ऐश्वर्य्ये कश शब्दे य काश काश्ङ् द्युतौ कुशि ।
किच कुशेर् श्लिषि क्रुशञौ रोदे ह्रतौ क्रशिर्यतु ।
कार्श्ये क्लेशङ् वधेङ्क्लिश्युञ् चोपतापे क्लिशू ग तु ।
विबाधे णश् ल्टय् नाशे णिश शीले दृशिक् त्विषि ।

१। अशू ङ न व्याप्तिसंहत्योः (अश, स्वा, आ) ऊ—अशिष्यते अक्ष्यते। ङ, न—अश्नुते। संहतिः समूहः। (खं प्राष्टषेण्यैरिव चानशेऽब्दैरितिभट्टिः। २। ३०)।

१। अशग भोजने (अश, क्र्या, प) ग—अश्नात्यन्नं बुभुक्षितः। (अशिता अष्टा, वेम् सहलुभेति वेम्)।

२। ईश लङ ऐश्वर्य्ये (ईश, अदा, आ) दीर्घादिः। ऐश्वर्य्यमीश्वरीभावोऽधीनीकरणञ्च। ल, ङ—ईष्टे धनी। विषयाणाञ्च नेशिषे इति भट्टिः। १८। १५। अत्र कर्म्मणि षष्ठी।

३। कश शब्दे (कश, भ्वा, प) कशति।

४। य काश ङ द्युतौ } (काश, दिवा, आ)

४। काश्ङ द्युतौ } (काश, भ्वा, आ) य, ङ—काश्यते।

ङ—काशित्वा काष्टा । श्व—अचकाशत् । ङ—काशते चन्द्रः । शेषोदन्त्यान्त इत्येके ।

५ । कुशि कि च ( कुन्श, चु, भ्वा, प ) पञ्चमस्वरी । इ— कुंशयते । कि—कुंशयति कुंशति । चकारात् द्युतौ ।

५ । कुश्येर श्लिषि ( कुश, दिवा, प ) य—कुश्यति बाला कान्तम् । इर्—अकुशत् अकोशीत् । अस्मान्नित्यं ङ इति दुर्गः ।

६ । कृश औ रोदे ह्वतौ ( कृश, भ्वा, प ) ञ—कोशः कृशः । औ—अकुचत् । रोदोऽश्रुविमोचनम्, ह्वतिराह्वानम् । ( विचुकुशु केचन सास्त्रमुच्चैरिति भट्टि । ३।१० ) ।

७ । कृशिर्य तु कार्श्ये ( कृश, दिवा, प ) कार्श्यं कृशीकरणम् । इर्—अकृशत् अकर्शीत् । अस्मान्नित्यं ङ इति दुर्गः । य— कृश्यति चन्द्र कृष्णपक्ष ।

८ । क्लेश ङ वधे (क्लेश, भ्वा, आ) एकादशस्वरी । एतदाद्यास्त्रयोऽन्त स्थाद्वतीययुक्ताः । ङ—क्लेशते, चिक्लेशे । धातुप्रदीपे तु क्लेप व्यक्तायां वाचीति मूर्द्धन्यान्तो दृश्यते । क्लेषते (१) न वृथा वाक्यमिति हलायुधोऽपि । ८३ ।

९ । ङ क्लिश्य ञ चोपतापे ( क्लिश, दिवा, उ ) ङ, य— क्लिश्यते । ङ—क्लिशित्वा क्लिष्टा । ञ—क्लिश्यति क्लिश्यते । उपताप इह उपतप्तीभावस्तत्करणञ्च । क्लिश्यते न च निष्फलमिति हलायुधः । ८३ । क्लिश्यते तपसा स्वर्गमपीति चतुर्भुज । अन्ये-त्वस्मात् परस्मैपदममन्यमानाः क्लिश्नन्नपि हि मेधावीति, प्रत्यासन्न-

---

(१) राजश्रीशौरीन्द्रमोहन ठाकुर मुद्रित पुस्तके तु क्लेशते न मृषावाक्यमिति तालव्यशान्त पाठोऽस्तीत्युभयो क समीचीनतर इति सुधीभिश्चिन्त्यमिति ।

तुषारदीधितिकरक्लिश्यत्तमोवल्लरीत्यादि च क्लिशं करोतीति कण्ड्वादित्वात् यगि शवन्तमाहुः । ज्वालमौ चिक्लिशतुः ससीतावित्ति भट्टिप्रयोगश्च कैयादिकात् समादधते, तद्धेयं कैयादिकस्य बाधनार्थत्वात् (बाधनं पीड़नं तदर्थत्वेन सकर्मकत्वादित्यर्थः) चकारात् क्लेशङ च ( उपतापार्थकः ) ।

९ । क्लिशू गतु विबाधे ( क्लिश, क्रा, प ) विबाधो विहतिः ( विघ्नोत्पादनपीड़नादिकमित्यर्थः ) ञ—अक्लेशीत् अक्लिचत् । ग—दृश्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयमिति कुमारसम्भवम् ।२।४० ।

१० । णश्लृयू नाशे (णश, दिवा, प) नाशो दर्शनाभाव इति प्राञ्चः । लुप्तायनमिति सर्व्वस्वम् । ऌ—अनेशत् अनशत् । य—नश्यति शत्रुस्तिरोभवतीत्यर्थः । ञ—नशिष्यति नङ्क्ष्यति ।

११ । णिश शीले ( णिश, भ्वा, प ) शीले समाधौ । नेशति योगी । निनिशतुः ।

१२ । दशिक् त्विषि ( दनश, चु, प ) इ, क—दंशयति । त्विषि दीप्तौ ।

## दशिक् ङ दर्शे दनशौ च दंशे दाशन् हिंसने ।

१२ । दशिक ङ दर्शे (दनश, चु, धा) इ, क, ङ—दंशयते । दर्शो दर्शनम् ।

१३ । दनशौ च दंशे ( दनश, भ्वा, प ) औ—अदाङ्क्षीत् । दशति बिम्बफलं शुकशावकः । दंशनमित्यनुस्वारयुक्तम् । अन्येतु अनुस्वारहीनं पठित्वा तन्निर्देशादनटि नकारलोप इत्याहुः । अतएव दशनो दन्तः । चकाराद्दशिक ङ च ( दंशनार्थकः ) ।

नाहि दंशयते कश्चिद्दियया गाडुराख्ययेति हलायुधः । । २०५ । भट्टमल्लमते दंशनमिह (१) सन्नाहः, तेन सदंशयन्नदहित-शौर्यदंशनाश्नुरयन्नय इति दधिभुक्त इति माघः । १७।२१ । तनूः सकवचायक्रुरित्यर्थः । (२) अत्र परस्मैपदं चिन्त्यमिति षल्लभः । वस्तुतस्तु दंशंकरोतीति ञौ साध्यम् । (३) ।

१४ । दाशनृ हिंसने ( दाश, स्वा, प ) एतदाद्यास्त्रयो द्वितीयस्वरिणः । न—दाश्नोति । ऋ—वैदिकः ।

दाश्टक् ङ दाने दाश्टञ् च दिशौञ् शौचेऽथ दृहँशौ ।
मेच्चे धूशक् कान्तिकृतौ पिश् शशावयवे पशञ् ।
वाधे ग्रन्थे पशक् बन्धे भृश भ्रनुशिर्यधःपते ।

१४ । दाश्ट कङ दाने ( दाश, चु, आ ) ट—अददाशत् । क, ङ—दाशयते ।

१४ । दाश्ट ङ च ( दाश, भ्वा, आ ) ट—अददाशत् । ञ—दाशति दाशते । चकाराद्दाने ।

१५ । दिशौ ञ श शौचे ( दिश, तुद, उ ) औ—अदिक्षत् । ञ, श—दिशति दिशते । शौच इति उचिर् समवायने इत्यस्य श्लि रूपम् । धातूनामनेकार्थत्वादोच इह दानमाज्ञापनं वा ।

---

( १ ) दशि कङ दर्शे दंशने इत्यत्र ।

( २ ) अतएव भट्टमल्ल संवर्मयति सन्नह्यत्यात्मने सज्जतीत्यपि । सन्दंशते दंशयते सन्नाहे परपञ्चकमित्यस्य टीकायां मल्लिनाथः ।

( ३ ) केचित्तु चुरादिमूभयपदिषु पठन्तीति मल्लिनाथः ।

दिदेश कौत्साय समस्तमेवेति रघुः । ५।३० । कथनेऽप्ययं, धर्म्मं दिशति दैशिकः । (१) ।

१६ । अथ दृशिर् प्रेक्षे ( दृश, भ्वा, प ) दृर् — अदर्शत् अद्राक्षीत् । औ — द्रष्टा । प्रेक्षणं चाक्षुषज्ञानम् । पश्यति चन्द्रं लोकः । ततः स ददृशे च ताविति चण्डीप्रयोगे व्यतीहारे आत्मनेपदम् । दृश्येऽहं परमेश्वरीति गणकृतानित्यत्वादात्मनेपदम् ।

१७ । धूश क कान्तिकृतौ ( धूश, चु, प ) पञ्चस्वरी । कान्तिकृतिः शोभायुक्तकरणम् । चन्दनो धूशयत्यङ्गम् ।

१८ । पिश अवयवे ( पिश, तुदा, प ) श, प — पिंशति पटः, अवयवी स्यादित्यर्थः ।

१९ । पश ञ बाधे ग्रन्थे ( पश, भ्वा, उ ) ञ — पशति पशते । बाधो विहतिः, ( व्याघात इत्यर्थः ) ग्रन्थो ग्रन्थनम् । ग्रन्थस्थाने स्पर्शं पठन्ति केचित् ।

१९ । पश क बन्धे ( पश, चु, प ) क — पाशयति ।

२० । भृशुँ अधःपतने } ( भृश, दिवा, प )

२१ । भ्रंशुँ अधःपतने } ( भ्रंश, दिवा, प ) शेषाद्याः

(१) क्वचित् पुस्तके मूले दिश शौञ सौचे इति, टीकायाञ्च "सौच इह सूचक पैशुन्ये पचादित्वादनि सूचस्तस्य भावः सौचं दन्त्यादि । तस्यार्थो ज्ञापनं द्रोहनं कथनञ्च । प्रमाणन्तु सूचक पैशुन्ये इत्यत्र दृश्यम् । दिदेश कौत्साय समस्तमेवेति रघुः, दत्तमिति ज्ञापयामास इत्यर्थः । कौत्सायेति चतुर्थी गत्यर्थमन्यदे इत्यत्र शाब्दस्य व्यवस्थया यदभिप्रेत्य भावार्थ. प्रयुज्यते तस्मात् कर्म्मणोऽपि चतुर्थीविकल्पनात् । दानार्थत्वात् सम्प्रदाने चतुर्थीति रमानाथः । द्रोहार्थेऽस्य प्रयोगाभाव" इत्येवं पाठो दृश्यते ।

पञ्च रेफयुक्ताद्याः । भृर्—अभर्यत् अभर्यीत्, अभ्रयत् अभ्रंयीत्। आभ्यां नित्यं ङ इति दुर्ग.। य—भ्रश्यति, पूर्व्वमाधा यदैवेण भ्रश्यत्यरिपताकिनीति हलायुधः। १७६। उ—भर्षित्वा भ्रष्ट्वा; भ्रंशित्वा भ्रष्ट्वा।

## लृ भ्रन्शुङ् भ्रश्यु चभ्राश्यभ्राश्टण्टुङ्भासि तौ रनौ।

२१। लृ भ्रन्शु ङ च } ( भ्रन्श, भ्वा, आ )
२२। भ्रश्यु च } ( भ्रश, दिवा, प ) लृ—अभ्रशत्।
उ—भ्रंशित्वा भ्रष्ट्वा। ङ—भ्रंशते। य—भ्रश्यति। उ—भ्रशित्वा भ्रष्ट्वा। चकारादधःपते।

२३। भ्राश्य ञ्टण टुङ भासि } ( भ्राश, दिवा, आ )
२३। भ्राश ञ्टण टुङ भासि } ( भ्राश, भ्वा, आ )
य, ङ—भ्राश्यते। ञ्ट—अबभ्राशत्। रमते अनयोर्ञ्ट्ङि ह्रस्वविकल्पनेऽपि सन्नमस्वरानुबन्धोऽन्येषामनुरोधात्। ण—भ्रेशे बभ्राशे। टु—भ्राशथुः। ङ—भ्राशते। भासि दीप्तौ।

तौ रनौ। तौ एतौ (भ्राशधातू) रनौ च स्याताम्, रेफस्थाने दन्त्यनकारो ययोस्तौ रनौ। यथा—

२४। भ्नाश्य ञ्टण टुङ भासि } ( भ्नाश, दिवा, आ )
२४। भ्नाश ञ्टण टुङ भासि } ( भ्नाश, भ्वा, आ ) य, ङ—भ्नाश्यते। ञ्ट—अबभ्नाशत्। ण—भ्नेशे बभ्नाशे। टु—भ्नाशथुः। ङ—भ्नाशते।

## मश मिश्तुध्वनौ कोपे ञ्शशौ ञ्शि कश्रिशौष्। हिंसे लशक्शिल्पयोगे शौलिश गत्यां ङलिश्य ञौ।

तौच्छेत्र दृशिर्य्य दृत्यां श्यौ विश् प्रवेशे ङ वाश्य रुट ।
शब्दे वशलु स्पृहि श्राश स्रवने स्पृश श्यौ स्पृशि ।

२५ । मश ध्वनौ कोपे ⎫ ( मश, भ्वा, प )
२६ । मिश तु ध्वनौ कोपे ⎭ (मिश, भ्वा, प) मशकः। मेशति।

२७ । मृश श्यौ स्पृशि ( मृश, तुदा, प ) श—मृशति। श्यौ—अम्राक्षीत् अमार्क्षीत् अमृक्षत्। मृशीति तालव्यान्तस्यैव रूपम्, तेनानिर्दिष्टार्थत्वात् स्पर्शनं प्रणिधानञ्च तस्यार्थः। स्पर्शने—परामृशन् हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितमिति रघुः। ३। ६८। प्रणिधाने—रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युं, कैकयीति शेष इति भट्टिः।३।७। विमर्शः परामर्शः। मृषीति मूर्द्धन्यान्तपाठो हेयः, तर्हि चमैवार्थः स्यात्।

२८ । रुशौ श हिंसे ⎫ ( रुश, तुदा, प )
२९ । रिशौ श हिंसे⎭ ( रिश, तुदा, प ) श्यौ—अरुक्षत्, अरिक्षत्। श—रुशति, रिशति। रोक्ष्यति, रेक्ष्यति ( अनेनोदाहरणेनायं न कुटादिरिति सूचितम् )।

३० । लश क शिल्पयोगे ( लश, चु, प ) क—लाशयति कुशलो नृत्ये, शिल्प युनक्तीत्यर्थः।

३१ । श्यौ लिश गत्याम् ( लिश, तुदा, प ) श—लिशति। श्यौ—अलिक्षत्। लेष्टा।

३१ । ङ लिश श्यौ तौच्छेत्र (लिश, दिवा, आ) तौच्छ्रमल्पीभावः। ङ, य—लिश्यते धर्म्मः कलौ। श्यौ—लेष्टा।

३२ । दृशिर्य्य दृत्याम् ( दृश, दिवा, प ) इर्—अदृशत् अदर्शीत्। अस्माभिर्दृष्टं इति दुर्गः। य—दृश्यति वरं कन्या।

३३। ओ विश प्रवेशे (विश, तुदा, प) श—विशति। औ—अविक्षत्। विवेश कश्चिज्जटिलस्तपोवनमिति कुमारसम्भवम्। ५।३०। विपराभ्यामुपसर्गाभ्यामात्मनेपदविधानेऽपि 'अङ्के निविशतो मयाद्रि'ति रघौ केवलात् शतृप्रत्ययं विधाय पश्चादुपसर्गेण योग इति दुर्घटवृत्तिः। निशब्द इहोपसर्गप्रतिरूपको वा। यद्वाङ्कनि-मिदं सख्यं तस्य शत्रा सहात्मनः। तस्मादेवोच्यते विष्णुर्विशे-र्धातोः प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात् मूर्द्धन्यान्तोऽय-मिति केचित्, तच्चिन्त्यं तालव्यान्तस्य सर्वसम्मतत्वात्।

३४। ङ वाश्य ऋ शब्दे (वाश, दिवा, आ) शब्द इह तिरश्चा-मेव। तिरश्चां वाशितं रुतमित्यमरात्। ङ, य—वाश्यते पक्षी। ऋ—अववाशत्। उद्वाश्यमानः पितरं सरामिति भट्टौ (३। ३२) अनेकार्थत्वादाह्वानार्थः। वासितं सुरभीकृते। ज्ञानमात्रे प्रगा-राये वासितं वस्त्रवेष्टिते इति विश्वप्रकाशात् दन्त्यान्तोऽयमपीति।

३५। वश लु स्पृहि (वश, अदा, प) लु—वष्टि धनं लोकः।

३६। शश प्लवने (शश, भ्वा, प) तालव्यादिः। शशीशशि-शुशीः शशन्ति किरातयमकात्।१५।५। शशति भेकः, प्लवेन गच्छतीत्यर्थः। तृफलभजेत्यत्र वर्जनमस्यैव। दन्त्यान्तोऽप्यय-मित्येके।

३७। स्पृश औ स्पृशि (स्पृश, तुदा, प) श—स्पृशति। औ—अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। करेण पस्पर्श तदङ्गमिन्द्र इति कुमारसम्भवम्। ३। २२।

स्पर्शकङ् ग्रहणे क्लेशे स्पशञ्च ग्रन्थबाधयोः।
शकारान्ता नवत्रिंशदिह धातव ईरिताः।

वेम् सहेत्यादिनेवेटसिद्धावस्योदनुबन्धत्वत्फलं इषगाभीक्ष्ण्ये इष्य सर्पणे इत्येतयोरप्राप्तये विशेषणार्थः। न च सिवादिग्रहणवत् तत्र इच्छेति ग्रहणेनेवेटसिद्धिरिति वाच्यं लाघवाभावे प्राचीन-मतस्यैव न्याय्यत्वात्। श—इच्छन्ती इच्छती। अस्यैव इच्छा-देशः। इच्छति धनं लोकः।

३। इष्य सर्पणे (इष, दिवा, प) य—इष्यति। सर्पणं गतिः।

४। ईष ङ दानेच्छहिंसे च (ईष, भ्वा, आ) दीर्घादिः। ङ—ईषते। ईषो दर्शनम्। चकारात् सर्पणे च।

४। ईषुञ्छे (ईष, भ्वा, प) उञ्छ उद्धृतशस्यशेषापहरणम्। ईषति धान्यं दीन।

५। ईक्ष ङ दर्शने (ईक्ष, भ्वा, आ) दर्शनं चाक्षुषज्ञानं प्रणिधानञ्च। ङ—ईक्षते चन्द्रं लोकः। न कामवृत्तिर्वचनीय-मीक्षते इति कुमारसम्भवम् ।५।८२। निरीक्षियामि अभ्रानीनिति गणकृतानित्यत्वात्, प्रचादित्वादनि निरीक्ष इवाचरतीति क्वौ साध्यम्।

६। उक्ष दृषि (उक्ष, भ्वा, प) दृट् सेकः। उक्षति दृक्षं सेघ.।

## उषूष् वधे दह्याप् रोगे ऋच्छन् वध ऋषीश् गतौ।

७। उषु वधे दहि } (उष, भ्वा, क्वावेट्, प)
७। उष वधे दहि } (उष, भ्वा, प) द्वौ क्रूसादी। क—ओषित्वा उष्ट्वा। ओषति। पूर्व्वस्य क्वावेट्त्वान्नेम् डीश्वीत्यादिना दूमो निषेधे निष्टायां उष्टः, शेषस्य उषित इति भेदः। दहि भस्मीकरणे।

८। ऊय रोगे (ऊय, भ्वा, प) दीर्घादिः। ऊयति सन्तं खलः ( पीड़यतीत्यर्थः )।

९। ऋच्च न वधे ( ऋच, भ्वा, प ) र—वैदिकः। न— ऋच्चोति।

१०। ऋपी य गतौ (ऋय, तुदा, प) क्रमादिः। ई—ऋष्टः। य—ऋपति। अर्पिता।

एपृङ् च कष् वधे कुप्ग निष्कर्षे काङ्क्ष काङ्क्षणे।

११। एपृ ङ् च ( एप, भ्वा, आ ) एकादशस्वरी। ऋ—मा भवान् एयिपत्। ङ—एपते। चकारान्तौ।

१२। कष वधे ( कष, भ्वा, प ) कषति। अयमुभयपदीति चतुर्भुजमुखौ। रामरमानाथौ तु इमं परस्मैपदिनं मत्वा उभयपदिनं तालव्यान्तमन्यं मन्येते।

१३। कुषग निष्कर्षे (कुष, क्रा, प) ग—कुष्णाति। चुकोष। निष्कर्षे इयत्तापरिच्छेदः। तुलैरवकुष्णाति इति वोपदेवः। निष्कर्षोऽन्तःप्रकाशनमिति गोविन्दभट्टः। ततोऽकुष्णाद्धयग्रीवः क्रुद्धः प्राणान् वनौकसामिति भट्टौ ( १७। ८० ) अनेकार्थत्वा-न्निष्कासनार्थः।

१४। काङ्क्ष काङ्क्षणे ( काङ्क्ष, भ्वा, प ) इ—काङ्क्षति धनं लोकः। नमध्यपाठेनैवेटसिद्धाविदनुबन्धो वेदपूच्चारणाभेदार्थः।

क्षपौत्वाक्रपि क्षप् प्रोञ्च विलेखे खप् वधेऽयगेप्।
ग्लेपृङङन्वेपे ऽथ घपु सङ्कर्षे घुष्कि इर्नतौ।
विशव्द आङः सततक्रन्द इर्षुप् वधे घुषिङ्।

घुषो घषिङ् क्षरे चूष् पाने चक्ष्लुङ् वदे चपञ् ।
भक्ष्येऽथ चष् वधे क्षप् जप् जूष् ञ चश् ङीञि जुष् सुदि ।
सेवे कि जुष् तर्कटेऽप्यो जिषु सेकेऽथ जेषृङ ।
गत्यां जक्षिम् ङ दाने च जक्षल्लुघ् भक्षहासयोः ।

१५। कषौ त्वाक्षपि (कष, भ्वा, प) औ—अकाक्षीत् अकार्क्षीत् अकक्षत् । आकषि आकर्षणे । कर्षन्ति तुरगा रथम् ।

१५। कष ञौ ञ च विलेखे (कष, तुदा, उ) श, ञ—कषति कषते भूमिं कषकः । औ—अकाक्षीत् अकार्क्षीत् अकक्षत् । चकारात् कषौ च । (विलेख: कर्षणम्) ।

१६। खष वधे (खष, भ्वा, प) खषति ।

१७। अथ गेषृ ङ अन्वेषे } (गेष, भ्वा, आ)

१८। ग्लेषृ ङ अन्वेषे } (ग्लेष, भ्वा, आ) आद्यः केश्चिन्न मन्यते। षेपोऽन्त:स्थातृतीययुक्तः। ऋ—अजिगेषत् अजिग्लेषत् । ङ—गेषते, ग्लेषते । जिगेषे, जिग्लेषे । अन्वेषोऽनुसन्धानम् । ग्लेषते यः सता मार्गमिति हलायुधः । २४७ ।

१९। अथ घषु सङ्घर्षे (घष, भ्वा, प) उ—घर्षित्वा घष्ट्वा । घर्षति चन्दनं लोकः ।

२०। घुषि कि इर् शब्दे (घुष, चु, भ्वा, प) एतदाद्यास्त्रयः पञ्चमस्वरिणः । विशब्दे इह आविष्करणं, कथनं, नानाशब्दकरणं वा । कि—घोषति गूढमर्थमभियुक्तः। नावद्यं घोषति हारि यस्य कश्चिदुपद्रवमिति हलायुधः । १४१ । इर्—अघुषत् अघोषीत् ।

आङ: सततक्रन्दे। घुषि इर् इत्यनुवर्त्तते। (आङित्युपसर्गात्

घुष्कि इर् इत्यस्य सततक्रन्दनमर्थ इति ) क्ति—आघोषयति घोषार्त्तः, सततं क्रन्दतीत्यर्थः ।

२० । इर्घुष वधे ( घुष, भ्वा, प ) इर्—अघुषत् अघोषीत् ।

२० । घुषिङ् धूषे ( घुन्ष, भ्वा, आ ) धूषः कान्तिकृतिः । इ—घुंष्यते । ङ—घुंषते चन्दनो गात्रम् ।

२१ । घषि ङ चरे ( घन्ष, भ्वा, आ ) आद्यस्वरी । इ—घंष्यते । ङ—घंषते । अयं कैश्चिन्न मन्यते ।

२२ । चूष पाने ( चूष, भ्वा, प ) दीर्घी । चूषत्याम्रं लोकः ।

२३ । चक्ष लङ वदे ( चक्ष, अदा, आ ) वदः कथनम् । ल, ङ—चष्टे धर्मं धीरः । तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः । इकार उच्चारणार्थ इति केचित् । छन्दसि नुमागमार्थ इति केचित् । वेदेषूच्चारणभेदार्थ इति केचित् । तत्र वङ्गवस्तु तृतीयस्वरो-लिपिकृत्प्रमादकृतः किन्तु चतुर्थस्वरानुबन्धोऽयं निष्ठाया इण्निषेधार्थः, तेन वर्जनार्थे ख्याञ्ख्शाञादेशयोरप्राप्तौ आचष्टं वर्ज्जनमित्याहुः ।

२४ । चष ञ भक्षे ( चष, भ्वा, उ ) ञ—चषति चषते ।

२४ । अष चष वधे ( चष, भ्वा, प ) चषति ।

२५ । छष ञ च ( छष, भ्वा, उ )
२६ । जष ञ च ( जष, भ्वा, उ )
२७ । झष ञ च ( झष, भ्वा, उ ) शेषः षष्ठस्वरी । ञ—छषति छषते ; जषति जषते , झषति झषते । आद्यः कैश्चिन्न मन्यते । अन्त्यौ परस्मैपदिनावित्यन्ये । चकाराद्वधे ।

२८ । ञ ओजि जुष मुदि सेवे (जुष, तुदा, आ) पञ्चमस्वरी । ञ, ङ—जुषते । ई, जि—जुष्टोऽस्ति । मुदि हर्षे ।

२८। किं जुप तर्कोटृषोः ( जुप, चु, भ्वा, प ) पञ्चमस्वरी । कि—जोपयति,जोपत्यन्यगुणं गुणी, तर्कयतीत्यर्थः ।

२९। जिषु सेके ( जिष, भ्वा, प ) उ—जेषित्वा, जिष्टा ।

३०। चथ जेषृङ गत्याम् ( जेष, भ्वा, चा ) एकादशस्वरी । ड़—चजिजेषत् । ङ—जेषते, जिजेषे ।

३१। जचि मङ दाने च ( जङ्क्, भ्वा, चा ) ङ—जङ्क्षते । नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वैदेयुच्चायभेदार्थः । म—चजङ्क्षि चजाङ्क्षि, जङ्क्षं जङ्क्षं जाङ्क्षं जाङ्क्षं । चनुबन्धवलादनुपधाया चपि दीर्घः । स्मते दीर्घविधिरुपधां नोपेच्चते । ङ—जङ्क्षते । चकारान्नत्वाच ।

३१। जच चलुष भच्चहासयोः ( जच, चदा, प ) केचित्तु विष्णुपुराणे यच्चराचसोत्पत्तिप्रसङ्गे "यच्यतामिति यैरुक्तं ते वै यच्चास्तु यच्चणादि"ति भच्चणार्थस्यैव यच्च्युत्पादनादेतमन्तःस्थादिं मन्यन्ते । तत्र चमरटीकायां वर्ग्यजकारस्यान्तःस्थयकारस्थान्दसो द्रष्टव्य इत्युक्ता वर्ग्यादिरयं निर्णीतः । च—जचति । लु, ष— जच्चिति ।

## झपञ्‌ ग्रहेऽपिधाने झप वधे णेपृङ णच् व्रजे ।

३२। झप ञ ग्रहेऽपिधाने ( झप, भ्वा, उ ) ञ—झपति झपते वस्त्रं जनो, गृह्णाति परिदधाति चेत्यर्थः । सप्तमस्वरादि-रयमिति पूर्णचन्द्रत्रिलोचनरामाः । ( तन्मतेऽयं छपधातु-रित्यर्थः ) चर्पति चर्पते ।

३२। झप वधे ( झप, भ्वा, प ) चाद्यस्वरी । झपति । षष्ठ-स्वरी चायमिति केचित् । झूपति ।

३३। णीपृङ व्रजे } (णीप, भ्वा, प्रा)
३४। णाच व्रजे } (णाच, भ्वा, प) ङ—अनिनीपत्।
ङ—नेपते, निनेपे। नाचति। व्रजो गतिः।

## णिपु सेके णिच चुम्बे तृप तुष्टौ तुप ल्ट यौ ञि च।

३५। णिपु सेके (णिप, भ्वा, प) उ—नेपित्वा निप्त्वा।

३६। णिच चुम्बने (णिच, भ्वा, प) निचति। (प्रणिचति प्रनिचति)।

३७। तृप तुष्टौ (तृप, भ्वा, प) षष्ठस्वरी। तृपन्ति कुलदेवताः।

३८। तुप ल्ट यौ ञि च (तुप, दिवा, प) ल्ट—अतुपत्। य—तुप्यति। यौ—तोप्टा। ञि—तुष्टोऽस्ति। चकारात् तुष्टौ।

## त्विपौञ् भासेऽवान्निवासे दाने चेर्ये ञि तृप ट्टपि।

३९। त्विपौञ भासे (त्विप, भ्वा, उ) यौ—अत्विचत्। ञ—त्वेपति त्वेपते। भासो दीप्तिः।

अवान्निवासे दाने च। त्विपौञ इत्यनुवर्त्तते। चकाराद्भासे च। यौ—अवात्विचत्। ञ—अवत्वेपति अवत्वेपते, निवसति ददाति दीप्यते वेत्यर्थः।

४०। इर्य्येञि तृप तृषि (तृप, दिवा, प) इर्—अतृपत् अतर्पीत्। अस्मान्नित्यं ङ इति दुर्गः। य—तृप्यति। ञि—तर्पितोऽस्ति। तृट् आकाङ्क्षा। इच्छाकाङ्क्षास्पृहेहातृड्वाञ्छालिप्सामनोरथ इत्यमरात्। तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णयेति रघुः।८।२। तृष्यति धर्न लोकः, तृप पिपासायामिति माघः। तृष्यति तोयं पान्थ इति रमानाथः।

टच्चित्यां त्वच् त्वचोग्राह्ये त्वचू कार्श्येऽथ तावत्री ।

४१। टच् इत्याम् ( टच्, भ्वा, प ) सप्तमस्वरी। टच्चति। इत्यां गतौ ।

४२। त्वच त्वचोग्राह्ये (त्वच, भ्वा प) त्वचोग्राह्यचर्म्मणो ग्रहणम्। त्वच त्वचने इति प्राञ्चः। त्वचनं संवरणमिति रमानाथः। त्वचति कायं वर्म्मणा भटः।

४२। त्वचू कार्श्ये ( त्वच, भ्वा, प ) ऊ—त्वचिष्यति त्वक्ष्यति। कार्श्यं कृशीकरणम्। त्वचति काष्ठं तक्षा।

अथ तावत्री।

तौ एतौ (त्वचधातू) अवौ वकाररहितौ स्याताम्। यथा—

४३। तच त्वचोग्राह्ये ( तच, भ्वा, प )

४३। तचू कार्श्ये (तच, भ्वा, प, वेट्) तचति। ऊ—तचिष्यति तक्ष्यति।

तचून् तचेङ् दीच मौण्ड्येज्याज्योऽर्थे दचङ् स्वदे।
टचौ दच्मप्ङ हन्त्यर्थे दृदुम्यौ वैक्लतेल् द्विपौ ञ्।
वैरे द्राच भाच भ्राचि काङ्क्षे घोरकृते छ्पक्।
ङ शक्तिबन्धे ञि छ्यान् प्रागल्भ्ये छ्प् संहतौ।
हिंसे छ्पा कि त्वमर्पे धूपक् धूगेर्लिधिप् रवे।

४३। तचून तचे (तच, स्वा, प) तचः क्षयकरणम्। ऊ—तचिष्यति तक्ष्यति। न—तक्ष्णोति काष्ठं तक्षा।

४४। ङ दीच मौण्ड्येज्याज्योऽर्थे (दीच, भ्वा, आ) मौण्डं

मुण्डितमस्तकीभावः। इज्या यजनम्। ज्योर्थो नियमव्रता-
देशोपनीतयः (ओकारान्तगणे ज्योङ नियमव्रतादेशोपनीति-
ष्वित्युक्तं, अस्यापि तदर्थी इत्यर्थः)। ङ—दीक्षते बटुर्मुण्डित-
मस्तकः स्यादित्यर्थः। दीक्षते जनो यजतीत्यर्थः। दीक्षते याज्ञिको
नियमी स्यादित्यर्थः। दीक्षते पण्डितो जनं, व्रतमुपदिशती-
त्यर्थः। दीक्षते पुत्रं विप्र, उपनयतीत्यर्थः।

४४। दक्ष ङ स्वदे दक्षौ (दक्ष, भ्वा, आ,) स्वद इह शीघ्र-
करणम्। ङ—दक्षते धनमुद्योगी, शीघ्रमुत्पादयतीत्यर्थः।

४५। दक्षापङ हन्त्यर्थे (दक्ष, भ्वा, आ, घटादि.) म—
अदक्षि अदाक्षि, दक्षं दक्षं दाक्षं दाक्षं। मानुबन्धबलादनुपधाया-
अपि दीर्घः। स्वमतेतु दीर्घविधिरुपधा नापेक्षते। प—
दक्षा, 'सेमक्तात् सरोरित्यनेनैवेटसिद्धावस्य पानुबन्धत्वरपर्यन्त-
घटादिभ्यो ङ इति प्राचीनमतानुवादार्थः। ङ—दक्षते। हन्त्यर्थो
गतिवधयोः।

४६। इर्ष्यौ वैकृते (दुष, दिवा, प) वैकृतमशुद्धीभावः।
इर्—अदुषत् अदुक्षत्। अद्यान्तित्यं ङ इति दुर्गः। य—दुष्यति
लोक. पापात्। औ—दोष्टा।

४७। ल द्विषौ ञ वैरे (द्विष, अदा, उ) ल, ञ—द्वेष्टि द्विष्टे।
औ—अद्विक्षत्। द्विषन्ति मन्दाश्चरितं महात्मनामिति कुमार-
सम्भवम्। ५। ७५।

४८। ध्राक्षि काङ्क्षे घोररुते } (ध्राङ्क्ष, भ्वा, प)
४९। ध्वाक्षि काङ्क्षे घोररुते } (ध्वाङ्क्ष, भ्वा, प)
५०। ध्राक्षि काङ्क्षे घोररुते } (ध्राङ्क्ष, भ्वा, प) आद्यन्तौ
रेफयुक्तादी, मध्यम ओष्ठवर्गशेषयुक्तादिः। घोररुतमिति तिरश्चा-

मेव घोरशब्दः । इ—ध्राङ्क्षति, घाङ्क्षति, भ्राङ्क्षति पक्षी । नमध्य-पाठेनैवेटसिद्धावेषामिदनुबन्धो वेदेपूच्चारणभेदार्थः ।

५१ । धृष कङ शक्तिबन्धे ( धृष, चु, आ ) शक्तेर्बन्धः शक्ति-बन्धः ( अभिभव इत्यर्थः ) । क, ङ—धर्षयते वह्निंपयः ।

५१ । ञि धृषान प्रागल्भ्ये ( धृष, खा, प ) ञि—धृष्टोऽस्ति । आ—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः । न—न धृष्णोति गुरोरग्रे ( यः ) इति हलायुधः । ८७ ।

५१ । धृषु संहतौ हिंसे ( धृष, भ्वा, प ) उ—धर्षित्वा धृष्ट्वा । संहतिः समूहः ।

५१ । धृषा कि त्वमर्षे ( धृष, चु, भ्वा, प ) आ—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः । कि—धर्षयति धर्षति । असर्षं इह अभिभव इति रूट्टमल्लः । न धर्षति निजाः प्रजाः । तमेव धर्षय-त्येकं यस्मात् प्रतिकूलतीति हलायुधः । ८७ ।

५२ । धूप क धूप्ये ( धूप, चु, प ) षष्ठस्वरी । धूपः कान्ति-स्तृतिः । क—चन्द्रो धूपयत्यङ्गम् ।

५३ । ञिं धिप रवे ( धिप, ह्वा, प ) र—वैदिकः । ञि—दिधेष्टि । रवः शब्दः ।

## खिच घुचङ सन्दीपे क्लेशे जीवे पुषग् पुष । पुष्टौल्ट पुष्यौच पुषक् धृतौ धौ पिष् ल्ट चूर्णने ।

५४ । खिच ङ सन्दीपे क्लेशे जीवने ( खिच, भ्वा, आ )
५५ । घुच ङ सन्दीपे क्लेशे जीवने ( घुच, भ्वा, आ )
द्वौ क्रमात् तृतीयपञ्चमस्वरिणौ । ङ—खिचते, घुचते वह्निः, सन्दीप्यते इत्यर्थः । खिचते घुचते जनः, क्लिश्यति जीवति चेत्यर्थः ।

५६। पुष ग पुष्टौ (पुष, क्रया, प)
५६। पुष पुष्टौ (पुष, भ्वा, प) ग—पुष्णाति। पुपोष। पोषति पुत्रं तातः।

५६। ऌ पुष्यौ च (पुष, दिवा, प) ऌ—अपुषत्। य—पुष्यति। औ—पोष्टा। चकारात् पुष्टौ।

५६। पुषक् धृतौ (पुष, चु, प) क—पोषयति। (टष्णां न पुष्णाति यशांसि पुष्यति प्रवार्य्यौर्विप्रमनांसि पोषति। अत्यांश यः पोषयतीश्वितैर्धनैरिति सर्व्वत्र कलायुधः। २१।

५७। धौ पिषॢ चूर्णने (पिष, रुधा, प) ध—पिनष्टि लोको गोधूमम्। औ—पेष्टा। ऌ—अपिषत्।

## पषक् बन्धे प्रषञ् बाधे ग्रन्थे पक्षक् परिग्रहे।

५८। पष क बन्धे (पष, चु, प) क—पाषयति। तालव्यान्त एवायमिति वह्वः, दन्त्यान्त इति केचित्। मूर्द्धन्यान्तपाठस्तु केषाञ्चित्तुरोधात्।

५८। पषञ बाधे ग्रन्थे (पष, भ्वा, उ) ञ—पषति पषते। बाधो विहतिः। ग्रन्थो ग्रन्थनम्। ग्रन्थस्थाने स्पर्शं पठन्ति केचित्।

५८। पक्ष क परिग्रहे (पक्ष, चु, प) क—पक्षयति।

## पर्षङ् स्नेहे पुषग् सेकपूर्य्योश्च पुषु दह्यम्।
## रलौ लुप्यऌच पृष्येभोगे च पुषकुत्सृजि।

६०। पर्ष ङ स्नेहे (पर्ष, भ्वा, आ) रेफोपधः। स्नेह इहार्द्रीभावः। ङ—पर्षते पयसा घटः। स्पर्श इति चतुर्भुजः। स्पर्शते पस्पर्शे।

६१ । मुष ग.सेकपूर्त्त्योश्च ( मुष, क्रा, प ) ग—मुष्णाति, मुमोष । सेकस्थाने मोचनमिति धातुप्रदीपभट्टमल्लौ । चकारात् खेहे च ।

६१ । मुषु दहि ( मुष, भ्वा, प ) उ—मोषित्वा मुष्ट्वा । मोषति । दहि भस्मीकरणे ।

अमू रलौ ।

अमू एतौ ( मुषधातू ) रलौ च स्याताम् । रेफस्थाने अन्तःस्थातृतीयो ययोस्तौ रलौ । यथा—

६२ । लुष ग सेकपूर्त्त्योश्च } ( लुष, क्रा, प )
६२ । लुषु दहि { ( लुष, भ्वा, प ) ग—लुष्णाति । उ—लोषित्वा लुष्ट्वा । लोषति ।

६२ । लुष्य स्ह च ( लुष, दिवा, प ) अन्तःस्थातृतीययुक्तः । य—लुष्यति । स्ह—अलुषत् । लुलोष । चकाराद्दहि ।

६३ । प्युष्येर् भागे च ( प्युष, दिवा, प ) अन्त.स्थाद्ययुक्तः । य—प्युष्यति धनं दायादः । इर्—अप्युषत् अप्योषीत् । अस्मान्नित्यं ङ इति दुर्गः । चकाराद्दहि च ।

६३ । प्युष क उत्सृजि ( प्युष, चु, प ) अन्तःस्थाद्ययुक्तः । उत्सृजि उत्सर्गे । क—प्योषयति धनं दाता । (१) ।

## पृषु सेके पूष वृद्धौ लुम्त भूष्य अ भक्षणे ।

६४ । पृषु सेके ( पृष, भ्वा, प ) उ—पर्षित्वा पृष्ट्वा । पर्षति ।

६५ । पूष वृद्धौ ( पूष, भ्वा, प ) षष्ठस्वरी । पूषति । ( प्रतिक्षणं पूषति यस्य विक्रम इति हलायुधः । २१ ) ।

(१) प्युष इति गोविन्दभट्टः, प्योषं त्रिकट्, इत्यधिकः पाठः ।

৬৬। म्लक्ष ञ भक्षणे } (म्लक्ष, भ्वा, उ)
৬৭। भ्लक्ष ञ भक्षणे } (भ्लक्ष, भ्वा, उ) द्वावन्तःस्थातृतीययुक्तौ। ञ—म्लक्षति म्लक्षते; भ्लक्षति भ्लक्षते। मम्लक्ष, बभ्लक्ष। (১)। शेषस्य लस्थाने सप्तमस्वर इति दुर्गः। भृक्षति भृक्षते।

**भक्षक् च भिक्षङ् लाभार्थलोभोक्तिक्लिशि भाषङॢ।**
**वाचि भ्रेषृञ् चले भेषृञ् च भये भूषकि भूषणे।**

৬৮। भक्षक् च (भक्ष, चु, प) क—भक्षयति। चकारात् भक्षणे।

৬৯। भिक्ष ङ लाभार्थ लोभोक्ति क्लिशि (भिक्ष, भ्वा, आ) (चत्वारोऽर्थाः) अर्थो याचनम्। लोभादुक्तिर्लोभोक्तिः। ङ—भिक्षते भूमिं नृपात् पण्डितः, लभते इत्यर्थः। भिक्षते दातारं धनं भिक्षुर्याचतीत्यर्थः। भिक्षते दातारं दीनः, लोभाद्वदतीत्यर्थः। भिक्षते जनः क्लिश्यतीत्यर्थः।

৭০। भाष ङ ऌ वाचि, (भाष, भ्वा, आ) ङ—भाषते। ऌ—अबीभषत् अबभाषत्।

৭১। भ्रेषृ ञ चले (भ्रेष, भ्वा, उ) रेफयुक्तः। ऌ—अबिभ्रेषत्। ञ—भ्रेषति भ्रेषते। बिभ्रेषे धर्मात् खलः।

৭২। भेषृ ञ च भये (भेष, भ्वा, उ) ऌ—अबिभेषत्। ञ—भेषति भेषते; बिभेषे। चकाराद् भ्रेषृ ञ च (भयार्थकः)

---

(১) केचित् केवलभकारादिरिति कातन्त्रसौभराद्याः। भक्षति भक्षते। मांसं भक्षन्ति शोणितमिति हलायुधोऽपि। भक्षते तु चौरादिकस्य भक्षयतेर्णेरनित्यतायां सिद्धिः। न च भक्षतेऽपि केवलभकारादिरितिवाच्यम्, तथात्वे संख्याया असङ्गतेः।

७३ । भूष कि भूषणे ( भूष, चु, भ्वा, प ) कि—भूषयति भूषति चारो जनम् ।

## भष् वुक्के पिशुनोक्तौ मष् मुष वधे मुष्य ह्रर्च्छिदि

७४ । भष् वुक्के पिशुनोक्तौ ( भष, भ्वा, प ) वुक्कः कुक्कुरादि कर्त्तृकशब्दः । भषति श्वा । भषत्यन्यदोषं खलः, सूचयतीत्यर्थः । भर्त्सने इति प्राञ्चः । भषति श्वा पान्थं, शब्देन निर्भर्त्सयते इत्यर्थः इति रमानाथः ।

७५ । मष वधे } ( मष, भ्वा, प )
७६ । मुष वधे } ( मुष, भ्वा, प ) द्वौ क्रमादाद्यपञ्चमस्वरिणौ । मषति । मोषति ।

७६ । मुष्य ह्रर् छिदि ( मुष, दिवा, प ) पञ्चमस्वरी । छेद इह खण्डनम् । य—मुष्यति विपचं चतुरः । ह्रर्—अमुषत् अमोषीत् । अस्मात् पुषादित्वान्नित्यं ङ इति दुर्गः । ( मुष्यत्यपहृतार्थानां दुःखं धनसमर्पणादिति हलायुधः । ( ११५ ) ।

## मुषग् मूष लुण्ठने मिषश स्पर्द्धे मिष् ञ्चिष् सेचने ।

७६ । मुष ग लुण्ठने } ( मुष, क्रा, प )
७७ । मूष लुण्ठने } ( मूष, भ्वा, प ) द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ । ग—मुष्णाति । यो मूषति परद्रव्यमिति हलायुधः । ११५ । अयोऽपि रूक्षीत्येके । मोषति । (१) ।

७८ । मिष श स्पर्द्धे (मिष, तुदा, प) स्पर्द्धः पराभिभवेच्छेति वोपदेवः । श—मिषति यली बलवन्तम् । मेषिता ।

---

(१) राजपुस्तके यो मोषति परद्रव्यमिति हलायुध लोको दृश्यते ।

७८। मिषु सेचने } (मिष, भ्वा, प)
७९। मृषु सेचने } (मृष, भ्वा, प) आद्यस्तृतीयस्वरी। शेषाद्याश्चत्वारः सप्तमस्वरिणः। त—मेषित्वा मिष्ट्वा। मर्षित्वा मृष्ट्वा। मेषति। मर्षति।

**मृषक् क्षान्तौ मृष ञ ङ् मृष्य च क् म्रक्ष म्रक्षणे।**
**स्नेहने म्रक्ष सङ्घाते मक्ष रोषे च मोक्ष कि।**
**क्षेपे माक्षि स्पृहे येषृ ङ यत्ने यक्ष कङ् महि।**

७९। मृषक क्षान्तौ (मृष, चु, प) क—मर्षयति। अयमात्मनेपदीत्येके।

७९। मृष ञ ङु च } (मृष, भ्वा, उ)
७९। मृष्य ञ च } (मृष, दिवा, उ) ञ—मर्षति मर्षते। ङ—मर्षते। उ—मर्षित्वा मृष्ट्वा। अयमात्मनेपदीत्यन्ये। य, ञ—मृष्यति मृष्यते। ममर्ष। चकारात् क्षान्तौ। अपि गुरु-मपराधं मर्षति ब्राह्मणानामिति हलायुधः। १५। (मृषयति न नृपाणां मृष्यते चोद्धतानामनुचितमनुमातं न द्विपा मर्षते यः। अपि गुरुमपराधं (१) मर्षति ब्राह्मणानां सितवसनभृतां यो मर्षयत्यागमज्ञमिति सर्व्वत्र हलायुधः। १५।

८०। क म्रक्ष म्रक्षणे स्नेहने (म्रक्ष, चु, प) रेफयुक्तादिः। म्रक्षणं द्रव्यस्य द्रव्यान्तरेण संयोजनम्। क—म्रक्षयति घृतेनान्नं लोकः।

८०। म्रक्ष सङ्घाते (म्रक्ष, भ्वा, प) रेफयुक्तादिः। म्रक्षति पयसा सक्तून् लोकः, राशीकरोतीत्यर्थः (सङ्घातोऽत्र निबिड़-संयोगकरणम्)।

(१) अपि गतमपराधानिति चान्यत्र पाठः।

८१। मद्य रोषे च (मद्य, भ्वा, प) मद्यति। चकारात् ऋद्यति च।

८२। मोच कि क्षेपे (मोच चु, भ्वा, प) कि—मोचयति। मोचति। मुमोचतुः।

८३। माच्छि स्पृहे (माङ्क्ष, भ्वा, प) द्वितीयस्वरी। इ— माङ्क्षति। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेपूच्चारणमेदार्थः।

८४। येपृ ङ यत्ने (येप, भ्वा, आ) अन्तःस्थादि। ऋ— अयियेपत्। ङ—येपते, वियेपे।

८५। यक्ष क ङ मह्हि (यक्ष, चु, आ) क, ङ—यक्षयते। महि पूजायाम्।

यूप् रिप् वधे रूप् ञि च रुप्येञि क्रुधि रूपक् तथा।

८६। यूप वधे } (यूप, भ्वा, प)
८७। रिप वधे } (रिप, भ्वा, प) आद्यः षष्ठस्वरी। यूपति। रेपति।

८८। रुप ञि च (रुप, भ्वा, प) एतदाद्यास्त्रयः पञ्चमस्वरिणः। ञि—रुष्टः रुषितोऽस्ति (वाद्यमाद्दयेत्यादिना इम्निषेधविकल्पनात्) रुरोष। चकाराद्वधे।

८९। रुष्येञि क्रुधि (रुष, दिवा, प) य—रुष्यति भृत्याय भूपालः। इर्—अरुषत् अरोषीत्। अस्मान्नित्यं ङ इति दुर्गः। ञि—रुष्टः रुषितोऽस्ति।

८८। रुष क तथा (रुष, चु, प) क—रोषयति। तथा— क्रुधि।

ञि रक्ष पालने रेपृ ङ् ह्वेपायामथ लूप् क वधे।

८९। जि रक्ष पालने ( रक्ष, भ्वा, प ) जि—रक्षितोऽस्मि। रक्षति।

९०। रेपृ ङ श्लेपायाम् ( रेप, भ्वा, आ ) श्लेपा घोटककर्त्तृकशब्दः। घट—अररेपत्। ङ—रेपतेऽश्वः। रिरेपे।

९१। अथ लूप क वधे ( लूप, चु, प ) पटस्सरी। क—लूपयति

लुप् च स्तेये लपक् शिल्पयोगे लप्य लप ञ् स्पृहि।

९२। लुप च स्तेये ( लुप, भ्वा, प ) लोपति। चकारात् लूपकश्च।

९३। लप क शिल्पयोगे ( लप, चु, प ) क—लापयति कुशलो नृत्ये, शिल्पं युनक्तीत्यर्थः।

९३। लप्य ञ स्पृहि } ( लप, दिवा, उ )
९३। लप ञ स्पृहि } ( लप, भ्वा, उ ) य, ञ—लप्यति लप्यते। ञ—लपति लपते।

लक्ष क ञ् दर्शनेऽङ्के कङ् लक्षालोचे विपिर्लि ञौ।
ङ व्याप्तौ विप णौ विप्रयोगेऽथ विपु सेचने।

९४। लक्ष क ञ दर्शनेऽङ्के ( लक्ष, चु, उ ) क, ञ—लक्षयति लक्षयते घटं लोकः, पश्यति, चिह्नयुक्तं करोति वेत्यर्थः।

९४। क ङ लक्षालोचे ( लक्ष, चु, आ ) आलोचः प्रणिधानम्। क, ङ—लक्षयते कार्य्यं सुधीः।

९५। विपिर्लि ञौ ङ व्याप्तौ (विप, ह्वा, उ) इर्—अविपत् अविक्षत्। लि, ञ—वेवेष्टि वेविष्टे (निजा त्रयाणां गुणः णिति) ञौ—वेष्टा। ङ—वेविष्टे। उभयपदीत्यन्ये। अफलवत्कर्त्तर्य्यात्मने-

पदार्थो डकारः। वेवेष्टि पिष्टपं सर्व्वं कीर्त्तिर्यस्यातियायिनीति हलायुधः (१९१)।

९५। विष गौ विप्रयोगे (विष, क्र्या, प) ग—विष्णाति प्राणी, पुत्रादिभ्यो वियुक्तः स्यादित्यर्थः। औ—अविक्षत्। दन्त्यान्तोऽयमिति विस्रयद्व्युत्पत्तौ सुभूतिः (विस्रं स्यादामगन्धि यदित्यत्र विस विप्रयोगे बाहुल्याद्रक् इत्युक्तम्) (विष्णाति विषवत् प्राणान् तयीधर्म्मद्विषामसाविति हलायुधः। १९१)।

९५। अथ विषु सेचने (विष, भ्वा, प) उ—वेषित्वा विष्ट्वा। वेषति।

वृषु चाथ काङ् वृषु च प्रजनैश्वर्येऽथ वृत्त ङ।
वृतौ वञ्च् रोपसंहत्योर्वाञ्छि काङ्क्षेऽथ वष् प्रप।
शिष्वधे शिष्क्यसर्व्वोपयोगे वेरतिप्रायने।

९६। वृषु च (वृष, भ्वा, प) उ—वर्षित्वा वृष्ट्वा। वर्षति। चकारात् सेचने।

९६। अथ क ङ वृषु च प्रजनैश्वर्ये (वृष, चु, आ) क, ङ—वर्षयते। अस्य पञ्चमस्वराणुबन्धो लेखकभ्रमकृत एव, आन्तेभ्यः सर्व्वत्र नित्येमः साम्प्रदायिकत्वात्। न च प्राचामनुरोधात् पाठ्य इति वाच्यं, तर्हि चञ्चकव्यक्तौ, काङ वञ्च वञ्चने, ढतक दीप्तौ, ढधक दीप्तौ, दिव कङ परिकूजने, क दिव अर्द्दे, ष्टप कङ शक्तिबन्धे, जसक वधेऽनादरे इत्येषामष्टानामपि पञ्चमस्वरानुबन्धित्वापत्तेः। वस्तुतस्तु एषां (पूर्व्वोक्तानामष्टानां) पञ्चमस्वरानुबन्धः प्राचीनैः पठितोऽप्यनर्थः। अतएव रमानाथोऽपि एषामुदनुबन्धः पूर्व्वपठितधातवोऽर्थान्तरेषु चुरादयः स्युर्नत्वेते पृथग्धातव इति ज्ञापनार्थ

इत्याह । ( १ ) । प्रजनो गर्भग्रहणम्, ऐश्यं ऐश्वर्य्यम् । चकारात् पृचच ( एतदुभयार्थकः ) ।

९७ । अथ वृच ङ वृतौ ( वृच, भ्वा, आ ) सप्तमस्वरी । ङ—वृचते वरं कन्या ( २ ) ।

९८ । वच्च रोषसंहत्योः ( वच्च, भ्वा, प ) वच्चति ।

९९ । वाच्छि काङ्क्षे ( वाञ्छ, भ्वा, प ) इ—वाञ्छति । नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेपुच्चारणभेदार्थः ।

१०० । अथ वप वधे ( वप, भ्वा, प )
१०१ । शप वधे ( शप, भ्वा, प )
१०२ । शिप वधे ( शिप, भ्वा, प ) वपति, शपते, शेपति ।

१०२ । शिप किञ्चसर्व्वोपयोगे (शिप, चु, भ्वा, प) असर्व्वोपयोगः परिशेषीकरणम् । कि—शेपयति कीर्त्तिं लोकः, अवशिष्टां करोतीत्यर्थः ।

वेरतिशायने । शिप किरनुवर्त्तते । कि—विशेपयति विशेपति सम्पत्त्या भूपं विधिः । (स्त्रिया शक्रं विशेपति । विशेपयति यो वाग्मी वाचा वाचस्पतेरपि च इति हलायुधः । ९१ ) ।

---

(१) भ्वादयो येऽत्र प्रभृतयो धातवस्तदर्थान्तरेषु चुरादयो भवन्ति, नतु चुरादयस्ते पूर्वोक्तेभ्य पृथग्धातव इति ज्ञापनार्थमेव चुरादिष्वप्यादिषु उदनुबन्धः कृत इति रमानाथोक्तिसरलार्थं । एतच्च धातुप्रदीपे उदित्त्वं णिज्विकल्पार्थमिति ।

(२) अत्र वृतिर्वरणमावरणञ्च, तथाचामरटीकायां वृणक्त्यनुसत्तौ वृचते इति यथादित्यादावित्ति भरत ।

**क्षिपॢट् धौ तु विशेषे क्षिप् क्षिपु दाहे क्षिपौ यॢट्ञि ।**
**क्षेपे क्षिप क्च शुष्यौ ॢट शोषे श्रिष्व ङ श्रिषणे ।**

१०२ । क्षिपॢट् धौ तु विशेषे ( क्षिप, रुधा, प ) विशेष उपरञ्जनम् । ॢट—अक्षिपत् । ध—विक्षिनष्टि स्मरं मूर्त्त्या ( यः ) इति हलायुधः । ८१ । मूर्त्तिविशिष्टं करोतीत्यर्थः । धौ—क्षेष्टा ।

१०३ । श्रिपु दाहे ) ( श्रिप, भ्वा, प )

१०४ । स्निपु दाहे } (स्निप, भ्वा, प) द्वौ कमाद्रेफान्तःस्यात्तृतीययुक्तौ । उ—श्रेपित्वा श्रिप्त्वा । स्नेपित्वा स्निप्त्वा । श्रेपति । स्नेपति ।

१०४ । स्निपौ य ॢट ञि स्नेपे ( स्निप, दिवा, प ) यन्तःस्यात्तृतीययुक्तः । धौ—स्नेप्ता । य—स्निप्यति । ॢट—अस्निपत् । आलिङ्गने तु अस्निचत् । ञि—स्निष्टोऽस्ति । स्नेप आलिङ्गनम्, वक्षोद्वयसंयोग इति यावत् । स्निप्यति कामपीति जयदेवः । (मा न स्निचः प्रियं प्रिये इति भट्टिः । ६ । १६ ) । स्नेपः सम्बन्धीभावश्च । अताकर्मकोऽयम् । स्निप्यति वृक्षे लता, लग्ना स्यादित्यर्थः ।

१०४ । स्निप क च ( स्निप, चु, प ) यन्तःस्यात्तृतीययुक्तः । क—स्नेपयति । चकारात् स्नेपे । ( यः स्निप्यति प्रियां प्रेम्णा स्नेपति द्विषतां पुरम् । दुःश्लेषाण्यपि कार्य्याणि धिया स्नेपयति त्वयादिति सर्व्वत्र हलायुधः । ६१ ) ।

१०५ । शुष्यौ ॢट शोषे ( शुष, दिवा, प ) शोषः स्नेहराहितीभावः । य—शुष्यति धान्यमातपात् । धौ—शोष्टा । ॢट—अशुषत् ।

१०६ । श्रिष्व ङ श्रिषणे ( श्रिष्व, भ्वा, आ ) ऊस्वी । ङ—

यियते। यियर्ष विद्यायहणम्। अभियताम्बं पितुरेव मन्तव-
दिति रघुः। ३। ३१।

**ष्नूप ष्नुप प्रसवे ष्टृच गमने पूर्च ष्नूर्चतु।**
**अनादरे स्तृच गत्यां ष्नप प्रसवे हृप हृप्य ञि।**
**ड्र्ह्ष्टौ हृपुञि मोक्तोऽलीके हपृ ङ सर्पणे।**

१०७। ष्नूप प्रसवे ) (ष्नूप, भ्वा, प)
१०८। ष्नुप प्रसवे ) (ष्नुप, भ्वा, प) द्वौ षष्ठस्वरिणौ क्रमात्तालव्यमूर्द्धन्यादी च। ष्नूपति। स्नुपति। सुष्नुप। आद्यः कैश्चिन्न मन्यते।

१०६। ष्टृच गमने (ष्टृच, भ्वा, प) सप्तमस्वरयुक्तस्तमध्यः। स्तृचति। तरीष्टृच्यते।

२१०। पूर्च अनादरे ) (पूर्च, भ्वा, प)
१११। ष्नूर्च तु अनादरे ) (ष्नूर्च, भ्वा, प) द्वौ रेफयुक्तौ षष्ठस्वरिणौ क्रमान्मूर्द्धन्यदन्त्यादी च। ष्नूर्चति दुष्टं लोकः। पसूर्च। सुष्नूर्च।

११२। स्तृच गत्याम् (स्तृच, भ्वा, प) सप्तमस्वरयुक्तस्तमध्यः। स्तृचति। तरीस्तृच्यते।

११३। ष्नप प्रसवे (ष्नप, भ्वा, प) षष्ठस्वरी। ष्नपति। सुष्नप।

११४। हृप ञि दूर् हृष्टौ ) (हृप, दिवा, प, क्तावेट्)
११४। हृप्य ञि दूर् हृष्टौ ) (हृप, दिवा, प) हृष्टि-चित्तोत्साहः। उ—हर्पित्वा हृष्ट्वा। य—हृप्यति लोकः सुष्यात्। ञि—हृष्टोऽस्ति। दूर्—अहृपत् अहर्पीत्। अस्मान्नित्यं ङ इति

दुर्गः। पूर्व्वस्य स्ववेट्त्वान्नेम् डीस्वीत्यादिना इमो निषेधे निष्ठायां हृष्टः, शेषस्य हृषित इति भेदः।

११४। हृषु जि मोक्षेऽलीके (हृष, भ्वा, प) ङ—हर्षित्वा हृष्ट्वा। जि—हृष्टोऽस्ति। अलीकं मिथ्याकरणम्। हर्षति कथां नीचः, मिथ्याकरोतीत्यर्थः।

११५। क्लेपृ ङ सर्पणे (क्लेप, भ्वा, आ) रेफयुक्तः। ङ—अजिक्लेपत्। ङ—क्लेपते, जिक्लेपे।

ङ हेपृ च स्वनेऽश्वानां पान्ताः षोड़शकं शतम्।

११६। ङ हे पृ च स्वनेऽश्वानां (हेप, भ्वा, आ) (अश्वानां स्वनेऽर्थे)। ङ—हेपते घोटकः, जिहेपे। ङ—अजिहेपत्। चकारात् क्लेपृ ङ च (अश्वस्वनार्थकः)। मधुरमधुरं क्लेपन्त्येते इति गणकृतानित्यत्वात् परस्मैपदम्।

पान्ताः षोड़शकं शतम्।

षोड़शकमिति षोड़शभिर्युक्तं शतमित्यर्थे दशादेर्डोयुते शतादाविति डः, ततः स्वार्थे कः।

---

## सान्तवर्गः।

अस भावेऽस्य इर्त्ते पे असञ्ञऽपार्थे जि लास ङः।
उपवेशे शुषस्स्वे कुषसुत्त्वपि च क्रसु।
ष्य हृतौङ् क्रस् कुसि कि च भासने कुश इस्सिपि।

१। अस भावे (अस, अदा, प) भावः सत्ता। सा चेह विद्यमानतैव। ल—अस्ति विष्णुः।

४। क्नस य ह्वृतौ (क्नस, दिवा, प) एतद्दादी द्वौ दन्त्यनकारयुक्तककारादी। ङ—क्नसित्वा क्नस्त्वा। म—क्नसयति कान्त्या जगत् मान्यः (दीपयतीत्यर्थः, परत्र क्नसि कि च भासने इति चकारानुकृष्टत्वादयं दीप्त्यर्थकोऽपि)। य—क्नस्यति खलः, कुटिलः स्यादित्यर्थः। (ह्वृतिः कौटिल्यम्)।

४। क्नसि कि भासने } (क्नन्स, चु, भ्वा, प)
५। कुसि कि च भासने } (कुन्स, चु, भ्वा, प) शेषः पञ्चमस्वरी। द्व—क्नंस्यते, कुंस्यते। कि—क्नंसयति क्नंसति। कुंसयति कुंसति। चकारात् क्नसस्य च (भासनार्थकः) भासनं दीप्तिः।

५। कुस्य द्वुर्श्लिषि (कुस, दिवा, प) य—कुस्यति बाला कान्तम्। द्वर्—अकुसत् अकोसीत्। अस्यान्नित्यं ङ इति दुर्गः।

## कासृङ् कुशब्दे कुत्सक् ङ अवक्षेपे कसज् गतौ।

६। कासृ ङ कुशब्दे (कास, भ्वा, आ) कुशब्द इह रोगहेतुककुत्सितशब्दः। ष्ट—अचकासत्। ङ—कासते वृद्धः।

७। कुत्स क ङ ञ अवक्षेपे (कुत्स, चु, उ) पञ्चमस्वरी दन्त्यवर्गाद्योपधः। अवक्षेपो निन्दा। यो न कुत्सयते कुत्समिति हलायुधः। २४८। ञ—कुत्सयति कुत्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

८। कस ज गतौ (कस, भ्वा, प) ज—कासः कसः। विपूर्व्वोऽयं प्रफुल्लीभावे। तथा च प्रफुल्लोत्फुल्लसंफुल्लव्याकोपविकचस्फुटाः। फुल्लश्चैते विकसिते इत्यमरः। विकसति पङ्कजकलिका।

कसि कस् ल ङ शाते च ग्रस् कि ग्रासे ग्रस ग्लसु।
ङ भक्षे लृ घसौ चाथ घसि ङ क्षरणे च्युसक्।
हानौ चकासृदलु दीप्तौ जस् क् वधेऽनादरे जसु।
दूर्थे मोक्षे जसिक् रक्षे जर्स भर्क्षे च लङ् णिसि।
चुम्बे णसङ् हृतौ णासृङ् तुसध्वाने त्रसक् धृतौ।
ग्रहे निषेधे त्रसि कि भासि त्रस्य त्रसीण् भये।

८। कसि लङ शाते } (कनृस, अदा, आ)
८। कस लङ शाते च } (कस, अदा, आ) शात इह ध्वंसना। ङ—कंस्ते। ल, ङ—कस्ते कंसम्। चकाराद् गतौ च।

९। ग्रस कि ग्रासे (ग्रस, चु, भ्वा, प) रेफयुक्तः। कि—ग्रासयति फलं लोकः। ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय। इमं ग्रहणे पठन्ति केचित्।

९। ग्रसु ङ भक्षे } (ग्रस, भ्वा, आ)
१०। ग्लसु ङ भक्षे } (ग्लस, भ्वा, आ) द्वौ कमाद्रे-फान्तःस्यात्तृतीययुक्तौ। उ—ग्रसित्वा ग्रस्त्वा। ग्लसित्वा ग्लस्त्वा। ङ—ग्रसते ग्लसते। हिमांशुमाशु ग्रसते इति माघः। २। ४९।

११। लृ घसौ च (घस, भ्वा, प) लृ—अघसत्। घौ—घसा। चकाराद् भक्षे।

११। अथ घसि ङ क्षरणे (घनृस, भ्वा, आ) इ—घंस्ते। ङ—घंसते। अयं कैश्चिन्नमन्यते।

१२। च्युस क हानौ (च्युस, चु, प) अन्तःस्थादियुक्तः। क—च्योसयति।

१३। चकासृ चल् दीप्तौ ( चकास, अदा, प ) ऋ—अचीचकासत् अचचकासत्। अनेकाचत्वात् सन्वद्भावविकल्पः। च—चकासति। लु—चकास्ति।

१४। जस क वधेऽनादरे ( जस, चु, प ) क—जासयति। ( निजौजसोज्जासयितुं जगद्द्रुहामिति माघः। १। ३७ )।

१४। जसु दूयँ मोचे ( जस, दिवा, प ) ङ—जसित्वा जस्त्वा। दूर्—अजसत् अजासीत् अजसीत्। अस्मान्नित्यं ङ इति दुर्गः। य—जस्यति वत्सं गोपः।

१४। जसि क रक्षे ( जन्स, चु, प ) इ, क—जंसयति।

१५। जर्त्स भर्त्स प ( जर्त्स, भ्वा, प ) रेफयुक्तदन्त्यवर्गाद्योपधः। जर्त्सति। भर्त्सी भर्त्सनस्तुतिश्च। चकाराद्द्वे च।

१६। लङ् णिसि चुम्बे ( णिन्स, अदा, आ ) ल, ङ—निंस्ते। इ—निंस्यते।

१७। णस ङ हृतौ ( णस, भ्वा, आ ) हृतिरिह कुटिलीभावस्तत्करणञ्च। ङ—नसते खलः, कुटिलः स्यादित्यर्थः। नसते लतां वायुः कुटिलां करोतीत्यर्थः।

१८। णासृ ङ ध्वाने ( नास, भ्वा, आ )

१९। तुस ध्वाने ( तुस, भ्वा, प ) ऋ—अननासत्। ङ—नासते। तोसति।

२०। त्रस क धृतौ ग्रहे निषेधे ( त्रस, चु, प ) एतदाद्याश्चत्वारो रेफयुक्ताद्याः। क—त्रासयति मृगं व्याधः, धरति गृह्णाति निराकरोति वेत्यर्थः।

२०। त्रसि कि भाषि ( त्रन्स, चु, भ्वा, प ) इ—त्रंस्यते। कि—त्रंसयति त्रंसति। भासि दीप्तौ।

२०। त्रसी वा भये } ( त्रस, दिवा, प )
२०। त्रसी वा भये } ( त्रस, भ्वा, प ) य—त्रस्यति। ई—त्रस्तः। वा—त्रेसतुः तत्रसतुः। त्रसति। (१)।

**तसिक्यलङ्कृतौ तस् दस्-तु इदुरुत्क्षेपणे दसिक्।**
**भासि दसिङ् दशौ दंशे दासृञ् दानेनदास् वधे।**

२१। तसि क्यलङ्कृतौ ( तनृस, चु, भ्वा, प ) इ—तंस्यते। कि—तंसयति तंसति चारो जनम्।

२१। तसु इर् उत्क्षेपणे } ( तस, दिवा, प )
२२। दसु इर् तु उत्क्षेपणे } ( दस, दिवा, प ) य—तस्यति, दस्यति धूलिं वायुः। उ—तसित्वा तस्त्वा, दसित्वा दस्त्वा। इर्—अतसत् अतासीत् अतसीत्, अदसत् अदासीत् अदसीत्। अस्मान्नित्यं ञ इति दुर्गः।

२२। दसिक भासि ( दनृस, चु, प ) इ, क—दंसयति। भासि दीप्तौ।

२२। दसि ङ क दशौ दंशे ( दनृस, चु, भ्वा ) दशिरिति पश्यतेरौणादिककिप्रत्यये रूपम्। इ, ङ, क—दंसयते फलं शिशुः, पश्यति, दशति वेत्यर्थः। भट्टमल्लमते दंश इच्छ सन्नाहः।

२३। दासृ ञ दाने ( दास, भ्वा, ञ ) ऋट—अददासत्। ञ—दासति दासते।

२३। र न दास वधे ( दास, स्वा, प ) र—वैदिकः। न—दास्नोति।

---

(१) इमं केचिद्भ्वादौ केचिच्च दिवादौ पठन्ति, तदुभयमतसंग्रहार्थमाचार्येण भ्रौ वादिकादेव क्रमक्रमेत्यादिना विकल्पेन श्यन् विहित इति बोध्यम्।

धस् कुत्क्षेपे ध्रस्गु चोञ्छे धूस्क् धूशे ध्वन्सु लृङ् गतौ।
भ्रंशे पेस् पिस्ट गत्यां पिस् कपट्टार्थे च प्युस दूर्।
भागे दूर् नुस्स दाहे च प्रस्स पङ् प्रसवे ततौ।

२४। ध्रस् कुत्क्षेपे (ध्रस, चु, प) क—ध्रासयति।

२५। ध्रस ग ङ च उञ्छे (ध्रस, क्रा, प) ग—ध्रस्नाति ग्रासं दीनः। ङ—ध्रसित्वा ध्रस्त्वा। चकारात् ध्रसक च (उञ्छार्थकः)।

२६। धूस क धूशे (धूस, चु, प) पठस्वरी। धूशः कान्तिकृतिः। क—चन्दनो धूसयत्यङ्गम्। मच्चिघधूसरितः स्वरितसटमिति जानकीहरणायमकाद्दन्त्यान्त एवायमिति रमानाथः। सम्मते तालव्यमूर्द्धन्यान्तोऽप्ययम्।

२७। ध्वन्सु लृङ गतौ भ्रंशे (ध्वन्स, भ्वा, आ) उ—ध्वंसित्वा ध्वस्त्वा। लृ—अध्वसत्। ङ—ध्वंसते। भ्रंशोऽधःपतनम्।

२८। पेस्ट गत्याम् } (पेस, भ्वा, प)
२९। पिस्ट गत्याम् } (पिस, भ्वा, प) ञ्ट—अपिपेसत्। पिपेसतुः। पिपिसतुः।

२९। पिस क पट्टार्थे च (पिस, चु, प) क—पेसयति। मूर्द्धन्यान्तोऽयमिति केचित्। पट्टार्थौ निकेतनहिंसाबलदानानि। चकाराद्गत्यावृत्त।

३०। प्युस दूर्विभागे (प्युस, दिवा, प) अन्तःस्थाद्ययुक्तः। य—प्युस्यति धनं दायादः। दूर्—अप्युसत् अप्योसीत्। अस्मान्नित्य ङ इति दुर्गः। (भागो विभजनम्)।

३१। दूर्नुस्स दाहे च (नुस, दिवा, प) अन्तःस्थात्तृतीय-

युक्तः। इर्—असुसत् असोसीत्। य—सुस्यति। षकाराद् विभागे च।

३२। प्रस न पङ प्रसवे ततौ (प्रस, भ्वा, चा) रेफयुक्तः। न—प्रसयति। प—प्रसा। ङ—प्रसते कीर्त्तिं विद्या, प्रसूते विस्तारयति चेत्यर्थः।

## पसिक् नाशे पस्क पसञ् पान्तवत् पिसि कि त्विषि।

३३। पसि क नाशे (पनुस, चु, प) नाश इह नष्टीकरणम्। इ, क—पंसयति पापं गङ्गा।

३३। पस क पान्तवत् (पस, चु, प)

३३। पस ञ पान्तवत् (पस, भ्वा, उ) क—पासयति। ञ—पसति पसते। पृथक् पाठादाद्यो न ञित्। अन्यथा पसकि ञ इत्यनेनैवेष्टसिद्धौ पृथक्पाठोऽनर्थः स्यात्। पान्तवदिति पप क बन्धे, पप ञ बाधे ग्रन्थे इतिवदर्थबोधक इत्यर्थः।

३४। पिसि कि त्विषि (पिनुस, चु, भ्वा, प) इ—पिंस्यते। कि—पिंसयति पिंसति। त्विषि दीप्तौ।

## पुंस्क मर्द्दे बुस्येर्हानौ बिस्येर्व्येपेक् ङ भर्त्स ञ। भर्त्सेर्भस् लि द्युतौ चाथ भ्रास्र भ्रास् ङृण् टु पान्तवत्।

३५। पुंस क मर्द्दे (पुंस, चु, प) चोद्यवर्गशेषोपधः, सयोगान्त्यकारस्यानुस्वारः। तेन क्विपि पुंसोऽसुङ्गावित्यनेनासुङि सकारपरत्वाभावादनुस्वारस्य पुनर्मकारे पुमान्। न च नकारजावनुस्वारपञ्चमाविति नियमान्मकारोपध एवायमिति वाच्यम्, धुतयुतिरितिद्वयोस्तालव्यमकारादिपाठेन तद्वचनस्य व्यभिचार-

दर्शनात्। (१)। मर्द्दोऽभिमर्द्दनम् (पीड़नमित्यर्थः) क—पुंसयति चणं राजा।

३६। पुसोत्सर्गे (पुस, दि, प) य—पुस्यति जलं मेघः, त्यजतीत्यर्थः। इर्—अपुसत् अपोसीत्। अस्मान्नित्यं ङ इति दुर्गः। पुसं कड़ङ्गरः।

३७। बिसोत्क्षेपे (बिस, दिवा, प) य—बिस्यति। इर्—अबिसत् अबेसीत्। अस्मान्नित्यं ङ इति दुर्गः।

३८। क ङ भर्त्स ञ भर्त्से (भर्त्स, चु, उ) रेफयुक्तदन्त्यवर्गाद्योपधः। भर्त्सो भर्त्सनम्। भर्त्सनन्त्वपकारगीरित्यमरः। क, ङ—भर्त्सयते जनं राजा। ञ—भर्त्सयति भर्त्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

३९। र भस लि दीप्तौ च (भस, हा, प) र—वैदिकः। लि—बभस्ति। चकाराद्भत्सौ च।

४०। अथ भ्रास ङ ञ ण टु शान्तवत् (भ्रास, दिवा, आ)
४०। भ्लास ङ ञ ण टु शान्तवत् (भ्लास, भ्वा, आ)

द्वौ रेफयुक्तौ। य, ङ—भ्रास्यते। ङ—भ्रासते। ञ—अबभ्रासत्। (२) ण—भ्रेसे बभ्रासे। टु—भ्रासथुः। शान्तवदिति भासि, तौ रषौ चेत्यर्थः। (शान्तवदित्यनेन तालव्यशकारान्त

---

(१) अस्यायमाशयः—सुतसुरतिरित्युभयोस्तालव्यशकारः कुत्रापि निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् षकरत्वं नाप्नोति। तस्मादेवम्विधस्थले सकारजः शकारः इति नियमस्य यथा व्यभिचारस्तथात्रापीति।

(२) अनयोर्धात्वोर्ह्रस्वऋकारानुबन्धः प्राचीनमतानुसारेणैवोक्तः। स्वमते तु भ्राजभासेत्यादिसूत्रेणानयोर्विकल्पेन ह्रस्वविधानात् अबिभ्रसत् अबभ्रासदिति रूपद्वयमेवेति बोध्यम्।

भ्राशधातुवद्भिमावपि दीप्त्यर्थकौ रस्थानजातनकारौ च स्याता-मित्युक्तम्) तेन भ्नास्य भ्नास ङ् ण टु भासि इत्यपि।

४१। भ्नास्य ङ च्ट ण टु भासि } (भ्नास, दिवा, च्या)

४१। भ्नास ङ च्ट ण टु भासि } (भ्नास, भ्वा, च्या)

य, ङ—भ्नास्यते। ङ—भ्नासते। च्ट—अबभ्नासत्। ण—भ्नेसे बभ्नासे। टु—भ्नासथुः। केचित्तु भ्रास भ्नास्य ङ् ण टु इति पूर्व्वं रेफयुक्तमनुबन्धशून्यं शेषं दन्त्यनकारयुक्ताद्यं पठित्वा शान्तवदित्यस्य भासीत्येवार्थं व्याख्याति तद्वेयं, तथात्वे निःसन्देहार्थं शान्तवदिति नोक्ता दीपने इत्येवावदिष्यत्।

**भासृ ङ् दीप्तौ भ्यसङ् भीत्यां सुसेर्छिदि मसिर्य ई।**
**परिमाणे परीणामे इर्यस्य, यतने रस।**
**शब्दे रासृङ् ङपि लसक् शिल्पयोगे लस श्लिपि।**
**क्रीड़े ब्रीस ब्रूस् कि वधे वसक् स्नेहच्छिदोद्य यु।**
**वसिर् स्तम्भे वसे ञौ निवासे वस ङल स्तृतौ।**

४२। भासृ ङ दीप्तौ (भास, भ्वा, च्या) ञ्ङ—अबीभसत् अबभासत्। ङ—भासते।

४३। भ्यस ङ भीत्याम् (भ्यस, भ्वा, च्या) ङ—भ्यसते।

४४। सुसेर्छिदि (सुस, दिवा, प) छिदि खण्डने। य—सुस्यति विपचं चतुरः। इर्—असुसत् असोसीत्। अस्यान्नित्यं ङ इति दुर्गः।

४५। मसि र्य ई परिमाणे परीणामे (मस, दिवा, प) इर्—अमसत् अमासीत् अमसीत्। अस्यान्नित्यं ङ इति दुर्गः।

य—मस्यति धान्यं मस्ती, परिमातीत्यर्थः। ई—मस्तः। मसीणाम इति कस्यचिदनुरोधात्।

४६। ष्यसु यतने ( यस, दिवा, प ) इर्—अयसत् अयासीत् अयसीत्। अस्यान्नित्यं ङ इति दुर्गः। य—प्रयस्यति। यसञ्जसभ्रसेत्यादिना केवलात् सम्पूर्व्वाच्चाश्यात् श्यनो विकल्पनात् यस्यति यसति संयस्यति संयसति। क्त—यसित्वा यस्त्वा। यतनं यत्नः।

४७। रस शब्दे ( रस, भ्वा, प ) रसति।

४८। रासृ ङ् अपि ( रास, भ्वा, आ ) दन्त्यान्तोऽयमिति गदसिंहः। रासभः खरः। दुर्गसिंह इमं तालव्यान्तं मत्वा ह्रस्वं कृत्वा रश्मिशब्दं व्युत्पादितवान्। ङ—अरराशत्। ङ—रासते। अपिशब्दात् शब्दे।

४९। लस क शिल्पयोगे ( लस, चु, प ) क—लासयति कुशलो नृत्ये, शिल्पं सुनक्तीत्यर्थः।

४९। लष श्लिषि क्रीड़े ( लष, भ्वा, प ) लषति।

५०। मीस कि वधे ) ( मीस, चु, भ्वा, प )

५१। मूस कि वधे ) ( मूस, चु, भ्वा, प ) द्वौ रेफयुक्त दीर्घिणौ। कि—मीसयति मीसति ; मूसयति मूसति।

५२। मसक् खेदविशेषे ( मस, चु, प ) खेदः भीतिः। क—मासयति मस्तुः। मकारादृषधे।

५३। श्रु असिर स्राणे ( अस, दिवा, प ) य—अस्यति। क्त—असित्वा अस्त्वा। इर्—अस्मत् असासीत् अससीत्। अस्यान्नित्यं ङ इति दुर्गः। अस्य इत्र अस्मत्तादित्वोभावः। पो अस्तवदि- ति इत्यादुपः। [illegible]।

५२ । वसै औ निवासे (वस, भ्वा, प) ऐ—उष्यात् । औ—अवात्सीत् ।

५२ । वस ल ङ स्तृतौ ( वस, अदा, आ ) स्तृतिराच्छादनपूर्व्वकं धारणम् । ल, ङ—वस्ते वस्त्रं लोकः ।

**वेस्सृतौ श्वस् घलु प्राणे शस्लुर् स्वप्ने उशस् वधे ।**

५३ । वेस् ऋ सृतौ ( वेस, भ्वा, प ) ऋ—अविवेसत् । विवेसतुः । सृतौ गत्याम् ।

५४ । श्वस घलु प्राणे ( श्वस, अदा, प ) वकारयुक्तः । घ, लु—श्वसिति लोकः, जीवतीत्यर्थः । आश्वसेयुर्निशाचराः (१) इति भट्टौ ( १८ । २१ ) न विश्वसेत् पूर्व्वविरोधितस्येति पञ्चतन्त्रे, न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेदित्यादौ च गणकृतमनित्यमिति न्यायात् शपः स्थितौ सिद्धम् । अथवा भ्वादेराकृतिगणत्वात्तत्र दृश्यम् । वस्तुतस्तु पचादित्वादनि श्वसवाचरतीति क्वौ साध्यम् ।

५५ । शस लुर स्वप्ने ( शस, अदा, प ) लु—शस्ति । र—वैदिकः ।

५५ । उ शस वधे (शस, भ्वा, प) उ—शसित्वा शस्त्वा । शसति ।

**आङ्पूर्व्वास्तुशसिङ्शासुङ्शासुलङ्ङाशिषिस्मृताः ।**

५५ । आ+शसि ङाशिषि ( आ+शंस, भ्वा, आ )
५६ । आ+शासु ङाशिषि ( आ+शास, भ्वा, आ )
५६ । आ+शासु ल ङाशिषि ( आ+शास, अदा, आ )

---

(१) भट्टौ आश्वसुश्च निशाचरा इति पाठो दृश्यते । तत्र "आश्वसेयुरिति पाठान्तरम् । आश्वसा दृश्वाचरेयुरित्यर्थ" इति जयमङ्गला ।

आङ्पूर्व्वा इति केवलानामन्यपूर्व्वाणाञ्च प्रयोगनिषेधार्थम्। किन्तु "इदं गुरुभ्यः पूर्व्वेभ्यो नमोवाकं प्रशास्महे" इत्युत्तरचरिते तृतीयः प्रपूर्व्वोऽपि दृश्यते। इ—आशंसते। ङ—आशंसते। ङ—आशासते। उ—आशासित्वा आशास्त्वा। उदनुबन्धसामर्थ्यात् क्त्वाचो न यप्। समासाभावादिति गोविन्दभट्टः। किन्तु अस्योदनुबन्धफलं छन्दस्येवेति धातुप्रदीपः। ल, ङ—आशास्ते। शासङिङ्सूडे इत्यत्र जक्षादीयशास एव ग्रहणादस्योपधाया इकारो न स्यात्। आशीरिष्टार्थाशंसनम्। कीर्त्तिमाशंसते परामिति हलायुधः। २२। एते इच्छायामित्यन्ये।

शासु चलु शासने शनुसु हिंसास्तुत्यो र्ये ल्ट प्यासु।
मि निवासे प्सुस्य भत्ते पस् लुखोपि लृ स्नसु ङ।
भंशे ङ स्नसु प्रसादे ह्लस ह्लस रवे हसे।
हासे हिस् विकि हिंसे ते सान्ताःस्यु पञ्चपष्टिधा।

५६। शास् चूलृ शासने (शास, अदा, प) उ—शासित्वा शिष्ट्वा। च—शासति। लु—अशिषत्। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः।

५७। शनुसु हिंसास्तुत्योः (शनुस, भ्वा, प) तालव्यादिः। उ—शंसित्वा शस्त्वा। यः शंसति सतां दृप्तिमिति हलायुधः।२२। अनेकार्थत्वात् कथनेऽप्ययम्। यथा रघौ—शशंस वाचा पुनरुक्तयेवेति (२।६८) न मे ह्रिया शंसति किञ्चिदीप्सितमित्यादि च (३।५)।

५८। य ल्ट प्युस् मि निवासे (प्यास, दिवा, प) मूर्द्धन्यादि-

दन्त्यनकारयुक्तः। य—स्रस्यति। ऌ—अस्रसत्। उ—स्रसित्वा स्रस्त्वा। मि—स्रसयति स्रासयति।

५८। प्युस भक्ते (प्युस, दिश, प) मूर्द्धन्यादिर्दन्त्यनकार-युक्तः। य—प्युस्यति। पुप्योस।

६०। षस लुर स्वापे (षस, अदा, प) मूर्द्धन्यादिः। लु—सस्ति। र—वैदिकः। स्वापः शयनम्।

६१। ऌ स्रन्सु ङ भ्रंशे (स्रन्स, भ्वा, आ, द्युतादिः रेफ-युक्तदन्त्यादिः। ऌ—अस्रसत्। उ—स्रसित्वा स्रस्त्वा। ङ—स्रंसते। भ्रंशोऽधःपतनम्।

६१। ङ स्नन्सु प्रसादे (स्नन्स, भ्वा, आ) रेफयुक्तादिः। ङ—स्नंसते। उ—स्नंसित्वा स्नस्त्वा। प्रसादः प्रसन्नीभावः।

६२। क्लस रवे } (क्लस, भ्वा, प)

६३। ह्लस रवे } (ह्लस, भ्वा, प) द्वौ क्रमाद्रेफान्तःस्था-न्तृतीययुक्तौ। क्लसति। ह्लसति। रवः शब्दः।

६४। हसे हासे (हस, भ्वा, प) ए—अहसीत्। (एदित्त्वात् हसादेः सेम इत्यादिना न वृद्धिः) हासोऽपूर्वप्रीत्या कपोलस्य विकसितीकरणम्। तत्रैवाकर्म्मकः। हसति शनैः मुग्धकृदितमुखीति गोवर्द्धनः। यदा तु कस्यचिद्दोपादिक-मुद्दिश्य तत्स्यात्तदा सकर्म्मकः। हसन्तमन्तर्वलमर्व्वता रवेरिति श्रीहर्षः। हसन्ति माधवश्चौरम्।

६५। हिस धिकि हिंसे (हिन्स, रुधा, चु, भ्वा, प) ध—हिनस्ति। इ—हिंस्यते। कि—हिंसयति हिंसति। इन्यर्थेनैव पाक्षिक चुरादित्वे सिद्धे ञिकारणं भ्वादित्वार्थम्।

ते सान्ताःस्युः पञ्चषष्टिधा। (पञ्चषष्टिप्रकाराः)।

## ह्रान्तवर्गः।

**अंहिक् भासेऽंहिङ् गतेऽर्ह योग्यत्वेऽर्हक् च पूजने।**

१। अहि क भासे (अनृह, चु, प) इ, क—अंहयति। भासो दीप्तिः।

१। अहिङ गते (अनह, भ्वा, आ) इ—अंह्यते। ङ—अंहते।

२। अर्ह योग्यत्वे (अर्ह, भ्वा, प) अर्हति विप्रो वेदं पठितुम्। सकर्म्मकोऽपि। यज्ञदानतपास्यस्य कला नार्हन्ति षोडशीमिति।

२। अर्ह क च पूजने (अर्ह, चु, प) क—अर्हयति। चकारादर्हं च।

**ईह ङ् चेष्टे उहिर् त्वर्हे ऊहङ् तर्के ग्रह ग्लह। क्यादाने ग ग्रह ञ च गर्ह गल्ह ङ कुत्सने।**

३। ईह ङ चेष्टे (ईह, भ्वा, आ) दीर्घादिः। ङ—ईहते। येहिष्ट तं कारयितुं कृतात्मेति भट्टिः। १। ११। सकर्म्मकोऽपि। सर्व्वः स्वार्थं समीहते इति माघः। २। ६५। भामं भ्रमादपि नेहते इति जयदेवः।

४। उहिर् त्वर्हे (उह, भ्वा, प) ह्रस्वादिः। इर्—औहत् औहीत्। अर्द इह वधः।

५। ऊह ङ तर्के (ऊह, भ्वा, आ) दीर्घादिः। सन्देहाद्विचारस्तर्कः। ङ—ऊहते तर्कं धीरः। यथः समूहन्निव दिग्विकीर्णमिति गेर्व्वोस्योहो ढेचेति परस्मैपदविधानात् शत्रन्तम्। अनुक्तमप्यूहति पण्डितो जन इति गणकृतानित्यत्वात्, पचादित्वादनि ऊह इवाचरतीति क्वौवा साध्यम्।

६ । ग्रह कि आदाने } ( ग्रह, चु, भ्वा, प )
७ । ग्लह कि आदाने } ( ग्लह, चु, भ्वा, प ) द्वौ क्रमाद्रेफान्तःस्यात्तृतीययुक्तौ । ञ—अग्रहीत् अग्राहीत् ; अग्लहीत् अग्लाहीत् । कि—ग्राहयति ग्रहति ; ग्लाहयति ग्लहति । आद्यः कैश्चिन्न मन्यते, शेषोऽपि भ्वादिरात्मनेपद्येव मन्यते ।

६ क । ग ग्रह ञ च ( ग्रह, क्र्या, उ ) ग, ञ—गृह्णाति गृह्णते । चकारादादाने ।

८ । गर्ह ङ कुत्सने } ( गर्ह, भ्वा, आ )
९ । गल्ह ङ कुत्सने } ( गल्ह, भ्वा आ ) द्वौ क्रमाद्रेफान्तःस्यात्तृतीययुक्तौ । ङ—गर्हते, गल्हते । कुत्सनं निन्दा ।

## कि गर्ह च ङ गाह्ह विलोडे गुह्ह ञ संवृतौ ।

८ क । कि गर्ह च ( गर्ह, चु, भ्वा, प ) रेफोपधः । कि—गर्हयति गर्हति । चकारात्कुत्सने ।

१० । ङ गाह्ह विलोडे ( गाह, भ्वा, आ ) ङ—गाहन्तां महिषानिपानसलिलमिति शाकुन्तले । ञ—अगाहिष्ट अगाढ़ ।

११ । गुह्ह ञ संवृतौ ( गुह, भ्वा, उ ) पञ्चमस्वरी । ञ—अगूहीत् अघुक्षत् । ञ—गूहति गूहते । गुहोगोहरिति दीर्घः ।

## चहकम चह शाठ्ये ङ जेह्ह यत्नेऽथ णह्य औ ।
## बन्धे टह ध टनृह्रश हिंसे तुह् दुहिरर्द्दने ।

१२ । चह कम शाठ्ये } ( चह, चु, प )
१२ । चह शाठ्ये } ( चह, भ्वा, प ) क—चहयति । चहति खलः, साधुं प्रतारयतीत्यर्थः ।

१३ । ञ जेह यत्ने ( जेह, भ्वा, आ ) ञ—जेहते, जिजेहे । घङ—अजिजेहत् ।

१४ । अथ णह्य औ बन्धे ( णह, दिवा, उ ) य, अ—नह्यति नह्यते । औ—अनात्सीत् अनद्ध ।

१५ । तृह घू हिंसे } ( तृह, रुधा, प )
१६ । तृन्ह ग हिंसे } ( तृन्ह, तुदा, प ) द्वौ सप्तमस्वरिणौ । ध—तृणेढि । ञ—अतर्हीत् अतृहत् । ञ—अतृंहीत् अतृक्षत् । ग—तृंहति ।

१७ । तुहिर् अर्द्दने } ( तुह, भ्वा, प )
१८ । दुहिर् अर्द्दने } ( दुह, भ्वा, प ) इर्—अतुहत् अतोहीत् । तोहति । इर्—अदुहत् अदोहीत् । दोहति । अर्द्दनमिह वधः ।

**दुह ल्औ दुहि ल्ट द्रुह्य जिघांसे दिह्ल औ लिपि ।**

१८ । दुह ल औ दुहि ( दुह, अदा, उ ) धुक् दोहनम्, तच्च व्यक्तीकरणमिति धातुपारायणिकाः । ल, अ—दोग्धि दुग्धे गां दुग्धं गोपः । औ—अधुक्षत् । स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति किराते ( १ । १८ ) वसूनीति कर्म्मणो विद्यमानतया कर्म्मकर्त्तृत्वाभावात् स्खलितमित्येके । दुहादेरप्रधानकर्म्मविषये कर्म्मकर्त्तृत्वे प्रधानकर्म्मप्रयोगो दुर्निवार इति कुलचन्द्रः । स्वमते तु अतएवानयोर्ढेऽपि ढषत्वमिति, पचदुहोः कर्म्मणि विद्यमानेऽपि कर्म्मकर्त्तृत्वमित्यर्थः ।

१९ । ल्ट द्रुह्य जिघांसे ( द्रुह, दिवा, प ) जिघांस इह अनिष्टाचरणमिति विद्यानिवासः । ल्ट—अद्रुहत् । य—द्रुह्यति खलः साधवे । ञ—द्रोहिष्यति ध्रोक्ष्यति ।

२० । दिह च ओ लिपि ( दिह, भ्वा, उ ) दिह उपचये इति माधः । उपचयो वृद्धिसात्करणञ्च । ल, अ—देग्धि दिग्धे देहः, प्रतिदिनमुपचितः स्यादित्यर्थः । देग्धि सौधं सुधया लेपकः उपचितं करोतीत्यर्थः । औ—अधिक्षत् ।

**दहौ दाहे दहिक् दीप्तौ दाहे द्राह्ङ जागरे ।**
**निक्षेपे दृहि दृह् दृह्यौ स्निहङ् गत्यां वर्हवल्ह ङ ।**
**स्तुतिहिंसादानवाक्षु मह पूजे महिक् त्विषि ।**

२१ । दहौ दाहे ( दह, भ्वा, प ) औ—अधाक्षीत् । दाहो भस्मीकरणम् । दहत्यग्निः काष्ठम् ।

२१ । दहिक दीप्तौ दाहे (दन्ह, चु, प) इ, क—दंहयति ।

२२ । द्राह्ङ जागरे निक्षेपे ( द्राह, भ्वा, आ ) ऋ—अदद्राहत् । ङ—द्राहते । ( द्राहते च निद्राक्षये इति हलायुधः । १०८ । जागर्त्तीत्यर्थः ) ।

२३ । दृहि दृह्यौ } ( दृन्ह, भ्वा, प )
२३ । दृह दृह्यौ } ( दृह, भ्वा, प ) द्वौ सप्तमस्वरिणौ । इ—दृंह्यते । दृंहति । दर्हति ।

२४ । स्निह ङ गत्याम् ( स्निह, भ्वा, आ ) अन्तःस्यात्तृतीययुक्तः । ङ—स्नेहते ।

२५ । वर्ह ङ स्तुतिहिंसादानवाक्षु } ( वर्ह, भ्वा, आ )
२६ । वल्ह ङ स्तुतिहिंसादानवाक्षु } ( वल्ह, भ्वा, आ )
ङ—वर्हते, वल्हते । ( स्तुतिराच्छादनं, वाक् कथनम् ) ।

२७ । मह पूजे ( मह, भ्वा, प ) महति । ( नित्यं मंहति माहेयीमिति हलायुधः ) । ३४ ।

२७। मश्हिक् लिपि (मनुह, चु, प) इ, क—मंहयति । लिपि दीप्तौ ।

## मश्हिङ् वृद्धौ तु मुह्यू ल्ट ञि वैचित्त्ये मिहौ सिचि ।

२७। मश्हिङ् वृद्धौ तु (मनुह, भ्वा, चा) इ—मंह्नते । ङ—मंहते ।

२८। मुह्यू ल्ट ञि वैचित्त्ये (मुह, दिवा, प) वैचित्त्य ज्ञानरहितीभावः । य—तेन मुह्याति चिराय मे मन इति मुरारिः । ऊ—मोहिष्यति मोक्ष्यति । ल्ट—अमुहत् । ञि—मुग्धः मूढ़ोऽस्ति ।

२९। मिहौ सिचि (मिह, भ्वा, प) औ—अमिचत् । मेहति । (सिक् क्षरणम्)।

## माहृञ् माने रिह् वधे ञि ज् रुहौ जन्यां रह त्यजि ।

३०। माहृञ माने (माह, भ्वा, उ) ऋ—अममाहत् । ऋदनुबन्धस्थाने पठखरानुबन्ध इत्येके । ञ—माहति माहते ।

३१। रिह वधे (रिह, भ्वा, प) रेहति ।

३२। ञि ज रुहौ जन्याम् (रुह, भ्वा, प) ञि—रुढ़ोऽस्ति । ज—रोहः रुहः। जनिर्जन्म। रोहति जन्तुः जायते इत्यर्थः । रुह जन्मप्रादुर्भावे इति प्राञ्चः । जन्मप्रादुर्भावयोरेकोऽर्थ इति गोविन्दभट्टचतुर्भुजमिश्रौ । रमानाथस्तु जन्म असदुत्पत्तिः, प्रादुर्भावः स्फूर्त्तिरितिभेदमाह ।

३३। रह त्यजि (रह, भ्वा, प) त्यजि वर्ज्जने । रहति सुखं दीनः ।

रहि गत्यां लुहौ गार्ध्ये ल् लिहौञ् स्वादे क् वर्हं वधे।
दीप्तौ वर्हं वल्हङ् श्रैष्ठ्ये वल्हक् त्विषि हहि क्वपि।

३३। रहि गत्याम् (रन्ह, भ्वा, प) ङ्—रंह्यते। रंहति।

३४। लुहौ गार्ध्ये (लुह, भ्वा, प) औ—अलुहत्। गार्ध्यं लब्धुमिच्छा। लोहति धनं लोकः।

३५। ल लिहौ ञ स्वादे (लिह, अदा, उ) ल, ञ—लेढ़ि पुष्पाणि षट्पदः लीढ़े। औ—अलिक्षत्।

३६। क वर्हं वधे दीप्तौ (वर्ह, चु, प) रेफोपधः। क—वर्हति।

३६। वर्हं ङ श्रैष्ठ्ये ⎫ (वर्ह, भ्वा, आ)
३७। वल्ह ङ श्रैष्ठ्ये ⎭ (वल्ह, भ्वा, आ) द्वौ क्रमाद्रेफान्तःस्थातृतीयोपधौ। ङ—वर्हते, वल्हते धनी श्रेष्ठः स्यादित्यर्थः। (निवर्हयति मुझारीन् तपसा यो निवर्हते इत्युभयत्र हलायुधः। २५२)।

३७। वल्ह क त्विषि (वल्ह, चु, प) अन्तःस्थातृतीयोपधः। क—वल्हयति। त्विषि दीप्तौ।

३८। हहि क्वपि (हन्ह, चु, भ्वा, प) एतदाद्याः पञ्च सप्तमस्वरिणः। ङ्—हंह्यते। कि—हंहयति, हंहति। अपिशब्दात् त्विषि।

हहिर्ध्वनद्ध्योर्वृहि च हह् हद्धौ भ्रू हऊद्यमे।
वेह वाह्रङ यत्नेऽथ वहिङ् हद्धौ वकिक् त्विषि।

३८। हहिर्ध्वनद्धोंः (हह, भ्वा, प) इर्—अहहत् अबंहीत्। ध्वनः शब्दः। ऋद्धिर्वृद्धिः।

३८। बृहि च (बृनृह, भ्वा, प) इ—बृंह्यते। बबृंहिरे गजपतय इति माघे आत्मनेपदप्रयोगः प्रामादिक इति वल्लभः। चकारात् ध्वनद्ध्योः। ध्वनश्चेह हस्तिकर्तृकः, बृंहितं करिगर्ज्जितमित्यमरात्। बृंहितं करिगर्ज्जायां शब्दमालेऽपि कथ्यत इति शब्दमहार्णवात् कदाचिदन्यकर्तृकोऽपि, तेन श्रीहर्षचरिते सिंहबृंहितमिति बाणभट्टप्रयोगः।

३८। बृह बृद्धौ (बृह, भ्वा, प) बर्हति। बृहिर्ध्वनद्ध्योरित्यनेनैवेष्टसिद्धावस्य पाठो बृद्धौ (अर्थे) इरनुबन्धवर्ज्जनार्थः। किन्त्वनेनैवेष्टसिद्धौ तत्र बृद्धिग्रहणं परत्रानुवृत्त्यर्थमेव। अयं धातुः कैश्चिन्न मन्यते।

३८। बृहू उद्यमे (बृह, तुदा, प) श—बृहति। ञ—अबर्हीत् अबृक्षत्।

३९। वेहृङ यत्ने } (वेह, भ्वा, आ)
४०। वाहृङ यत्ने } (वाह, भ्वा, आ) ञ—अविवेहत्, अववाहत्। ङ—वेहते, विवेहे, वाहते ववाहे।

४१। अथ वहि ङ वृद्धौ (वनृह, भ्वा, आ) इ—वंह्यते। ङ—वंहते।

४१। वहि क त्विषि (वनृह, चु, प) इ, क—वंहयति। त्विषि दीप्तौ।

वहे औ प्रापणे ण्याहू ल्ट उद्गारे ण्णिहू य् ल्ट ञि।
प्रीतौ ण्णिहक् स्नेहने मह्य कि शक्तौ मह जङ च।

४१। वहे औ प्रापणे (वह, भ्वा, उ) प्रापणमिह ज्ञान्तस्य रूपम्। ऐ—उह्यात्। ञ—वहति वहते भारं ग्रामं जनः, प्रापय-

गौत्यर्थः। औ—अवाधीत्। अर्थान्तरेऽकर्म्मकोऽयम्। जम्बू-दरिद्वहति सीमनि वस्तुकल्टीति नैषधम्। मन्दं मदद्वहति गर्ज्जति वारिवाह इति मधानाटकम्।, वधाह रक्तं मुरुपास्तो जाताः इत्यत्र इत्यादिषिद्ध्यर्थमोद्यादिकस्य वहधातुं मन्येते वधोदेग्रनाधरणादेवो। वस्तुतस्तु वङ्कवाद्यसम्मतत्वादोद्यादिरनेनोपेक्षितः। वधाह इत्यादिप्रयोगस्य बाह्लड यत्ने इत्यस्यात्मनेपदता-नित्यत्वात् परस्मैपदे सिद्धिः, अनेकार्थत्वात् सुखायेत्यर्थः। अथवा वध इत्याह इत्येव व्याख्यानम्।

४२। ष्णुह्णृ ऌ उद्गारे (ष्णुह, दिवा, प) मूर्द्धन्यादिरयम्। एतदाद्यास्त्रयोदन्त्यमकारयुक्ताद्याः। उद्गारोवान्तिः। य—स्नुह्यत्यन्नं लोकः। ऊ—स्नोहिष्यति स्नोक्ष्यति। ऌ—अस्नुहत्।

४३। ष्णिह् यञ्जि प्रीतौ (ष्णिह, दिवा, प) ऊ—स्नेहिष्यति स्नेक्ष्यति। य—स्निह्यति बन्धुः। ऌ—अस्निहत्। ञि—स्निग्धः स्नीढोऽस्ति।

४३। ष्णिह क स्नेहने (ष्णिह, चु, प) स्नेहनं स्निग्धीभावः। क—स्नेहयति वर्त्तिका तैलेन।

४४। षह्य कि शक्तौ (षह, दिवा, चु, भ्वा, प) शक्तिरिह दैवादिकशकधातोरूपम्, तेन क्षमेत्यर्थः। य—सह्यति दुःखं लोकः सहत इत्यर्थः। कि—साहयति सहति। स एवायं नागः सहति कलभेभ्यः परिभवमिति।

४४। षह ञ ङ च (षह, भ्वा, आ) चकारात् शक्तौ। इहापि शक्ति क्षमा। ञ—साढः सहः। ङ—अन्यायं सहते नासाविति हलायुधः। (साहयत्याहवे वीर्मं सहति द्रविणाश्रयम्। अन्यायं सहते नासौ सह्यति क्षितिरक्षणे इति सर्व्वत्र हलायुधः। ३१)।

लृ पुह्य तृपि च तृंह तृह स्तृह स्तृंह्य वधे ।
लृ स्नुह्ङ उ तु विश्वासे हकारान्ताः शताङ्किकाः ।

४५ । लृ पुह्य तृपि च ( पुह, दिवा, प ) पञ्चमस्वरी । चकात् शक्तौ । गृध्यपि शक्ति चमा । लृ—अपुहत् । य—पुह्यति दुःखं लोकः, सहते इत्यर्थः । मुपोह ।

४६ । तृंह्य श वधे ( तृंह, तुदा, प )
४७ । तृह्य श वधे ( तृह, तुदा, प )
४८ । स्तृह्य श वधे ( स्तृह, तुदा, प )
४९ । स्तृंह्य श वधे ( स्तृंह, तुदा, प ) द्वावाद्यौ मूर्द्धन्यादी, शेषौ द्वौ दन्त्यादी, चत्वारस्तमध्याः, आद्यतृतीयावष्टमस्वरिणौ, अन्यौ सप्तमस्वरिणौ । अ—अतृंहीत् अतृहत्, अतर्हीत् अतृहत् । श—तृंहन्ती तृंहती । तृंहति । एवमन्ययोश्च । तितृंहयिषति तितर्हयिषति । तिस्तृंहयिषति तिस्तर्हयिषति ।

५० । लृ स्नुह्ङ उ तु विश्वासे (स्नुह, भ्वा, आ) रेफयुक्तादि । विश्वासः अहङ्कारहितीभावः । लृ—अस्नुहत् । उ—स्नुंहित्वा स्नाढ्वा, ढ्रोढ्रिभ्यश्चेति दीर्घः । ङ—स्नुहते पुत्रो मातरि । धातुरयं कैश्चिन्न मन्यते ।

हकारान्ताः शताङ्किकाः । ( शतस्याङ्कं परिमाणं येषां ते, पञ्चाशदित्यर्थः ) ।

---

## अथ सौत्राः ।

कर्क हासे चकि भ्रान्तौ मर्क सर्पे तु सिक् सिचि ।

(१) कर्क हासे (कर्क) पृथक् पाठस्त्वेषां नियतप्रयोगाभावात् ।

कर्कयः, कर्कट इत्यादयः शब्दा यथेष्टमुणादिमत्ययाद्यैर्व्युत्पादनीयाः। (२) चकि भ्रान्तौ (चनुक) इ—चङ्करः। (चङ्करो रथरथ्ययोरिति मेदिनी) (३) मर्क सर्पे (मर्क) मर्कटः। (४) शिक शिचि (शिक) दन्त्यादिः। सिकता।

## मर्च ग्राहे कजि कहे पजि रोधे मजि ध्वनौ।

(५) मर्च ग्राहे (मर्च) तालव्यवर्गप्रथमान्ताः। मर्कः। (६) कजि कहे (कनुज) इ—कञ्जरः (ब्रह्मा)। कहो जन्म, रुहोः कभाव इति भावे कः। (७) पजि रोधे (पनुज) इ—पञ्जरम्। (८) मजिध्वनौ (मनुज) इ—मञ्जरी, मञ्जुलम्, मञ्जुषा, मञ्जिः।

## मट सादे वटि स्तेये कुठ छिद्याड संहृतौ।

(९) मट सादे (मट) मटचः। (१०) वटि स्तेये (वण्ट) इ—वण्टकः। (११) कुठ छिदि (कुठ) कुठारः, कुठेरः, कुठाकुः। (१२) उड संहृतौ (उड) उडुपः।

## वड आरोहणे कुत्त्वास्तृतौ पुत्त गतौ लत।
## घाते सात्क सुखे उद्र आघाते चट् संहृतौ।

(१३) वड आरोहणे (वड) वडभी, वडिशम्। (१४) कुत्तु आस्तृतौ (कुत, तु—पादपूरणे) कुतपः। (१५) पुत्त गतौ (पुत्त) पुत्तिका। (१६) लत घाते (लत) लता। (१७) सात्क सुखे (सात) दन्त्यादि। क—सातकः। (साति साति चेतीति ग्रः)। (१८) उद्र आघाते (उद, क्रमा) पञ्चमस्वरादिः। उदचः। (१९) चट संहृतौ (चट) चत्ता।

## उपसंहारः ।

अथ ग्रन्थकृदिति धात्वन्निर्घोष्यं उपसंहरति, शिष्यपरम्पराभि नीमोत्कीर्त्तनाद्यशो वर्द्धनार्थं स्वनाम च निर्द्दिशति ।

इति स्फीतः सप्तदशशत्या षट्कोनषष्टया ।
धातुस्कन्धैर्बुधा सेव्य कविकल्पद्रुमः फलन् ।
विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन वोपदेवद्विजेन यः ।

हे बुधा य एष कविकल्पद्रुमो वोपदेवद्विजेन तेने॰कृत स सेव्यो युष्माभिरिति शेष इति श्लोकद्वयेनान्वय । ( कथम्भूत )

स्फीतो महान्। कल्पद्रुमसाधर्म्यमाह। सप्तदशशत्या षट्कोनषष्ट्या धातुस्कन्धैः फलन्—सप्तदशानां शतानां समाहारः सप्तदशशती तया, षणां समूहः षट्कं षट्केन ऊना षट्कोना सा चासौ षष्टिश्चेति षट्कोनषष्टिः षट्कोनषष्ट्या युता सप्तदशशती षट्कोनषष्ट्या, दशादेर्डो युते शतादाविति ड प्रत्यये स्त्रियामत आप् तया। धातवश्च ते स्कन्धाश्चेति धातुस्कन्धाः तैः, फलन् प्रतिधातुस्कन्धेन प्रत्ययभेदेन नानाप्रयोगरूपाणि फलानि यथेष्टमर्पयन्नित्यर्थः। गुरोः पितुश्च प्रतिष्ठार्थं तन्नामनी ख्यापयति विट्ठलेनेत्यादि। वेदाना पदे व्यवसाये तिष्ठतीति वेदपदस्थः तेन। वोपदेव इति। उः शिवः अकारो विष्णुः, उश्च अश्च वौ, वयोरुप समीपे दीव्यतीति पचादित्वादनि वोपदेवः। तथा च उ सम्बुद्धौ रुषोक्तौ च शिव वाचीत्यनव्ययम्। अ स्यादभावे स्वल्पार्थे विष्णावेव त्वनव्ययम्। उप हीनेऽधिके मोक्षमासन्नेऽप्युप कीर्त्तितमिति विश्वप्रकाशः।

कश्चित्तच्छिष्यस्तत्कीर्त्तिं वर्द्धयन्नाह।

स्वर्गे गीर्वाणनार्य्यः सुरपतिमभितः शाब्दिकानां वरेण्यं
पाताले नागराजं भुजगयुवतयो यस्य गायन्ति कीर्त्तिम्॥
यस्तीर्णः शब्दपाथोनिधिमखिलमिमं गोष्पदं वा सुराद्रौ
शिष्योऽकार्षीद्धनेशः कविकुलतिलकः केशविर्वोपदेवः॥

इत्याचार्य्यचक्रचूडामणिश्रीवोपदेवविरचितः
कविकल्पद्रुमोनाम धातुपाठः समाप्तः।

---

स्वर्गे गीर्वाणनार्य्यः शाब्दिकानां वरेण्यं सुरपतिं अभितः सुरपतेः समीपे यस्य कीर्त्तिं गायन्ति, पाताले भुजगयुवतयः

शाब्दिकानां वरेण्यं नागराजं अभितो यस्य कीर्त्ति ˊ ...न्त, यश्च अखिलं समस्तं इन्द्रचन्द्रादिप्रणीतं शब्दपाथोनिधिं गोष्पदं वा गोष्पदमिव तीर्णः ततार, स वोपदेवः सुराद्रौ सुमेरुपर्व्वते (१) इमं ग्रन्थमकार्षीदित्यर्थः। सिद्धत्वात् सुमेरुगतिः सम्भवतीति।

गाङ्गोलीयजसर्व्वदेयविदितश्रीसार्व्वभौमात्मजो
दुर्गादास इमाश्चकार विषमां टीकां सुबोधावधि।
टीकेयं विमलात्मना प्रतिपदं सम्पादयन्ती मुदं
शिष्याणां विदधातु धातुगहने शार्दूलविक्रीडितम्॥

सर्व्वस्वं मौग्धबोधानामन्येषां हेमराशिवत्।
कविकल्पद्रुमस्याग्रे दीयते धातुदीपिका॥

इति वासुदेवसार्व्वभौमभट्टाचार्य्यात्मजश्रीदुर्गादासविद्यावागीश-
विरचिता धातुदीपिका नाम कविकल्पद्रुमटीका समाप्ता।

समाप्तोऽयं ग्रन्थः।

शिवमस्तु।



(१) अत्र सुराद्रिशब्दो देवगिरिपर्य्यायत्वेन प्रयुक्तो न तु सुमेरुवाचकत्वेन। देवगिरिश्च दाक्षिणात्यप्रदेशान्तर्गतप्राचीनराजधानीविशेषः (दौलताबाद इति भाषा) तत्र देववंशीयनृपतीनामन्यतमस्य महादेवस्य समस्तकरणाधीश्वरेण हेमाद्रिणा ज्ञातसख्यो वोपदेवस्तस्मिन् देवगिरौ वसन्निमं ग्रन्थमकार्षीदिति केचित्।

# श्रीगोगानवमी—गोगामेड़ी-दर्शन

## [ भाद्रपद कृष्ण नवमी ]

( श्रीताराचन्द्रजी ओझा 'विकट', साहित्यभूषेन्द्र )

भाद्रपद श्रीकृष्णाष्टमीके दूसरे दिनकी पुण्यतिथि नवमी ही 'श्रीगोगानवमी' नामसे प्रसिद्ध है। इसी तिथिको श्रीजाहरवीर गोगाजीका जन्मोत्सव श्रद्धालु भक्तोंद्वारा अपार भक्ति-भावसे मनाया जाता है। इस अवसरपर बाबा जाहरवीर गोगाजीके भक्तगण अपने घरोंमें निज इष्टदेवकी थाड़ी (थान-वेदी) बनाकर अखण्डज्योति-जागरण करते हैं तथा परम्परागत अपने पुरोहित नाथ-योगियोंद्वारा डौंरू-सारंगीकी ध्वनिके साथ जाहरवीरकी शौर्य-गाथा एवं जन्म-कथा श्रवण करते हैं। इस प्रथाको जाहरवीरका जोत-कथा-जागरण कहा जाता है। प्रान्तीय मान्यताओंके अनुसार श्रीगोगाजी महाराजको जाहरवीर, गोगावीर, गुगलवीर, गोगामर्भी एवं जाहरजहरी नामसे भी पुकारा जाता है।

आपकी जन्मस्थली, राजस्थानके 'चूरू' जनपदमें 'ददरेवा' नामसे तथा पूजास्थली समाधि-मन्दिर 'गोगामेड़ी' नामसे प्रसिद्ध है। जो तहसील भादरा, जनपद गङ्गानगरके सन्निकट स्थित है।

बाबा श्रीकी पूजा-सामग्रीमें लौंग, जायफल, कपूर, गुगुल और गो-घृत विशेषरूपसे प्रचलित हैं। चूँकि श्रीगोगाजीका शुभ वाहन नीलवर्णका घोड़ा रहा है। सम्भवतः इसी कारण बाबाके नीलाश्वको प्रसन्न करनेकी कामनासे उनकी भोग-प्रसादमें हरी दूब एवं चनेकी दाल समर्पित की जाती हैं और चन्दन-चूरा बाबाकी समाधिपर मला जाता है।

श्रीगोगाजीके प्रादुर्भावकी कथा नाथ-सम्प्रदायके योगपन्थसे मिली हुई है। योगी गोरक्षनाथने ही आपकी माता बाछलको उनकी पूजा-अर्चना-तपस्यासे प्रसन्न होकर प्रसादरूपमें अभिमन्त्रित गुगुल प्रदान किया था। जिसके प्रभावसे पाँच बन्ध्या माताओंने पाँच पुत्रों (वीरों)-को जन्म दिया था। क्रमशः महारानी बाछलसे जाहरवीर गोगाजी, पुरोहितानीसे नरसिंह पाण्डे, दासीसे भज्जूवीर, महतरानीसे रत्नावीर तथा बन्ध्या घोड़ीसे नीलाश्ववीरका प्रादुर्भाव हुआ। ये पाँचों वीर अपूर्व चमत्कारी तथा असाधारण व्यक्तित्वधारी थे। इन वीरोंका सनातनधर्म एवं गोरक्षार्थ यवन राजाओंसे संग्राम हुआ। जिसमें श्रीगोगाजी एवं नीलाश्वको छोड़कर रत्ना एवं भज्जूवीर वीरगतिको प्राप्त हुए। अन्तमें गुरु गोरक्षनाथके योग, मन्त्र, प्रभाव एवं प्रेरणासे प्रेरित होकर श्रीजाहरवीर गोगाजीने नीले घोड़ेसहित धरतीमें जीवित समाधि लेकर अमर बलिदानकी धर्मध्वजा फहरायी।

समाधिके पश्चात् वीर गोगाजीने प्रकट होकर कितनी ही बार भक्तोंकी मनोकामनाएँ पूर्ण की हैं और आज भी भक्तोंकी मान्यताओं एवं विश्वासके अनुसार वे प्रत्यक्ष-अप्रत्यक्षरूपसे भक्तोंका मार्गदर्शन करते हैं और उनके विश्वासको जगाते हैं। इसी कारण गोगाजीको प्रकटवीर (जाहरवीर) कहा जाता है।

### बागड़-दर्शन एवं यात्रा

भाद्रपद कृष्ण पञ्चमीको भारतके अनेक प्रान्तोंमें भक्तगण अपने गाँव, नगर एवं शहरोंमें अपने-अपने कुलगुरु (नाथयोगियों)-द्वारा पथवारी माताका विधिवत् पूजन कराकर सपरिवार पीले वस्त्र धारण करके नगर-परिक्रमा करते हुए बागड़-दर्शनहेतु प्रस्थान करते हैं।

प्रातः गोगानवमीके दिन गोरखटीलेके समक्ष करीब डेढ़ कि०मी० की दूरीपर स्थित समाधि-मन्दिर गोगामेड़ीके लिये प्रस्थान किया जाता है। इस प्राचीन मन्दिरके अंदर वीर गोगाजीकी अमर समाधि है। इस समाधिपर भक्तगण अटूट श्रद्धाभावसे परिक्रमा करते हुए अपने दोनों हाथोंमें चन्दन-चूरेका मर्दन करते हैं।

यह तो रहा राजस्थानका बागड़-दर्शन-मेला। इसके इतर हरियाणा, पंजाब, हिमाचल प्रदेश, मध्य प्रदेश एवं उत्तर प्रदेश आदि प्रान्तोंमें भी श्रीगोगाजीके मेलोंका क्रम बना ही रहता है। यथा—जनपद सहारनपुरमें गुगालवीरका मेला, जागलमें गोगावीरका मेला, बिजनौरके चौंदपुर-दारानगर गंजमें छड़ियोंका मेला। नैनीताल रामनगरमें जहानाबादका जाहरवीरकी छड़ियोंका मेला। इसी प्रकार मथुरा, आगरा, झाँसी, फर्रुखाबाद, भैलेपुर, एटा 'रघुनाथपुर गढ़ी' पर जाहरवीर गोगा दिवानका मेला भी प्रचलित है।

यात्राके पश्चात् यात्रीगणोंका निज-निज नगरोंमें आगमन होता है। पुनः पथवारी-पूजनके पश्चात् वे गृहप्रवेश करते हैं तथा गीत-मङ्गलादि और माताके छन्दोंसे गायन-वादन होता है। पास-पड़ोस एवं गृह-कुटुम्बियोंमें प्रसादवितरण कर एक-दूसरेके गले मिलते हैं और अपने आपको कृतकृत्य एवं धन्य समझते हैं।